Vol. LVI May to July
No. 1-3 1973
५६तम-वर्षस्य वैशाख-ज्यैष्ठाषाढ़ेषु
१८९५ शाकीयेषु

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

# संस्कृत साहित्य परिषत्

[Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta]

महामहोपाध्याय

## कालीपदतर्काचार्य्यस्मृतिः

सम्पादकः

अध्यापक-श्रीरामधनशास्त्री

सह-सम्पादकौ

अध्यापकः श्रीदीननाथ त्रिपाठी नवतीर्थः
अध्यापकः श्रीरवीन्द्रकुमार सिद्धान्तशास्त्री पञ्चतीर्थः
एम. ए., पि. आर. एस. च

संस्कृत-साहित्य-परिषत्
१७।१ राजा दिनेन्द्र ष्ट्रीट
कलिकाता-४

त्रैमासिकमूल्यम्—रूप्यकत्रयम्

# SANAD

Pandit Kalipada Tarkacharyya,

Lecturer in Nyaya, Tol Department, Sanskrit College,
Calcutta, Bengal.

I hereby confer upon you the title of Mahamahopadhyaya as a personal distinction.

New Delhi.

The 1st January 1941

Viceroy of India

# Certificate of Honour in Sanskrit



Sri Kalipada Tarkacharya

*Shri Kalipada Tarkacharya, Senior Professor in the Research Department, Sanskrit College, Calcutta, is a renowned Sanskrit Scholar. In his scholastic career, he distinguished himself in the studies of KAVYA, VYAKARAN, NYAYA and SANKHYA. He has been the President of the Howrah Sanskrit Samaj and Professor of the Sanskrit Sahitya Parishad He is also now the Editor of "Sanskrit Sahitya Parishad Patrika" and "Sanskrit Padya Bani Patrika." Shri Tarkacharya has published a number of Mahakavyas, Khandakavyas, Dramas, Essays and Tikas. He was awarded the title of MAHAMAHOPADHYAYA in 1941.*



सत्यमेव जयते

मैं, भारत का राष्ट्रपति

## राजेन्द्र प्रसाद

कालीपद तर्काचार्य्य

को

संस्कृत में पाण्डित्य तथा

शास्त्रनिष्ठा के लिए

यह प्रमाण-पत्र प्रदान करता हूं।

राजेन्द्र प्रसाद

राष्ट्रपति

नई दिल्ली,

दिनांक २७ अप्रैल, १९६१

७ वैशाख, १८८३

Vol. LVI No. 1-3 | १८९५ शकीयेषु वैशाखज्यैष्ठाषढ़ेषु १३८० वङ्गाब्दीयेषु ५६ तम-वर्षस्य १म—३य-संख्याः | May to July 1973

महामहोपाध्याय—

# कालीपदतर्काचार्य्यस्मृतिः

## —निदारुणः शोकसंवादः—

भो भोः पाठक-महाभागा भारतवासिनस्तथा देशान्तरस्थाः! विज्ञाप्यन्ते भवन्तो यत् संस्कृतवाङ्मूर्तयो महाकवयो नैयायिक-चूड़ामणयः सर्वशास्त्रपारङ्गमा भारतललामभूता महात्मानः संस्कृत-साहित्य-परिषत्-सभापतय-

स्तथा

संस्कृत-साहित्य-परिषत्-पत्रिका-सम्पादका

**महामहोपाध्याय-डक्टर-कालीपद-तर्काचार्य-**

महोदया एकोनाशीत्यधिक-त्रयोदशशततम-बङ्गाब्दीय-सौर-श्रावणस्यैकादशदिवसे गुरुवासरे नक्तं सार्धाष्टमहोरायां सर्वानस्मान् शोकार्णवे निमज्ज्य सज्ञानं परलोकं प्रस्थिता इति। एतेषां तिरोधानेन भारतवर्षं विशेषतो निखिलबङ्गदेशश्च अस्तमितभास्करो घनान्धकाराच्छन्न इव मन्यते।

## सम्पादकीयं निवेदनम्

मान्यमान्याः पण्डितमूर्द्धन्याः, येषां स्वरारूढ़ानां विद्वच्चूड़ामणीनां तर्काचार्य्यमहाभागानां स्मृतिरक्षणार्थं तदीयगुणगणसंवलिता संस्कृत-साहित्य-परिषत्पत्रिकायाः संख्यैकाद्य भवतां करकिशलयेषु समर्प्यमाणास्ति, ते खलु महात्मानः प्रायेणाजीवनमस्याः संस्कृत-साहित्य-परिषदः कृते सर्वथात्मानं समुत्सर्गीकृतवन्तो विविधाभिरध्यापना-ग्रन्थविरचना-पत्रिकादिसम्पादनरूपाभिः कृत्यपरम्पराभिरिति सुविदितमेवेदं सहृदयानां भवताम्। तस्मात् कृतवेदितादिरस्य परिषत्प्रतिष्ठापकानामेतेषां परलोकप्रस्थानादव्यवहितोत्तर काल एवासीदस्याः स्मृतिसंख्यायाः प्रकाशनमुचितमिति के वा न कथयेयुः।

परं दैवगत्यात्मनो नैसर्गिके प्रकाशने बाधामुपगतेयं संस्कृत-साहित्य-परिषत् निर्घृणेवाकृतज्ञेव यथाकालं तत् नैव संविधातुमलमजनीति स्वकीयमपराधराशिं भवद्भिः क्षन्तव्यमभ्यर्थयन्ती समुपतिष्ठते तत्रभवतां भवतां पुरतो वेपमानेव।

यदि नाम चिरं स्नेहवन्तो भवन्तोऽनिच्छया सम्पद्यमानमपराधममुं विस्मरन्तः सादरमिमां स्मृतिसंख्यां करग्राह्यां कुर्वीरन्, तदा ते जगद्गुरवोऽपि नूनं सविशेषां तुष्टिमापन्नाः—

शैवे वा वैष्णवे वापि ब्राह्मे लोके स्थिताः पुनः।
सर्वदाशीःप्रदानेन वर्द्धयिष्यन्ति नः कुलम्॥ इति।

परिषत्सभापतीनां **महामहोपाध्याय-कालीपद-तर्काचार्य्य-**
महाभागानां महाप्रयाणमुपलक्ष्य शोकसभायां
संस्कृत-साहित्य-परिषदः

(१७।४।७९) दिवसीयः

# शोक-प्रस्तावः

संस्कृत-साहित्य-परिषदः अन्यतमाः प्रतिष्ठातारः आचार्य्यचराः पत्रिका-सम्पादकाः सभापतयश्च महामहोपाध्यायाः डक्टर कालीपद-तर्काचार्य्य-महोदया विगत-सौर-श्रावणस्यैकादशदिवसे गुरुवासरे नक्तं सार्धाष्टमहोरायामगणित-गुणमुग्धान् शोकाम्बुधौ निलीयमानान् विधाय साधनोचितं धाम प्राप्तवन्तः। वयं परिषत्सदस्यास्तदीय-परिजनैः सह गभीरं शोकमनुभवन्तस्तान् प्रति सुमहतीं श्रद्धां निवेदयामः। तदीय-परिजनाश्च तेषामेव शुभाशिषात्मनो धारयन्त्विति कामयामहे।

प्रस्तावस्यास्यानुलिपिस्तत्परिजनानां सकाशे प्रेषणीया।

महाकवि-महामहोपाध्यायपदभाजाम्

आचार्यवर्य्य-**कालीपद-तर्काचार्यपदानां** तिरोधाने

# विलाप-गाथा

[ निबन्धकः—श्रीश्रीजीवन्यायतीर्थः ]

निस्तब्धामरभारतीकरलसद्वीणाद्य दीना समा
बङ्गक्षौणिरुपैति मौनिवदनादुष्णाश्रुबिन्दुस्रुतिम् ।
निःशब्दा सहसा ससिन्धुवसुधा प्रावृड्घना निःस्वना
भास्वद्भारतदेवता च मलिना लीना तमःसन्ततौ ॥१॥

हा हा विश्वविभासको भरतभूव्योमैकसोमोऽधुना
यातोऽस्तं जगदन्धकारपिहितं बन्ध्यं प्रतीमो वयम् ।
चूड़ा न्यायमहाचलस्य दलिता क्रूरेण वज्रात्मना
दुर्दैवेन विशोषिता च कविता-सिन्धू रसस्यन्दिनी ॥२॥

क्रन्दन्तो विलपन्ति केन विबुधाः सम्बोध्य तं दुर्विधिं
येन ध्वस्तममूल्यरत्नममलं भूमौ चिरत्नोज्ज्वलम् ।
ज्ञाने सिन्धुरनन्यबन्धुरखिलान्तेवासिविद्वन्नृणां
धूर्य्योऽसौ सुधियां स्वभावमधुरो वाक्ये च वाचस्पतिः ॥३॥

तर्काचार्यपदाद् वितर्करहितं यन्नाम सङ्कीर्त्यते
मर्त्ये यश्च गुरुर्बुधः कविरपि भ्राजिष्णुकीर्त्तिः सदा ।
ओजस्विप्रियभाषणैर्जितचतुर्वक्त्रोऽपि रक्तो नृणा-
मेकच्छत्रनृपोपमोऽरमत यः क्वासौ गतोऽतर्कितः ॥४॥

यद्वाचां प्रसरो रसोत्स इव सत्-स्वान्तेषु सारस्वतं
सारं चारयति स्म वर्णविशदं कर्णामृतासारदम् ।
वीणाभङ्कृतिसोदरः स्वविषयोदारग्रहे सादरः
सद्यः सज्जनचित्तमज्जनकरो भावप्रवाहोज्ज्वलः ॥५॥

मन्ये स्त्रीत्वविसर्ज्जनाय हि सरस्वत्याशु कालीपदा-
कृत्या भूमिरलङ्कृतातिपुरुष-प्रागल्भ्यलाभाशया ।
तर्के कर्कशपद्धतौ कुसुमवत् कम्रे च मार्गे कवेः
सांख्यादावुषरे पथि प्रचलितुं पाण्डित्यमङ्गीकृतम् ॥६॥

नानानाट्यनिबन्धबन्धन-महाकाव्यादिसंग्रन्थने
वश्या स्त्रीव सदानुवर्त्तनपरा यस्याभवल्लेखनी ।
आबाल्यं प्रलयावधिर्निरवधि स्थित्वा चिरं सङ्गिनी
साध्वी तेन समं गता सहमृता नान्यं वरीतुं क्षमा ॥७॥

लावण्यस्फुरिताङ्गसङ्घघटना-कण्ठस्वरोच्चारण-
प्राणप्रीणन-नाटकाभिनयसुश्रीहस्तलिप्यादिभिः ।
शास्त्रार्थैर्नवगद्यपद्यरचनैरध्यापनैर्विश्रुत-
स्याचार्य्यस्य चिराय शोकविधुरो लोकः सदा रोदिति ॥८॥

देव त्वं प्रियसेवकान् परिजनान् स्निग्धांस्तथा बान्धवां-
स्त्यक्त्वा मुक्तिपदं गतोऽसि सुकृतैरानन्दसन्दोहदम् ।
पश्याधोभुवने भवद्विरहतो भाग्याहतः सद्गणः
प्रेयस्ते ननु काश्यपाश्रमपदं शोकाश्रुभिः सिञ्चति ॥९॥

शिष्या यस्य विशिष्य नैव मिलिताः प्राच्यादथो पश्चिमा-
द्देशात् फुल्लसरोजतुल्यसुरभेर्भृङ्गा इवान्ते स्थिताः ।
पीत्वा पूतमधूपमप्रवचनं निःस्पन्दनम्रा मुदा
माद्यन्ति स्म विहाय तान् क्व नु भवान् निर्वेदवान् मोदसे ॥१०॥

सौजन्यद्रुमजन्यभावकुसुमप्राया यदीय-प्रिय-
व्याहारव्यवहारहारसुषमा नारञ्जयत् कञ्जनम् ?
यत्सान्निध्यममानि वृद्धतरुणस्त्रीबालकैरुत्सवः
सोऽयं सर्वजनैकपर्वनिलयो हन्ताद्य यातो लयम् ॥११॥

बङ्गोद्भूतविभूतिशेषमणिवद् धीरेषु हीरायितो-
पाधिं यश्च महामहेतिसहितोपाध्यायमासेदिवान् ।
नास्त्येकोऽपि तथाविधोऽद्य पुरुषः शून्या च पुण्यक्षिति-
स्त्वेषा तद्विरहादहो विलसितं हा दुर्विधेर्दुष्कृतम् ॥१२॥

स्थित्वा संस्कृतभारती रतिमती कालीपदे लालिते
भूवृन्दारकवृन्दचित्तकमलस्यन्दैरमन्दैश्चिरम् ।
सम्प्रत्याश्रयते श्मशानमनुसन्धातुं भवप्राङ्गणं
दग्धाङ्गारमयाद् विदग्धशिखिनश्चेत् सम्भवेच्चित्कणः ॥१३॥

देव त्वत्करकञ्ज-मञ्जुलतरस्पर्शाङ्किते पर्षदौ
साहित्यस्य च बङ्गसंस्कृतविधेर्द्वे शोच्यतामाप्नुतः ।
रोगार्त्तोऽपि समागतः स्मितमुखः कर्त्तव्यमेवाकरो-
स्ते विस्मृत्य विराजसे कथमहो स्वाराज्यशय्यालसः ॥१४॥

किं ब्रूमो वयमद्य धूमतमसोर्मध्ये वसामोऽवशाः
शोकाच्छन्नतया विपन्नगतयो नुन्नश्रियो दुर्धियः ।
दिव्ये धामनि दीव्यतात्रभवता देयो दयाद्योतका-
लोको येन हृता भवेदयत्नयातान्धकृद् यातना ॥१५॥

मृत्युर्जन्मसहोदरस्तनुचरः काले मनुष्यानहो !
निर्व्याजं कवलीकरोति हि बली नास्ते ततो निष्कृतिः ।
जीवन् जीवशुभं विधाय जितवाल्लोकान्तरं सन्ततं
त्वं लोकान्तरगो विभुर्वितर भो आशीर्विशेषं पुनः ॥१६॥

---

# मदेकबान्धव-ज्येष्ठतातात्मज-महामहोपाध्याय-कालीपदतर्काचार्य्यमुद्दिश्य शोकविलापः

[ विलापकः—श्रीउपेन्द्रमोहन सांख्यतीर्थः ]

बाल्यात् सहोदरधिया महतादरेण
स्नेहेन चास्मि नितरां परिलालितोऽहम् ।
मूके मुखे मम वचो भवतैव दत्तं
प्राग्देशजं तदनु संस्कृतमादिबन्धो ! ।।१।।

शिक्षाविधौ मम सदा विहितः प्रयासो
बाल्ये यथा तरुणिमन्यपि तद्वदेव ।
अन्नेन साकमुपकल्प्य सवृत्ति-विद्यां
नीतस्त्वयाहमतिदुस्तरमाधमर्ण्यम् ।।२।।

पक्षं ममैव नियमादवलम्बमानं
कल्याणवर्त्मनि निरन्तर-जागरूकम् ।
त्वां पश्यतां सपदि संशय एष आसीत्
त्वं मे पितृव्यतनयोऽसि सहोदरो वा ।।३।।

शास्त्रानुशासन-विधौ गुरुतामुपेत-
श्चारित्र-शोधन-विधौ सखितामपूर्वाम् ।
स्वीकृत्य पालन-विधौ विविधं प्रयासं
त्वं सोदरादपि ममासि गुरुर्विशेषात् ।।४।।

पाठार्थमाप्त-गुरुमन्दिरमार्यपादं
यद्यप्यनारतमपश्यमहं न बाल्ये ।
ग्रीष्मादि-तत्तदवकाशदिनेषु देशं
प्राप्तेन मेलनमहं भवता स्मरामि ।।५।।

तत्र त्वया समवया इव सादरेण
नीतोऽहमाह्निक-विधावपि सन्निधानम् ।
दैनन्दिनस्तव विधिर्लघुरायतो वा
नाभूत् कदापि मम लोचन-दूरवर्ती ।।६।।

दुर्गोत्सवे सविधवर्तिनि माधवीये
सम्भावितं तव समागमनं प्रतीक्ष्य ।
उत्कण्ठया विगमितः समयो महत्या
नेत्रातिथिर्मम भवान् भविता कदेति ।।७।।

त्वां दुर्गया सह समागतमब्दशेषे
लब्ध्वा प्रमोद-जलधौ नितरां निमग्नः ।
पूजोत्सवो भवतु काममयं परेषाम्
एकोत्सवो मम पुनस्तव साहचर्य्यम् ।।८।।

पूजादिनेषु भवतो वचने स्थितेन
प्राज्योपचाररचनानिरतेन हर्षात् ।
अज्ञातखेदकणिकेन मुहूर्तमारात्
सम्भाविताः खलु मयार्चनवासरास्ते ।।९।।

दुर्गोत्सवः स्मृतिपथं नियमाद् गतोऽपि
त्वत्सन्निधानवशतः सुसहो ममासीत् ।
वृत्तोत्सवं भवनमन्वभवं तदानीं-
मार्यो यदा गृहमपास्य गतः प्रवासे ।।१०।।

आरोप्य नावि धृतविग्रहमुत्सवं त्वां
वाष्पाम्भसा पिहित-दृष्टिरुपेत्य गेहम् ।
वीतोद्यमो निखिल-कर्मणि लुप्तलिप्स-
स्त्वच्चिन्तयैव कथमप्यनयं दिनानि ।।११।।

पश्चादहं तव समागत-शिष्यभावो
यद्यप्यवात्समलघून् दिवसांस्त्वदन्ते ।

कैशोर-काल-कलितं मम जीवनस्य
तत्ते समागम-सुखं न तु विस्मरामि ॥१२॥

मां मन्दबुद्धिमधिकृत्य परं प्रयास-
माशैशवं विहितवानसि वीतखेदः ।
तेनैव निर्गुणतमोऽपि सुदुर्विधोऽपि
श्रद्धां बुधेषु कियतीमपि लब्धुमीशः ॥१३॥

यद्यर्जितं किमपि पाटवमक्षमेण
पद्यादि-लेखनविधौ लवतो मयाद्य ।
एकान्त-हेतुरिह ते करुणैव कामं
रत्नाकरः विधिसुतादपरो न शिष्येत् ॥१४॥

लोकान्तरं गतवतो भवतोऽहमद्य
प्राप्तोऽस्मि किं स्मृतिपथं महतीति चिन्ता ।
पूर्वा स्मृतिस्तव न चेद् विहता तदा मे
तुच्छेन शोक-वचसाऽपि वितुष्यसि त्वम् ॥१५॥

उप्तं त्वया यदुषरे हृदि काव्य-बीजं
तस्याङ्कुरोऽपि समयात् समजायतैव ।
सोऽप्राप्त-पादपदशः क्रमशः कृशीया-
नद्यामयेन जरसाऽपि च नामशेषः ॥१६॥

आशा तथापि हृदये परिवर्तते मे
एतावतैव परितोषमुपैष्यसि त्वम् ।
जातेऽङ्कुरे कृश-कृशे स्वयमुप्त-बीजाद्
वप्ता शिशाविव पिता न भजेदवज्ञाम् ॥१७॥

पान्थायसे स्मृतिपथे त्वमिह प्रसङ्गे
संशोधयन् मम निबन्धमपक्व-लेखम् ।
यत्रापवर्जित-शुभाशुभ-भावनेन
त्वय्यर्पिताखिल-भरेण मया प्रसुप्तम् ॥१८॥

श्रान्त्या जराजनितयाऽकृश-कर्षितोऽहं
कं यामि लेखपरिकर्मविधौ शरण्यम् ।
याचे ततः प्रणयतः पुनरार्य्यमेव
संशोध्य पाठ्यमिह मे स्खलितं यदि स्यात् ॥१९॥

कौमारके हृदि मयाऽसि यथा गृहीत-
स्तन्मात्रमत्र गलदर्गलमस्ति जातम् ।
अद्यापमर्दित-विपक्ष-सहस्रवृक्षं
शास्त्राटवीविचरणं तव किं ब्रवीमि ॥२०॥

काननादिव निजाननतः प्रकामं
संगृह्य काव्यकुसुमान्यतिसौरभाणि ।
वर्णोज्ज्वलानि रसवन्ति मनोहराणि
प्रामोदयो रसपिपासु-बुध-द्विरेफान् ॥२१॥

न्यायस्त्वया समधिगत्य गुरोः प्रकाण्डा-
न्नीतः प्रचारमतिमात्रमिह प्रदेशे ।
येनोपगम्य तव सन्निधिमाप्तविद्या
अध्यापका अपि गतास्तव शिष्यभावम् ॥२२॥

शिष्यप्रशिष्यविधया तव दत्तविद्या
प्राप्ता प्रसारमिह भारतभूमिभागे ।
लब्ध्वा क्रमेण रघुनाथ-गदाधरादे-
र्बङ्गस्य कीर्तिमतुलां बहुलीकरोति ॥२३॥

तैस्तैरनेक-विबुधैरुपशोभितापि
ख्यातिं त्वयैव गमिता भरतावनीयम् ।
सत्स्वप्यनेक-सुविशाल महीरुहेषु
द्वीपोऽयमस्ति विदितः खलु जम्बुनाम्ना ॥२४॥

आलोक्य ते वपुरुपात्त-महत्त्वचिह्नम्
आकर्ण्य वा तव निरर्गल-वाक्प्रपञ्चम् ।
वादे पटुत्वमधिगम्य च विस्मिता ये
ते ते हतास्तव न चेच्चरितं विदन्ति ॥२५॥

औदार्यमास्त गुणि-निर्गुण-निर्विशेषं
स्नेहः कुटुम्बमधिकृत्य निरर्गलश्च ।
शिष्या गताः सुत-समादरणं स्वभावा–
दादर्शतां त्वमगमो व्यवहारतोऽपि ॥२६॥

प्रीतिः परा यदभवन्मयि निर्गुणे तु
हेतुर्मनागपि मया नहि तत्र दृष्टः ।
यद्वास्ति ते प्रकृतिरेव निदानमस्मिन्
निष्कारण-प्रणयिनो हि महास्वभावाः ॥२७॥

त्वं कालतः स्वसुकृतैरुचितधामलब्धः
प्रेत्यापि तत्र न गतिर्मम सम्भवित्री ।
त्वञ्चापि न क्वचिदुपैष्यसि नः सकाशे
तस्माच्चिराय गलिता तव दर्शनाशा ॥२८॥

उत्कण्ठते हृदयमद्य तथापि बोद्धुं
निर्वासिताः किमु चिरान्मनसो वयं ते ।
स्नेहः स साऽतिकरुणाऽकपटा च साशी-
र्देहेन साकमगमद् विलयं किमेते ? ॥२९॥

आस्तामलौकिक-विधेरनुचिन्तनं तत्
स्निग्धा वयं त्वयि भृशं पुनरग्रतोऽपि ।
याचामहे परम-कारुणिकं परेशं
या तस्य ते सुचिर-शान्तिमनन्तकालम् ॥३०॥

———०———

अशेषगुणालङ्कृत-दिगन्तविश्रान्तकीर्त्तीनां पुण्यश्लोक-

# महामहोपाध्याय-डक्टर कालीपदतर्काचार्य्य-महोदयानां महाप्रयाणे शोकोच्छ्वासः

[ निबन्धकः—श्रीविश्वेश्वर विद्याभूषणः काव्यतीर्थः ]

शीर्णाशेष-वियोगदुःख-विधुरा रोरुद्यमाना भृशं
श्यामापाङ्ग-सिताश्रुविन्दु-निचया क्लिष्टेक्षिपद्मच्छटा ।
स्तब्धीभूत-विहङ्गकण्ठ-कविता शोकाकुला भारती
मौनं शोचति बङ्गसागरजलैः स्रोतस्विनी जाह्नवी ॥१॥

ब्राह्मण्ये चिरनिष्ठितात्ममहिमा नानागुणालङ्कृत
आचार्य्यो बहुकीर्तितः कुलपते ! विद्यार्थि-संसेवितः ।
तर्काचार्य-महाकविश्च महितः सम्मानितः सादरं
धन्यस्त्वं परिपूतरम्यचरितो देदीप्यसे गौरवात् ॥२॥

रम्या या देवभाषा ललितरसमयी श्रौतशास्त्रादिमूर्ता
कल्पे कल्पे प्रकामं जगति वितनुते ज्ञानधर्मप्रचारम् ।
तां वाणीं ब्रह्मविद्यां व्रतचरणपरः सेवमानो वरेण्यः
कीर्त्तिं भो लब्धवांस्त्वं दिशि दिशि विमलां सुप्रतिष्ठो नरेषु ॥३॥

लब्ध्वा तापसवंश-जन्मविभवं प्रज्ञातपोमण्डितं
ध्यायंस्ते हृदयाधिपं यदुपतिं भक्तप्रियं भक्तिमान् ।
तत्त्वज्ञो हरिपादपङ्कजमतिः प्रेम्णा सदोल्लासितः
स्वर्गं गच्छसि देव दुःखविधुरो भद्रं तव प्रार्थये ॥४॥

स्थानं तेऽस्तु सुरेन्द्र-दिव्यभवने संगीतरम्योज्ज्वले
किं कुर्मस्तव पुण्यवन्दनविधौ शोकाकूलाः स्मो वयम् ।
दीनैस्त्वद्विरहार्तबान्धवजनैर्भक्त्यार्पितामञ्जलिं
तप्तोच्छ्वासयुतां गृहाण कृपया कारुण्यरत्नाकर ॥५॥

अत्रैव संसद्भवने त्वया भोः !
समर्पितं मे शुभमानपत्रम् ।
प्राप्तोऽसि हन्ताद्य सुरेन्द्रलोकं
व्यथातुरस्त्वां विबुधं स्मरामि ॥६॥

कालीपदसुधास्यन्दमकरन्दमधुव्रतः ।
दीप्यतां परमे धाम्नि महर्षिः काश्यपः कविः ॥७॥

———

स्वर्गत-तर्काचार्य-तर्पणे

# —निवापाञ्जलिः—

[ निबन्धकः—श्रीधीरेन्द्रनाथ मुखोपाध्यायः काव्यव्याकरणतीर्थः ]

तर्काचार्य महाकवे ! तव तनुत्यागाधिवार्ता हठात्
कर्णाभ्यां समुपेत्य तीव्रमभिनद् मर्मस्थलं शल्यवत् ।
हा हा सोम्य तव प्रसन्नवदनं भूयो न दृश्यं भवेद्
इत्येवं स्मरतः स्वतो नयनतः शोकाश्रुधारावहत् ।।१।।

शुष्कं दारमुखं निदारुणतमोद्वेगाभिभूताः सुताः
शीर्णं शिष्यकुलं कुले मतिमतां नो कोऽपि यो नाकुलः ।
आत्मीयस्वजनास्तथा गुणिगणाः सीदन्ति सर्वेऽधुना
किन्त्वेको हृदि शोकसिन्धुरनिशं नेत्राम्बुभिर्वर्धते ।।२।।

जातस्त्वं हि सदा सुधीशसदने सर्वे तदा सुन्दरं
सद्योजातशिशुं विलोक्य जहसुस्त्वेकेन ते क्रन्दितम् ।
अद्य त्वं विहसन् गतः सुरपुरं क्रदन्ति सर्वे कृतिन्
धन्यं जीवनमीदृशं तनुभृतां नान्यद् बुधैर्वन्द्यते ।।३।।

जाता यादिकवेः पुरा सुललिता व्यासेन संवर्धिता
वैदग्धी कविता स्वयं वृतवती श्रीकालिदासं वरम् ।
कालात् सा किल कालिदासमपरं कालीपदाख्यं प्रियं
त्वामासाद्य वरं परं सुखवती रेमे चिरं भास्वती ।।४।।

हा कष्टं कवितापते ! त्वयि गते सत्सङ्गमाद् वञ्चिता
साध्वी सा कविता सतीव वनिता शोकात् त्वया प्रस्थिता ।

शेषा या च मता रसेन रहिता नष्टा च कष्टागता
शून्यालंकृतिकुत्सिता ध्वनिहता सैवश्रिता मादृशान् ।।५।।

तस्मादद्य महाकवित्वजलधे ! पारं च सारं तव
गाम्भीर्यादिगुणप्रकर्षमतुलं माधुर्यमुद्यत्प्रभम् ।
लीलासंवलितानतीव ललितान् भावांस्तरङ्गायितान्
सम्यग् वर्णयितुं विवर्णतनुकाः किं वर्णयामो वयम् ? ।।६।।

आस्वाद्यं कविहृद्यमुत्तममहाकाव्यं च ते नाटकं
सम्पृक्तस्तव पद्यसंस्कृतरसै रावीन्द्र'गीताञ्जलिः' ।
त्वच्चित्ताकरजातभाष्यमणयः शास्त्रार्थसन्दीपका
अत्यर्थं तव कीर्तिकीर्तनपरान् कुर्वन्ति विद्वज्जनान् ।।७।।

वाग्वैदग्ध्यगुणैर्विदग्धनिचयानुच्चैस्तरां मुग्धयन्
मूर्खान् पण्डितयन् चलानचलयन् गर्वोन्नतान् खर्वयन् ।
वर्णेशांश्च विवर्णयन् बुधसभाशोभां परं वर्धयन्
हा हा त्वं न पुनः कवीन्द्र समितौ दृश्यो भवेः पूर्ववत् ।।८।।

पूर्वं यस्य मुखात् सुतर्कमुखरादुद्गीर्णवर्णच्छटां
ध्यायन्ती बुधसंहतिः सुमहती कालस्मृतिं व्यस्मरत् ।
व्याकृत्यादिविभिन्नशास्त्रविषये पारङ्गमं सज्जनं
तर्काचार्यमहो विचारनिपुणं तं विस्मरामः कथम् ।।९।।

सर्वं भारतभूतलं सुविपुलं प्रोद्भासयन् रोचिषा
प्रातः सायमथो समं कविरवे ! सर्व्वैरभूर्वन्दितः ।।
त्वय्यस्तं प्रगते विभाविरहिते वात्याहते भारते,
नीरन्ध्रं तम आगतं कविकुले, को वा दिशं निर्दिशेत् ।।१०।।

देशे शेषतमो महायत-महोपाध्याय आसीरहो
ज्योतिष्के त्वयि विच्युते बुधयुगं शेषं गतं बङ्गतः ।

काव्यालंकृतिदर्शनेषु जटिले तर्के तथा तर्किणां
सन्देहे समुपस्थिते वद कवे ! मध्यस्थतां को नयेत् ?॥११॥

यैषा 'संस्कृतपूर्विका'हि 'परिषत्' 'साहित्यपूर्वा' तथा
या कन्येति विचिन्त्य तातसदृशस्नेहेन ते पालिता ।
सा दीना विमना विषादमलिना सद्योवियोगात् पितुः
शोचन्ती नयनाम्बु वर्षति सदा, तामाशिषा सान्त्वय ॥१२॥

भो आचार्यशिरोमणे कविधने त्वं भूयसाधीश्वरः
किं देयं तव तृप्तये पितृसम ! स्वर्गं पुरं प्रस्थित !
सश्रद्धं तिल*काव्य-भक्तितुलसी-नेत्राम्बुभिः कल्पित
उत्सर्गीकृत एष तुभ्यमधुना नेयो निवापाञ्जलिः ॥१३॥

———०———

# महामहोपाध्याय डक्टर कालीपद तर्काचार्य्य-महोदयानां जीवनवृत्तसंग्रहः

[ संग्राहकः—शिष्याधमः श्रीमधुसूदन वेदान्तशास्त्री ]

अस्ति पूर्वबङ्गेषु कोटालिपाड़ाख्यं ब्राह्मणवर्णप्रधानं नगरम्। तत्र विद्याचार-सुविश्रुत-काश्यपगोत्र-श्रीप्रमोदन-पुरन्दराचार्य्यात् प्रावर्त्तत कश्चिदतिप्रसिद्धः काश्यपो वंशः, यत्र जनिमग्रहीदद्वैत-सिद्धि-प्रमुख-प्रभूत-रत्नभूत-ग्रन्थप्रजापतिः सकलक्षिति-प्रख्यातकीर्त्ति-र्यतिकोविदचक्रवर्त्ती सरस्वत्युपनामा श्रीमधुसूदनो नाम। स बाल्ये स्वपितुरेव गृहीत-व्याकरणादि-विद्यो नवद्वीपे न्यायविद्या-मासाद्य वाराणसीं गत्वा तत्र सन्न्यासेन समं निगमान्तविद्या-मधिजगाम, गुरुणा च न्यायामृतादिनिबद्धमाध्वपद्धतिसमुद्वेजितेन समादिष्टः परमेष्टभूताद्वैतसिद्धान्तवर्द्धनीमद्वैतसिद्धिं निबबन्ध।

अस्मिन्नेव पौरन्दरे वंशे कालेन हरकुमारो नाम कश्चन महापुरुषः समजायत, यस्य सत्त्वप्रधानप्रकृतेः सुरेषु महीसुरेषु च श्रद्धामति-समिद्धां दधानस्य महती प्रसिद्धिरासीद् वैदिकादिकर्मकाण्डेषु। तस्मादेव महापुरुषादजायत दीपाद् दीप इव तुल्याकारः प्रतिभाधरः श्रीहरिदासो नाम। यः शैशवे स्वदेश एव गृहीतप्राथमिक-विद्यो न्यायविद्याधिगमाय पश्चिमबङ्गानधिष्ठाय न्यायविद्यां समासाद्य तर्कतीर्थेति नव्यन्यायविद्याचरमोपाधिमाससाद। तस्य देशकाल-कुलाचाराद्यनुसारेण स्वल्पे वयस्येव गृहीतदारस्य यदा सुचिरेणापि कालेन स्वपत्न्यां श्रीसीतादेव्यां नापत्यमजनिष्ट, तदा तत्पिता हरकुमारः स्वपुत्रात् प स्वीयवंशधारा-प्रणाशशङ्कया दूयमानो

---

*महामहोपाध्यायानां कृतिपुत्रयोः अध्यापक—श्रीगङ्गेश चक्रवर्त्तिनः अध्यापक-डक्टर-श्रीसोमेश चक्रवर्त्तिनश्च सौजन्यात् वृत्तमिदं संगृहीतम्।

यथाविधानं प्रधानकोविदगणेन श्रीश्रीचण्डीसमाख्य-सुविख्यात-देवी-माहात्म्यस्तोत्रस्य शतावृत्तिपाठं पौत्रकाम्यया कारयामास। ततः स्वल्पेन कालेन गच्छतैव श्रीहरिदासात् सीतादेव्यां सुलक्षणः कश्चन पुत्रः अष्टाशीत्युत्तराष्टादशशततम-खृष्टसंवत्सरे समजनिष्ट, यस्य चण्डीकृपयैव लब्धजन्मनः काले पितामहः कालीपदेति नामपदं प्रचारयामास। तेनैव नाम्ना लब्धप्रचारस्य स्वजनगणसमादरेण क्रमेण वर्द्धमानस्य तस्य पञ्चमवर्षे वयसि सम्प्राप्ते विद्यारम्भः समजनि। कियत्कालानन्तरं विद्याशिक्षार्थं पिता पुत्रं कलिकाता-नगरीं निनाय, यत्रासौ स्वयं जीविकार्थं सुचिरात् पूर्वत एव नियमेनोवास। पिता तावत् परितः क्रमेण वर्धमानां संस्कृतविद्या-वतामत्युद्धतां दुर्गतिं पदे पदे समीक्षमाणः कालानुसारेण सकला-पेक्षितायां विलक्षण-धनमानादि-निदानभूतायां पाश्चात्यविद्याशिक्षायां तनयं विचक्षणं कर्तुकामः पाश्चात्यविद्यालये प्रावेशयत्। किन्तु तया दिशा सर्वाधीशस्य वेधसः स्पृहा न प्रावर्तत। विधातुरनति-क्रमणीय-पराक्रमेण नियन्त्रितः कालीपदः पाश्चात्यविद्यापरिग्रहे सुतरामाग्रहवतः पितुः सर्वं प्रयत्नं सपत्न इव व्यर्थीकृत्य संस्कृतविद्या-शिक्षणकृत्यमेव परमानन्दकन्दमवधार्य्य तत्रैवात्मानं सुदृढं नियोजया-मास। तदिदं सुतरामनिच्छन्नपि तातो निजाभिलषितसिद्धौ किमपि साधनमनासाद्य तावतैव कथञ्चित् परितुतोष। अथ प्रारब्धं तस्य संस्कृताध्ययनम्। ततः प्रभृति महताध्यवसायेन स्वदेश एव क्रमेण श्रीकालीकान्तशिरोमणिप्रमुखेभ्यो नैकेभ्यः सुयोग्याध्यापकेभ्यः संस्कृतव्याकरणमधीयानस्य तस्य स्वल्पेनैव कालेन प्राक्तन-संस्कारानुगृहीतस्यैव संस्कृतभाषायां सविशेषः प्रवेशः समजायत। समञ्च समपेक्षितेन पाठ्यग्रन्थपाठेन भाषान्तरस्य संस्कृतभाषया-नुवादे स्वेन पितृव्येन सुगमोपायेन विनीयमानस्य क्रमेण संस्कृत-भाषया निबन्धने स्वतन्त्रतया तत्प्रवचने च सामर्थ्यमजनिष्ट। ततः कियता कालेनासमाप्तव्याकरणाध्ययन एवासौ सरलेन छन्दसा पद्यम-प्यनवद्यं रचयितुमारेभे। तत्कालादेव चास्य महती प्रसिद्धिर-

रञ्जनिष्ट गरिष्ठविद्वत्समाजेषु गीर्वाणवाण्या व्याख्याननैपुण्ये। बाल्यात् प्रभृत्येवात्यर्थमवर्त्तिष्ट समासक्तिरस्य कदाचिदुत्सवादिषु रूपकाभिनये कदाचित् परिषदादिषु शिष्टाभीष्टपद्यादिपाठे संस्कृत-भाषया विद्वद्गोष्ठ्यां मिथः संवादे पूर्वबङ्गीय-वैदिक-ब्राह्मणानां विवाहसभासु वरपक्ष-कन्यापक्षयोरन्यतर-पक्षमाश्रित्य पक्ष-प्रतिपक्ष-भावेन संस्कृतभाषया विवादे प्रस्तुते श्लोकेन प्रश्नः करणीय इत्यपि तेनैव कृत्वा सामाजिकस्तुते शास्त्रार्थविचारे विद्यादि-यशोबीज-भूतेषु वा कृत्यान्तरेषु। परं नासीदासक्तिर्बालान्तरवत् क्रीड़नादि-व्यापारेषु। येनोत्तरस्यां यौवनदशायामनासादितपादकन्दुकादि-विविध-क्रीड़ानैपुण्यस्यापि स्वाधीनतानधीतविद्याध्यापनादिविधि-ष्विव रूपकाभिनयादावपि प्रकर्षातिशयेन यशोराशिरस्य विशदः सर्वा दिशः समश्नुवानः सञ्चचार।

कियता कालेन च तदानीन्तन-राजकीयसंस्कृत-परीक्षा-समिति-परिगृहीतायां व्याकरणशास्त्रीयप्रथमपरीक्षायामवतीर्णः स्वदेशस्थित एव तां सप्रशंसमुत्तीर्य विलक्षण-विद्यापरिग्रहाय कलिकातानगर्यां पितुः समीपमाससाद। तत्र गत्वा च तदानीं कलिकातानगर्यां सुप्रसिद्धे 'भारतीरञ्जन'विद्यालये प्रवीणतमवैयाकरण-श्रीभुवनेश्वर-विद्यालङ्कार-महोदयेभ्यः शिष्टं व्याकरणतन्त्रं निपुणमधीत्य क्रमेण व्याकरणशास्त्र-मध्यम-परीक्षामुपाधिपरीक्षाञ्च सप्रकर्षमुत्तीर्य तत्रैव काव्यशास्त्रमप्यंशेनाधीयानः काव्यमध्यमपरीक्षामपि प्रकर्षेण समुत्ततार। अस्मिन्नवसरे विद्यालङ्कारमहोदयाः पूर्वबङ्गेषु प्रथित-यशसा कवीन्द्रसंस्कृतमहाविद्यालयेन तदध्यापकपदग्रहणाय सबहुमान-सभ्यर्थिता भारतीरञ्जनविद्यालयं विघटय्य तत्रैव गताः। तदानीं भारतीरञ्जनविद्यालयस्य विद्यार्थिनो दावानलनिर्दग्ध-वनसमाश्रया इव विहगाः समन्ततः समन्विष्यन्तो विभिन्नशिक्षाश्रमानाशिश्रियुः। कालीपदोऽपि कतिचिद् दिनानि कलिकातानगर्यामितस्ततो गत्वा काव्यशास्त्रमधीयानः सन्तोषविशेषमनासाद्य वेधसेव सम्प्रेरितो 'मूला-जोड़'-संस्कृतमहाविद्यालयं गत्वा तत्र काव्यकोविदरत्नभूतश्रीहरि-

पदविद्यारत्नकाव्यस्मृतितीर्थमहोदयेभ्यः सुनिपुणं काव्यालङ्कार-तन्त्राणि समधीत्य तस्मिन्नेव वर्षे प्रथमविभागे सर्वप्रथमस्थानमधि-कृत्य काव्योपाधिपरीक्षामुदतरत् पुरस्कार-विशेषांश्च समास-साद। परीक्षानन्तरं लब्धावसरः कियता कालेन स नलदमयन्ती-वृत्तमधिकृत्य 'विदर्भसमागमं' नाम सप्ताङ्कं संस्कृतनाटकं प्रणिनाय, तदिदमभिनीतञ्चाभूत्तदानीन्तन-तन्महाविद्यालयविद्यार्थिवृन्देन तत्रत्य-सारस्वत-महोत्सवे महाग्रहेण। अथ पूर्वत एव तर्कशास्त्रविद्यायामति-श्रद्धालुरसौ तत्रैव महाविद्यालये सर्वाध्यक्षपदमध्यासीनेभ्यो गौतम-गङ्गेशादिकल्प-नैयायिकप्रवर-महामहोपाध्याय-श्रीशिवचन्द्र-सार्वभौम-भट्टाचार्य्येभ्यो न्यायविद्यामध्येतुमारेभे। निःसङ्गं तप इव न्याय-शास्त्राध्ययनं विदधानश्चासौ क्रमेण न्याय-शास्त्रस्य प्रथमपरीक्षां मध्यमपरीक्षाञ्च सुतरां प्रकर्षेण समुत्ततार। एतस्मिन्नन्तरे तेन 'अनुवादनवोदयो' नाम कश्चन संस्कृतभाषा-शिक्षाग्रन्थः प्राणायि, यः संस्कृत-शिक्षार्थि-समाजस्य महान्तमादरं प्राप्तवान्।

ततः परं तत्रैव महाविद्यालये स महामहोपाध्याय-श्रीशिवचन्द्र-सार्वभौमभट्टाचार्य्य-महोदयेभ्य एव नव्यन्यायशास्त्रीयतीर्थपरीक्षायां पाठ्यभूतान् ग्रन्थान् साभिनिवेशमध्येतुमारेभे। सांख्यशास्त्रीय-ग्रन्थानवसरसमयेनाधीत्य समुत्तीर्णश्च सांख्यशास्त्रीय-मध्यमपरीक्षाम-त्युत्कर्षेण। तस्मिन्नेवावसरे कलिकातास्थ-छात्र-पुस्तकालयेन सम्प्रार्थितोऽसौ कवि-काव्यसमालोचनात्मिकां 'काव्य-चिन्तां' सांख्य-कारिका-गौड़पादभाष्यटीकां सांख्यसारटीकां सार-मञ्जरीटीकां केषाञ्चिदन्येषां ग्रन्थानां टीका बङ्गभाषामयानुवादादींश्च प्रणिनाय। तदानीन्तन-'विद्योदया'ख्य-संस्कृतपत्रिकायां तदानीन्तन्याम् 'आर्य-प्रभा'ख्यसंस्कृतपत्रिकायामन्यत्र च तस्य बहवो गद्यपद्यमया निबन्धाः प्रकाशिता अभूवन्। श्रीश्रीचैतन्यचरितामृतग्रन्थस्य संस्कृतेनानुवादकः सुकविः श्रीभास्करानन्दस्वामी तदानीन्तनस्तत्रत्य-विद्यार्थी तस्य परमः सुहृदासीत्, यः पर्यन्ते सन्न्यासाश्रममाश्रित्य 'कालना'पत्तनस्थितस्य 'ज्ञानानन्दाश्रम'स्याध्यक्षतामाससाद।

ततः सुतीक्ष्णया प्रतिभया समन्वितोऽसौ निःशेषाणि नव्यन्याय-तन्त्रतत्त्वानि गुरुचरणानामनुकम्पया पितृचरणानामन्तरान्तरा सहाय-केन च सम्यगायत्तीकृत्य राजकीय-'तर्कतीर्थ'-परीक्षां प्रथमविभागे प्रथमस्थानमधिकृत्य समुत्तीर्णः सविशेषपुरस्कारेण समं तर्कतीर्थो-पाधिमलभत। सन्तुष्टाश्च गुरवस्तमिमं ततः प्रशस्तिपत्रं प्रदाय 'तर्काचार्ये'ति विशेषोपनाम्ना विभूषयामासुः।

तस्मिन्नेव वर्षे कलिकातानगर्यामचिरप्रतिष्ठापितायाः संस्कृत-साहित्यपरिषदः संस्कृत-विद्यालये सोऽयमुपाध्यायभूयं नीतो विद्यार्थिसङ्घाननेकानि शास्त्राण्यध्यापयितुमारेभे। वृतश्चाभूत् सहसम्पादकपदे तत्रत्य'संस्कृत-साहित्य-परिषत्' पत्रिकायाः। ततः प्रभृति द्वादश वत्सरान् यावदविच्छेदेन नियतं गुरुकुले ब्रह्मचर्य-व्रतमिव तत्र विद्यार्थिनामध्यापनादिव्रतमनुतिष्ठतस्तस्य विशिष्टशिष्ट-गोष्ठीषु वरिष्ठा प्रतिष्ठा समजनिष्ट। तत्रैव तस्य विद्याव्रते दीक्षितस्य द्वादशवर्षाभ्यन्तरे संस्कृत-साहित्य-परिषत्पत्रिकायां बहुविधा गद्यपद्यमया निबन्धाः प्रकाशिता अभूवन्। तदैव तेन स्वकृत-मुक्तिदीपिकाख्यटीकया विशदबङ्गभाषानुवादेन सुविस्तृत-संस्कृत-भूमिकया च सुसंस्कृतं गदाधरभट्टाचार्यकृतनवमुक्तिवादग्रन्थं तथा स्वकृत-सूक्तिदीपिकाख्यटीकया स्वकृत-बङ्गभाषामयभाष्यतात्पर्य-व्याख्यया स्वकृत-संस्कृतभूमिकया च समलङ्कृत्य तेन सुसंस्कृतं जगदीशतर्कालङ्कारकृतं प्रशस्तपादभाष्यसूक्तिग्रन्थं तथा स्वकृत-रत्नलक्ष्मीटीकया स्वकृतसंस्कृतभूमिकया स्वकृतन्यायपारिभाषिक-पदार्थविवृत्या च समलङ्कृत्य तेन संस्कृतं कणादतर्कवागीशकृतं भाषारत्नं नाम न्यायतन्त्रग्रन्थं संस्कृत-साहित्य-परिषत् सुमहता समादरेण मुद्रापयित्वा पुस्तकाकारेण प्रकाशयामास। तस्य 'नल-दमयन्तीयं' नाम नाटकमपि तदानीमेव परिषदा प्रकाशितं सुप्रयुक्त-ञ्चाभूत् प्रकाश्यरङ्गमञ्चे परिषन्नाट्यगोष्ठ्या। एतस्मिन्नन्तर एव 'सत्यानुभावं' नाम महाकाव्यं 'स्यमन्तकोद्धारं' नाम व्यायोगरूपकञ्च प्रणिनाय। प्रकाशितञ्चाभूत् सत्यानुभावं नाम महाकाव्यं परिषदैव

पुस्तकाकारेण। तेन विरचय्य प्रकाशितश्च संस्कृतसाहित्य-परिषत्-पत्रिकायां 'जातिबाधकप्रकरणा'ख्यो न्यायग्रन्थः।

अस्मिन्नवसरे स 'काशी-भारतधर्ममहामण्डलेन' 'विद्यावारिधि'-रित्युपाधिना सम्मानितः।

अथासौ कालीपदतर्काचार्य एकत्रिंशदुत्तरैकोनविंशतिशततम-खृष्टीयसंवत्सरे राजकीय-शिक्षाधिकृत-प्रधानपुरुषैस्तदीयगुणाकृष्टैः कलिकाता-राजकीय-संस्कृत-महाविद्यालये न्यायशास्त्रीयाध्यापकपदे कियत्कालानन्तरञ्च तत्रैव प्राच्यविद्याविभागीयतर्कप्रधानाध्यापकपदे वृतः। तत्र महाविद्यालये प्रवेशादचिरपूर्वमेव प्रतिकूलदैवगत्या तदीयस्तातः सहधर्मिणी च दिवं जग्मतुः।

यदासौ तत्र महाविद्यालये प्रविष्टस्तदा नियमेन बङ्गीयसंस्कृत-परीक्षासमितेः कृत्यपरिचालनाभारः कलिकाता-राजकीयसंस्कृत-महाविद्यालयस्याध्यक्ष एव अधिकारबलेन न्यस्त आसीत्। सोऽयं क्रमेण तर्काचार्यस्य कृत्यकुशलतां विश्वासयोग्यताञ्च समीक्ष्य तत्र बहूनां परीक्षासम्बन्धि-रहस्यकृत्यानां भारं समर्पितवान्, सोऽपि यथाधिकारं यथाप्रयोजनञ्च स्वकीयं भारमुद्वा सर्वेषां महतीं श्रद्धा-माचकर्ष। अथैवं विद्याकृत्यपर्यायेण व्यतिक्रान्ते वर्षदशके तदानी-न्तनभारतसार्वभौमैरेकचत्वारिंशदुत्तरैकोनविंशतिशततमखृष्टसंवत्सरे तर्काचार्यो वार्षिकशतरूप्यकादेशसहितेन 'महामहोपाध्याय' विरुदपदेन तथा एकषष्ट्युत्तरैकोनविंशतिशततम-खृष्टसंवत्सरे च स्वाधीन-भारतराष्ट्रपतिभिः वार्षिकसार्धसहस्ररूप्यक (कियत्कालादनन्तरं वार्षिकसहस्रत्रयरूप्यक) पारितोषिकादेशसहितविद्यामानपत्रप्रदानेन सम्मानितो बभूव। तत्कालाभ्यन्तरे तेन विरचितं 'प्रशान्तरत्नाकरं' नाम रूपकं प्रकाशितञ्च पुस्तकाकारेण परिषदा। तस्मिन्नवसरे 'संस्कृतपद्यगोष्ठी' नाम काचित् संस्कृतगोष्ठी तन्मुखपत्रभूता 'संस्कृत-पद्यवाणी' नाम संस्कृत-विचित्रचित्रपद्यादिप्रधाना काचन संस्कृत-पत्रिका च प्रवर्तिता तेन, या या वर्षत्रयं लब्धप्रचारा द्रविणदारिद्र्येण प्रणाशं गता। तदनन्तरं नियमानुगत-साधारण-कार्यकालातिक्रमेऽपि

राष्ट्राधिकृतप्रधानपुरुषानुमत्या चतुःपञ्चाशदुत्तरैकोनविंशतिशततम-वर्षं यावत् तत्रासौ यशसा कार्यं कृत्वा तस्मादवसरं जग्राह ।

महामहोपाध्यायः पूर्व्वपाकिस्थानान्तर्गतां (अधुना वांलादेशस्थां) पुरुषपरम्पराधिकृतां स्वजन्मभूमिं चिराय विसर्ज्य च पश्चिमबङ्गेषु हुगलीप्रदेशान्तर्गत-भद्रकालीनगर्यां गङ्गायाः पश्चिमतीरवर्तिन्यां वासभवनं विनिर्माय तत्रैवावस्थातुमारेभे ।

तस्मिन्नवसरे प्रणीतान्यनेन 'मानवकगौरवं' नाम रूपकं 'योगि-भक्तचरितं' नाम श्रव्यकाव्यं 'आलोकतिमिरवैरं' नाम खण्डकाव्यम्, विश्वकवि-रवीन्द्रनाथेन कृतस्य गीताञ्जलेः संस्कृतानुवादः 'गीता-ञ्जलिप्रतिच्छाया'ख्यं काव्यं खण्डखण्डपद्यकदम्बकानि च बहूनि । बङ्गभाषामय-गद्यपद्यनिबन्धनिबन्धनेऽपि महत् पाटवमस्य प्रकाशते विविधबङ्गभाषामयपत्रिकादिषु । अस्मिन्नवसरे तेन विनिर्मिता हरिरामतर्कवागीशकृतस्य 'मुक्तिवादविचार'-नामधेयन्यायप्रकरण-ग्रन्थस्य सुविस्तृता संस्कृतटीका कलिकाता-राष्ट्रिय-संस्कृत-महा-विद्यालयाध्यक्षानुरोधेन, या तद्विद्यालय-ग्रन्थमालान्तर्गतरूपेण गृहीता मुद्रापिता च ।

द्विसप्तत्युत्तरैकोनविंशतिशततमखृष्टसंवत्सरे वर्धमानविश्व-विद्यालयः सम्मानसूचकं 'डि-लिट्' उपाधिनामुं भूषितवान् ।

अथावसरग्रहणात् परमनतिचिरेण तत्रैव महाविद्यालये नव-प्रवर्तितायां महाचार्यश्रेण्यामन्यतमाध्यापकरूपेण परिगृहीतस्तर्काचार्यः कतिचिद् वर्षाणि कार्यं कुरुते । अस्मिन्नन्तरे महामहिमश्रीसीता-रामदासोङ्कारनाथेन स्वप्रवर्तित'प्रणवपारिजाता'ख्यसंस्कृतपत्रिका-यामसौ सञ्चालकतया वृतः । स्वप्रवर्तितायाम् 'आर्यशास्त्र' पत्रिकायाञ्च 'सनातनशास्त्र'-पत्रिकायाञ्च मुख्यसम्पादकरूपेण । तासु 'प्रणवपारिजात' नामधेयसंस्कृतपत्रिकायां सुसंस्कृत्य प्रकाशितः समुल्लिखितपूर्वः 'स्यमन्तकोद्धारो' नाम व्यायोगः । तत्कृतमेव 'मन्दाक्रान्तावृत्तं' नाम सुमहत् खण्डकाव्यं संस्कृत-साहित्य-परिषत्-पत्रिकायां प्रकाशितम् ।

एकदा महामहोपाध्यायस्तर्काचार्यो वाराणसेयसंस्कृतविश्वविद्यालयस्य दर्शनपरिषदा समाहूतस्तत्र न्यायवैशेषिकविभागाध्यक्षरूपेण 'न्यायवैशेषिकदर्शनविमर्श' शीर्षकमध्यक्षीयं निबन्धं वाचयामास, सोऽयं निबन्धः परतः 'सारस्वती सुषमा'ख्यायां निरुक्तविश्वविद्यालयस्य त्रैमासिकपत्रिकायां मुद्रापितः। अनन्तरञ्चैकदा स गङ्गानाथझा-स्मृतिसमारोहे व्याख्यानप्रदानार्थमामन्त्रितो न्यायवैशेषिकशास्त्रीयं विषयत्रयमधिकृत्य विशिष्टविद्वत्परिषदि निबन्धत्रयं वाचयामास, तदपि परतस्तत्रैव पत्रिकायां मुद्रापितमभूत्। सम्मानितश्च ततस्तर्काचार्यो विशेषपारितोषिकेण। अपरो ग्रन्थस्तर्काचार्यस्य 'न्यायपरिभाषा' नाम। स एष बङ्गभाषामयग्रन्थः प्रकाश्यते संस्कृतमहाविद्यालयस्य षाण्मासिकपत्रिकायां नियमेन। तस्य 'ईश्वरसिद्धिः' 'ऋतुचित्रम्' 'रवीन्द्रकृतिप्रतिच्छाया' 'नवगीताच्छाया' (गीतापद्यानुवादः), 'श्रीश्रीचण्डीप्रतिच्छाया' (चण्डीपद्यानुवादः), 'संवादकल्पलता' इत्यादयोऽपि ग्रन्थाः सन्ति। 'कलिकाता एसियाटिक् सोसाइटी' नामक ग्रन्थप्रकाशप्रतिष्ठानप्रार्थनया स्वकृतसंस्कृतटीकाप्रभृतियोजनया सुसंस्कृतस्तेन तत्त्वचिन्तामणिदीधितिप्रकाशो नाम भवानन्दसिद्धान्तवागीशकृतो ग्रन्थः, यः पुस्तकाकारेण प्राकाश्यं नीतस्तेन ग्रन्थप्रकाशप्रतिष्ठानेन। महामहोपाध्यायतर्काचार्यस्य बहवो विद्यार्थिनः सुप्रसिद्धेषु बहुषु विद्यालयेषु आचार्यपदमध्यासीना यशसा समं संस्कृतविद्यां वर्धयन्ति। तेषु आमेरिकाप्रदेशीय'हार्वार्ड' विश्वविद्यालयस्य प्रधानसंस्कृताध्यापकः ईङ्गल्स् महोदयः, कुचविहारप्रदेशीयराष्ट्रियसंस्कृतमहाविद्यालयस्याध्यक्षः अधुनावसरप्राप्तः श्रीयादवेन्द्रनाथराय न्यायतर्कतीर्थः, तस्यैव महाविद्यालयस्य अधुना नवद्वीपराष्ट्रियसंस्कृतमहाविद्यालयस्य न्यायशास्त्राध्यापकः श्रीवनकलिचरण व्याकरणतर्कतीर्थः, काँथिराष्ट्रियसंस्कृतमहाविद्यालयस्य न्यायशास्त्राध्यापकः अधुना कलिकाताराष्ट्रियसंस्कृतमहाविद्यालयस्य सांख्यशास्त्राध्यापकः श्रीनिरञ्जनस्वरूपब्रह्मचारी नवतीर्थः, कुचविहारप्रदेशीयराष्ट्रिय-

संस्कृतमहाविद्यालयस्य न्यायशास्त्राध्यापकः श्रीपञ्चानन्दतर्कतीर्थः ; कलिकाताविश्वविद्यालयस्य दर्शनशास्त्रस्य प्रधानाध्यापको न्यायशास्त्राध्यापकः श्रीगोपीनाथ भट्टाचार्यः, एम्-ए, पि-आर-एस, पाटना 'जयशोयाल रिसार्च' इन्सटिट्युट इत्याख्य प्रतिष्ठानस्य गवेषकः श्रीअनन्तलाल-ठाकुरकाव्यतीर्थः एम-ए, प्रेसिडेन्सिकलेजप्रमुखमहाविद्यालयानां भूतपूर्वाध्यापकः स्वर्गतः चिन्ताहरण चक्रवर्ती काव्यतीर्थः एम-ए, कलिकाताराष्ट्रियसंस्कृतमहाविद्यालयस्य भूतपूर्वोऽध्यक्षस्तथा वाराणसेयसंस्कृतविश्वविद्यालयस्य भूतपूर्व उपकुलपतिः अधुना संस्कृत-साहित्य-परिषत्सभापतिः डक्टर श्रीगौरीनाथ शास्त्री एम-ए, पि-आर-एस्, डि-लिट् महोदयः, वर्तमानसंस्कृत-साहित्य-परिषत्-पत्रिकासम्पादकः परिषदध्यापकश्च श्रीरामधन भट्टाचार्यः काव्य-व्याकरण-पुराणतीर्थः शास्त्री, चेत्येते सविशेषमुल्लेखमर्हन्ति ।

महामहोपाध्यायस्य द्वौ कृतिनौ पुत्रौ, तयोः प्रथमः श्रीगङ्गेशशर्मा गणितशास्त्रे एम-ए परीक्षामुत्तीर्णः कलिकातास्थ 'विद्यासागर-महाविद्यालये' यशसा समं विद्यार्थिनः समध्यापयति । द्वितीयश्च डक्टर श्री सोमेश शर्मा रसायनशास्त्रे एम्-ए, डि-फिल्, हाओड़ा-मण्डलान्तर्गत 'उत्तरपाड़ा राजा प्यारीमोहन महाविद्यालये' यशसा समं विद्यार्थिनोऽध्यापयति ।

एकोनाशीत्युत्तरत्रयोदशशततमबङ्गाब्दीयसौरश्रावणस्य एकादश-दिवसे रात्रौ सार्धाष्टमघटिकायां स्वजनान् अस्मान् शोकाम्बुधौ निःक्षिप्य साधनोचितं धाम प्राप्य अस्मत्कुलचन्द्रश्चिराय अस्तं गतः । पण्डितकुलतिलकः सौम्यदर्शनो वाचस्पतिश्छात्रेषु स्नेहप्रवणः सर्वेषु महामहोपाध्यायो नास्तीति चिन्तापि अस्माकं पीड़ादायिका । सर्वदैव वज्रनिर्घोषकण्ठस्य शब्दः श्रूयते इव । भारतजनन्या विशेषतो बङ्गदेशस्य संस्कृतभाषागौरवम् एवंविधं रत्नं विना कथं संस्कृतभाषा जीवितुमर्हतीत्येतदेव मे हृदयं दुनयति ।

---

महामहोपाध्याय-डक्टर परमपूज्यपादाचार्य्य-

## कालीपदतर्काचार्य्यपादानां

वियोगे

# विलाप-वाणी

[ विपालकः—श्रीयादवेन्द्र नाथ राय न्यायतर्कतीर्थः ]

निस्तब्धाऽमरभारतीकरगता सा कच्छपीमूर्च्छना
शान्ताः शङ्खमृदङ्गवाद्यपटहा भ्रष्टा करात्लेखनी ।
म्लानं श्वेतसरस्वतीविलपनं शून्यं मसीभाजनं
छिन्ना मौक्तिरहारगुच्छगुटिका कालीपदे स्वर्गते ।।१।।

स्तब्धं कोकिलकूजितं सुमधुरं श्रान्तं बुधानां मनः
शुष्काः कोविदकल्पपादपगताः फुल्ला लतास्तत्क्षणात् ।
देवी रोदिति पुत्रशून्यहृदया हाहेति रुक्षैः स्वरै-
र्हा साहित्यसुधाकर ! क्वनु गतः सत्तर्कचूड़ामणिः ।।२।।

वात्या वाति विमूर्छिता विगतिका प्रोच्चण्डवेगस्वना
सूर्य्यो मूर्च्छति शार्करे कुवलये संच्छिन्नदीप्तिर्मुहुः ।
चान्द्रो स्निग्धकला विलासविमला तीव्रा प्रचण्डायते
सर्वं सम्भवतीह कालकलिते कालीपदे सद्गुरौ ।।३।।

येषां रम्यवचः सुधातिमधुरं गाम्भीर्य्यसौम्यं चिरं
कण्ठान्निर्गतमात्रमेव च सदः सञ्जायते निश्चलम् ।
गङ्गाभङ्गसमं समं प्रवहति क्षीणं न कुत्रापि य-
न्नास्ते तच्छ्रुतिगोचरं शिवमये कालीपदे स्वर्गते ।।४।।

हा तात ! प्रलयः सतो भवति तैं श्रौतायने गच्छतः
स्वप्नेनापि न चिन्तितं नु सहसा सा दिव्यमूर्तिर्हृता ।
वाक्यं नो गुणसागरे स्फुरति नस्तत्संस्तुतौ कः क्षमो
नित्यास्ते गुरवो विकाररहिता देशान्तरं सङ्गताः ।।५।।

धन्या सा नवभारते विजयतां गीर्वाणवाणी नवा
यं प्राप्येव मुदान्विताऽभिरमते गीताञ्जलौ सत्कविम् ।
व्याख्यातेन च मुक्तिवादपथिको मार्गेण मुक्तिं गतः
श्रीकालीपदभूसुरः शिवतनुर्न्यायाम्बुधौ स्नातकः ।।६।।

यद्धस्ताम्बुजशोभिनी कविकृतौ लीलायते लेखनी
वाणी यद्वदनाम्बुजे स्फुटतरा ज्योत्स्नेव देदीप्यते ।
यो वर्णाश्रमपालको मुनिवरो लीनः स कालीपदे
मुक्तस्यास्य नरोत्तमस्य च कृते शोकस्य का वा स्थितिः ।।७।।

पारम्पर्य्यगतां स्थिरां व्यवहृतिं यश्चातिशुद्धाशयाद्
गृह्णन्नाचरति स्म विज्ञविबुधो नुत्नैः समं योजयन् ।
शुष्कं कर्कशतर्कवाक्यसकलं सिञ्चंश्च काव्यामृतैः
सर्वेषां रुचिरं चिरं प्रकुरुते कालीपदोऽसौ गतः ।।८।।

यश्चिन्तामणिचिन्तने निरलसः साहित्यसौधाश्रितो
भाषा यद्वदनाम्बुजाङ्गनगता रम्यं नरीनृत्यते ।
यद्वा चित्रपदा विलास-ललिता वश्येव संसेवते
श्रीकालीपदकोविदः सुरसिको लोकान्तरं प्रस्थितः ।।९।।

वाणि ! त्वं रसनां रसैकशरणां यां प्राप्य लीलायसे
येषां नूतनकाव्यनाटचरचनास्वादेन संतृप्यसि ।
साहित्ये न च केवलं सुविशदा यज्झङ्कृतिर्दर्शने
श्रोतासि क्व च तद्वचः श्रुतिसमं कालीपदे स्वर्गते ।।१०।।

कर्तव्ये दृढ़ता कृतौ कुशलता ब्राह्मीस्थितौ दक्षता
काव्ये कोमलता नये निपुणता वर्णाश्रमे हृद्यता
एवं सद्गुणराजिराजित बुधं किं देयमस्ति क्षितौ
श्रद्धागन्धयुतं गृहाण कृपया भक्तिप्रसूनाञ्जलिम् ।।११।।

स्मर्तव्या परिषद् यया तव कृतेरादौ प्रकाशः कृत-
स्तद्वा संस्कृतशिक्षणेष्वभिरतं विद्यामहामन्दिरम् ।
राजन्ते कृतयो यथा सुविपुलाः स्वर्णाक्षरे मुद्रिताः
सर्वं तत् कृपया समं परिजनैः कार्य्यान्तिरे स्मर्य्यताम् ।।१२।।

---

## अपूरणीया क्षतिः

[ निबन्धकः—श्रीविश्वेश्वर काव्य-व्याकरण-स्मृतितीर्थः ]

अद्यास्माभिर्बहुमूल्यं रत्नमेकं हापितम्, यस्य स्थानं चिराय न पूरणीयम् । तद्रत्नं खलु पण्डितशिरोमणयो महामहोपाध्याय-कालीपदतर्काचार्यमहोदयाः । मान्यमान्यास्तातपादास्ते महात्मानो नानाविषयक-पाण्डित्येनास्मान् विमोहयन्त ऐहिक-कर्मभूमि-परित्यागेनाश्रुनेत्रानस्मान् विहाय कर्मशेषांश-भोगाय विधेर्नियमनात् पारत्रिककर्मभूमिं गताः । तत्रभवतां लोकान्तरगमनादस्माकम-पूरणीया क्षतिर्जाता । सान्त्वना तु केवलं,—जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य चेत्यादिगीतायां भगवदुक्तिस्तथा—

मृत्यौर्बिभेषि किं बाल ! न स भीतं विमुञ्चति ।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ।।

इति पुराणोक्तिश्च ।

साम्प्रतं तत्रभवन्तो भारतीयानां मनस्येव जीवन्ति। तत्रभवन्तः पण्डितवर्याः फरिदपुरमण्डलान्तर्गत-कोटालिपाड़ोनशियाख्ये ग्रामे काश्यपगोत्रीयदण्डिस्वामि-वैदान्तिक-शिरोमणि-सरस्वत्युपाधिक-मधुसूदन-सहोदर-प्रमोदानन्दपुरन्दराचार्य्य-तनुज-श्रीनाथचूड़ामणि-वंशे तर्कशास्त्र-निष्णात-हरिदासतर्कतीर्थमहाशय-गृहमलङ्कुर्व्वाणाः श्रीनाथ-चूड़ामणि-चूड़ामणिरूपेण जाताः। आकरे पद्मरागाणां जन्म काचमणेः कुतः। एते महाभागाश्छात्रजीवने विद्यया विनयादिगुणैः परीक्षासु प्रथमस्थानाधिकरणेन राजकीयवृत्तिलाभेन च यथा तात्कालिक-छात्राणां श्रेष्ठा आसन् तथैवाध्यापकानां परमप्रीतिपात्राण्यपि। एतन्महाभागगुणेनाध्यापका अपि अध्यापकसमाजे श्लाघ्यतमा जाताः। अपि च एते महाभागाश्छात्रावस्थायामपि सभायां सभायां गद्यपद्यमयसंस्कृतवाचा केवलपद्यमयसंस्कृतवाचा च सभ्यान् समतोषयन् नवां नवां ख्यातिमलभन्त साधुवादानगृह्णंश्च।

संस्कृतनाटके अत्रभवन्तो नाट्याचार्य्या आसन्। अभिनय-नैपुण्येन दर्शकानां मानसमाकृष्टवन्त आभिनयिकच्छात्रानभिनय-निष्णातान् कृतवन्तश्च।

तर्कशास्त्रं दुर्गमम्। तत्रापि नव्यन्यायखण्डोऽतिदुर्गम इति सर्व्वेषामेव ज्ञातम्। परं दुर्गमे तर्कशास्त्रेऽपि अत्रभवन्तश्चरम-परीक्षायां प्रथमस्थानमधिकृत्य यशस्विनः सन्तस्तर्काचार्य्योपाधिं लब्धवन्तः। दृश्यते अनेके तार्किकाः काव्ये नीरसा इति, अत्रभवन्तस्तु सदातनरसभाण्डमित्युक्तेऽपि मन्ये नातिरिच्यते तद्वाक्यम्। न केवलमत्रभवन्तस्तर्कशास्त्रेष्वेव निरतिशय पाण्डित्यमलभन्त काव्यशास्त्रेऽपि तथैव। काव्यशास्त्राध्यापनेन बहुविधकाव्यग्रन्थ-रचनया काव्यसमालोचनया च अत्रभवन्तो लब्ध-यशसस्तत्रापि अमरत्वं लेभिरे। नेदमत्रभवतां स्तुतिवाक्यम्, परं पाण्डित्यस्वरूपकथनमात्रमेवैतत्।

रामनाथ-सिद्धान्तपञ्चानन-नरनारायणतर्करत्न-कालीकुमारतर्क-तीर्थ-प्रभृतिभिर्भारतविख्यातैर्भारतरत्नैर्बहुभिः पण्डितैरेकदा कोटालि-

पाड़ाऽपि नवद्वीपसमासीत् । तत्र बह्वीभिः संस्कृतचतुष्पाठीभिः सह एकः संस्कृत-महाविद्यालयः सुविख्यात-पण्डितैः परिचालितो बभूव । किन्तु कालक्रमेण इङ्गराजशासनशेषकालेऽसौ नष्टः । तेन कोटालिपाड़ायां संस्कृतचर्चा मन्दीभूता । संस्कृतस्यैवं दशां विचिन्त्यातुशोचद्भिरत्रभवद्भिः कालीपद-तर्काचार्य्यमहोदयैस्तन्महाविद्यालयपुनःस्थापनमानसैः स्वग्रामे उनशियायां प्राक् एका संस्कृतपाठशाला प्रतिष्ठापिता । यत्र अहमप्येकोऽध्यापक आसम् । किन्तु इङ्गराज-शासनावसाने भारतान्तर्गतस्य तदंशस्य पाकिस्थानदेशान्तःपातित्वात् पाकिस्थानीयानाम् अत्याचारेणात्याचारिता कोटालिपाड़ा ध्वस्ता, अतएव सा पाठशालापि नाशमुपगता वयञ्च स्थानच्युताः । एतेनात्रभवन्तो भृशं मर्माहताः सुचिरमदुःखायन्त । कलिकाता-संस्कृतमहाविद्यालये अत्रभवन्तो न्यायशास्त्राध्यापका आसन् । अत्रभवतामध्यापनानैपुण्येन नानाविधगुणैश्च न केवलम् अपरे अध्यापकाः परं कर्त्तृपक्षीयाश्छात्राश्च सर्व्वे एव एवं मुग्धा अभवन् यथा साम्प्रतमपि ते सर्व्वे अत्रभवतां तिरोधानेन एषु स्मरणमागतेषु साश्रुनेत्रा भवन्ति । स्वग्रामे संस्कृतपाठशाला-स्थितिकाले अत्रभवतां कलिकातायामवतिष्ठमानानां मनः स्वप्रतिष्ठापितपाठशालायां लग्नमासीदिति अत्रभवद्भिः सह पाठशालोन्नत्यर्थमालपनेनास्माभिर्ज्ञातिम् । अत्रभवत्सु ग्रामं गतेषु सभानुष्ठानैरभिनयेन च सुप्ती ग्रामस्त्यक्तसुप्तिर्बभूव । अत्रभवन्तोऽजातशत्रवो निरहङ्कारश्च आसन् । बहवः पण्डिताः पाण्डित्यमदमत्ता दृश्यन्ते; किन्त्वत्रभवत्सु तर्काकार्य्य-महोदयेषु तदभावः परिलक्षितः । उदारस्वभावा अत्रभवन्तः साधारणैरपि सदा सदालापेन तान् समतोषयन् । विद्या-विषयकमीदृशं प्रतिष्ठानं स्वल्पमेवासीत् येनात्रभवन्तः श्लिष्टा नासन् । सर्वत्रैवात्रभवन्तो लब्धप्रतिष्ठा अभवन् । अत्रभवत्कृता ग्रन्थास्तथा सरलसंस्कृतभाषासम्बद्धा यथा साधारणज्ञानानामपि श्रवणमात्रेण पठनमात्रेणैव च तेषां प्रतिवाक्यं स्थूलार्थबोधो हृद्गङ्गमो भवति ।

कर्मयोगिनामत्रभवतां लोकान्तरगमनं संस्कृतभाषायाः समुन्नतौ दौर्भाग्यमेव सूचयति। यतस्ते महात्मान आसन् संस्कृतगत-प्राणाः। साम्प्रतं तत्रभवन्त इह न सन्ति किन्त्वनेके संस्कृत-भाषाभिज्ञा दृश्यन्ते ये भारतशासक-शासनासनयुक्ताः। इह ये न वाक्स्वाधीनाः, ते परतन्त्रा इति मन्यते। तथाहि भारतीय-प्रदेशानामैकतामूलं संस्कृतभाषा यद्यपि सा देशान्तरेषु वैदेशिकैरकुण्ठ-माद्रियते व्यवह्रियते च तथापि संस्कृतभाषाया जन्मभूमौ भारते एषा भाषा बहूनि दिनान्युपेक्ष्यते। इङ्गराजराजत्वकाले कथञ्चित् सा आदृतासीत्। इङ्गराजशासनावसाने एतावन्ति दिनानि सा धुक्धुकायते स्म। साम्प्रतम् अवज्ञातसंस्कृतभाषाणां भाषाविदां मतम्––संस्कृतभाषा यतो नार्थकरी अतस्तया किं फलमिति। श्रूयते एतत्पूर्वं पूर्वशासकानामप्येवमेव मतमासीदिति। भारतशासके असन्तुष्टे स्वार्थहानिः स्यात्, तस्मिन् सन्तुष्टे तु स्वार्थः समधिकफलदो भवेदिति—मनसि कृत्वा, भारतीयानामैक्यमूले संस्कृतभाषायां गतायामपि तेषां किमपि न यात्यायाति वा इति मनसि कृत्वा च मन्ये तेषु केचिद् वचनहीनाः, केचिच्च संस्कृतभाषां विताड़यितु-कामाः। बहुभाषाभाषि भारतम्। यद्यपि प्रदेशा आचारादिभि-र्भिन्नास्तथापि तेषां हि धर्मकार्यार्थिकमन्त्रतन्त्राणि संस्कृतभाषयैव रचितानि सर्व्वैः स्वीकृतानि च। भारतीयानां चतुर्णां वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणाम् आजन्म मृत्युपर्यन्तं सर्व्वाणि करणीय-कार्याणि तथा राज्ञो राज्यशासनप्रणाली, किमधिकं सर्व्वे विषया एव मन्वादिभिः शास्त्रकारैः संस्कृतभाषया प्रकाशिताः। एतदेव भारतीयमैतिह्यम्. एषैव भारतीया कृष्टिः, एतया भाषयैव वयं भारतीया इति सर्वे गर्वमनुभवन्ति। अन्येऽपि स्वधर्मचर्यासौकर्यार्थम् ऊर्दू भाषामाद्रियन्ते। भारतीयानां गर्व-मूलं संस्कृतभाषा यदि न तिष्ठति तदा भारतस्य सर्वाः संस्कृतय एव क्रमेण विनङ्क्ष्यन्ति। मन्वादयः सर्व्वे धर्मग्रन्था अपि मूल्यहीना भविष्यन्ति सर्वासां भारतीयभाषाणां जनन्या संस्कृतभाषया निबद्धाः।

हन्त ! संस्कृतभाषायाः संस्कृतानुरागिणाञ्च साम्प्रतं कीदृशी अवस्था, अद्य मान्यमान्या वाक्स्वाधीना वाग्मिनो महामहोपाध्यायाः कालीपदतर्काचार्यमहाशया अजीविष्यंश्चेत् भारतशासकस्तत्रभवत्सु 'संस्कृतभाषा तिष्ठेत् न वा' इति विवेचनार्थं भारं प्रादास्यत् । तत्रभवन्मतम् अचिन्तयिष्यदग्रहीष्यच्च । अपिच अपरे संस्कृतानुरागिणोऽपि तद्बलबलीयांसस्तीव्रप्रतिवादमकरिष्यन् । मन्ये—एवमवस्थायां संस्कृतग्रन्थकृद्भिः संस्कृतग्रन्थाः सुगमा कर्त्तव्याः । समासादीनां बाहुल्यं शब्दादीनां काठिन्यं च त्यक्तव्ये । एतेनैबोपायेन यदि नाम छात्राणां संस्कृतभाषाशिक्षायाम् आग्रहो भवेत् । पण्डितवर्याणां कालीपदतर्काचार्य्यमहोदयानां तिरोधाने विशेषेण संस्कृतभाषाया या क्षतिरजनि, सा कथमपि नैव पूरणीया स्यात्, कदा तत्रभवतां स्थानं पूर्णं भविष्यतीत्यत्र महान् सन्देहावकाशो वर्त्तते ।

'पितुर्गुणं सुत एव धत्ते' इति लौकिकवाक्यस्य सार्थकतापि तत्रभवतां पारलौकिककृत्यदर्शनार्थं गतैरस्माभिः प्रतिपदं तदीयपुत्राणां विनयादिनानागुणैः परिलक्ष्य प्रणिधानेनानुभूता । किं बहुना तत्र गमनादारभ्य प्रत्यागमनपर्यन्तं तर्काचार्य्यमहोदयपुत्राणामस्मासु व्यवहारो महति शोकेऽपि आनन्दं विवर्धयन् पितुर्गुणमित्यादिवाक्यं पुनः पुनर्मां स्मारितवान् ।

पितृगुणानुकारिणस्ते पुत्रा ईश्वरेच्छया दीर्घायुषो भवन्तु इत्यस्माकं प्रार्थना सिद्धा भवतु ।

—o—

# तर्काचार्य्यानुध्यानम्

[ निबन्धकः—श्रीहेमन्त कुमार तर्कतीर्थः,

कांथि राष्ट्रिय संस्कृत महाविद्यालयाध्यापकचरः । ]

योऽसौ कोटालिपाड़े फरिदपुरगते भूमिदेवान्ववाये
लब्धात्मा बाल्य एव प्रखरधिषणयाऽप्रीणयद् धीरधुर्य्यान् ।
ऊहापोहार्थवित्त्यात्मधृतिभिरपरैश्चाखिलैर्धीगुणैः स्वैः
पाठाभ्यासे नियुक्तो गुरुगणमनसां विस्मयाधानहेतुः ।।१।।

आकृत्या सोमसौम्यः स्फुरदमलरुचिभ्राजितास्यः सुहृद्भ्यो
दत्तापूर्व्वप्रियश्रीः स्मितसुभगवचोमोदमानाननेभ्यः ।
अङ्गैर्लावण्यलीलाङ्कुरनिकरसमालिङ्गितैः श्रीङ्गिताढ्यैः
पित्रोः प्रीतिं व्यतानीच्चपलमधुलिहां काकपक्षैः सपक्षैः ।।२।।

कैशोरे नैशशय्यातलवलनवशान्निर्दलत्कोमलाङ्ग-
स्तातोत्सङ्गे शयानः समुचितकथिकाप्रीतिनिर्व्वेशमग्नः ।
स्वीयावेशातिशय्यात् सुतहितनिहितध्यानतातप्रयत्नात्
श्लोकाभ्यासान् स चक्रे श्रुतिसहितमतिप्रस्फुरन्नीतिबोधान् ।।३।।

गैर्व्वाणी कापि वाणी जगति जयति या व्यासवाल्मीकिजुष्टा
तस्यां तस्यातिमात्रं रतिरुदयमगात् प्राक्तनीवातिबाल्ये ।
कालापालापलीलाश्रुति-सुमति-समाविष्टशब्दानुशिष्टः
पारं प्रायात् स वैयाकरणवरवृतज्ञानवारांनिधीनाम् ।।४।।

नानाशास्त्रेषु दाक्ष्यादुपरचितमतेर्ज्ञानदीक्षागुरूणां
वाग्भिः प्रासङ्गिकीभिर्विवृतबहुमताभिः सदा सुश्रुताभिः ।
साहित्ये बुद्धिरग्र्या सहजरसवशात् काप्यभूत् प्रोज्ज्वलन्ती
नाट्ये दीव्यत्त्रिवर्गेऽस्फुरदथ विमलानर्गलाऽस्य प्रवृत्तिः ।।५।।

लोकप्रीतिं स नाट्याभिनयनिपुणतासम्भवां नातिबालो
लेभे पुंभूमिकास्थोऽप्यधिगतरमणीभूमिकोऽपि स्वदेशे ।
दैव्या दैश्या च वाण्या कुशलकविकृते रूपके रूपकारः
स्वल्पीयस्येव कालेऽभवदथ कलितानल्पकीर्त्तिप्रकल्पः ॥६॥

कैशोरे याति दूरं विलसति च नवे यौवने धीरसत्त्वे
गाम्भीर्य्योद्रिक्तमन्द्रध्वनितमुदलसत् कण्ठलग्नाऽस्य वाणी ।
देहे दीप्तिप्रवाहेऽस्फुरदथ सुषमाऽपूर्व्वलावण्यगेहे
शार्दूलद्वन्द्वयुद्धोचितसमुपचितिग्रन्थिले लोहसारा ॥७॥

सोऽयं स्त्रीभावमाप्तोऽभिनयविधिवशान्मोहयामास कामै-
रङ्गै रङ्गालयस्थान् कुसुमशरकलाव्यञ्जनाशीललीलैः ।
पुंभावे भूरिधामा स्मरहरनयनज्योतिषां स्वणभासा
कामो वा कामिनीनामकुरुत नयनप्रीतिमालिङ्गिताङ्गः ॥८॥

साहित्यध्यानमग्नोऽलभत स विपुलां सिद्धिमन्यैर्दुरूहां
सत्त्वोद्रेकादखण्डः सपदि समभवद् यच्चिदानन्दभूमा ।
मार्गे सारस्वतेऽस्मिन् सहृदयरसविद्व्रातसञ्चारपूते
स्वच्छन्दानन्दधारानवरतमधुरेऽभूद् भ्रमन् काव्यतीर्थः ॥९॥

सद्गोष्ठ्यां मातृभाषासममतिसरला बोधगम्या समेषां
गद्ये पद्येऽनवद्याऽनवरतमुदभूत्तस्य गीर्व्वाणवाणी ।
तद्दृष्ट्वा विस्मितानां मनसि समभवन्मानवानां नवीनः
को वाऽयं? कालिदासो विहितबहुतपाः शङ्करो वाऽवतीर्णः ॥१०॥

मातापित्रोः स शर्म्मोदयमधिकतरं साधयन्नेधिताशः
पारावारोपमानामधिजिगमिषया श्रेष्ठविद्यान्तराणाम् ।
सापत्न्येऽधिष्ठिताया नवपरिणयनं प्राप्तवत्याः स्ववध्वाः
सान्निध्यं त्यक्तुकामः किल कलितमना दूरदेशप्रयाणे ॥११॥

मूलाजोड़े स विद्यावसतिमुपगतस्तार्किकाग्रेसराणां
ख्याताख्यानां शिवश्री-शिवभणित-सुधीसार्वभौमोत्तमानाम् ।
शिष्यत्वं प्राप्य तस्मादधिगतनिखिलन्यायशास्त्रार्थतत्त्वः
प्राज्ञस्तर्के नवीने जरति च खरया प्रज्ञयाश्वेव जातः ॥१२॥

भाष्ये वात्स्यायनीये श्रममतिशयितं वार्त्तिके चापि कृत्वा
तात्पर्य्याख्येऽपि वाचस्पतिविवृतिवरे यत्नलब्धावगाहः ।
तट्टीकां चापि शुद्धिं प्रथमपरिगतां वर्द्धमानप्रकाशां
भाष्यं प्राशस्तपादं शुभमधिगतवान् कन्दलीकारजुष्टम् ॥१३॥

काणादे गौतमीये स जयति कृतधीर्नव्यगङ्गेशवाचां
तत्त्वे निष्णातबुद्धिः प्रमथितमथुरानाथवाङ्मर्म्मजातः ।
गादाधर्य्याशयज्ञः प्रचितरतिपथ-प्रौढ़कान्ताविलासी
शय्यायां जागदीश्याः सकलकलकथालालनेऽभूदभिज्ञः ॥१४॥

इत्थं चिन्तामणीयैरतिगहनकथाकौशलालोकपातै-
र्ध्वस्ते ध्वान्तेऽथ मत्या मननकुशलयाऽमन्यतात्मानमाढ्यम् ।
दृष्टा ग्रन्थान्तराणां विवृतिरपि समालोचने स्वच्छचिन्ता-
धारा धारासमानाप्रतिहतगमना चापि यस्याः प्रभावात् ॥१५॥

वैयासे कापिले चाखिलसुजनधने दर्शने दत्तदृष्टिः
प्रस्थानानां त्रयीषु प्रथितमतिरभूत् प्रज्ञयोन्नीतमार्गः ।
लब्ध्वा विद्याः समस्ताः स खलु बुधवरस्तत्प्रभाभासुरश्री-
स्तर्काचार्य्याख्ययाऽभूद् जगति परिचितो विद्वदाराधनीयः ॥१६॥

बङ्गीया राजधानी क्षितिमुकुटमणिर्नाकलीकार्थनीया
या विद्वद्वासभूमिः कलि-भुवि कलिकाताख्यया ख्यातिमाप्ता ।
तस्यां विद्यालयः संस्कृतसहितमहापूर्व्वको यः पुराण-
स्तत्रासौ तर्कशास्त्रे गुरुपदमधिकृत्याभजत् ख्यातिमुच्चैः ॥१७॥

दैवी वाग् दैवतेऽस्मिन्नभवदतिरसा प्रावृषेण्येव मृत्स्ना
कापेयीं शाम्भवीं वा करकलनवशाद् या क्षणाद् याति मूर्त्तिम् ।

तद्वत् सैषापि भावानभजत सुतनूरस्य चित्तानुरूपान्
नाकानाकाननेकानविदितविदितान् सार्वभौमांश्च भौमान् ॥१८॥

भाषा लोकप्रयोगाननुसरति भुवि स्वल्पमास्ते चिरत्नं
प्रायो नूत्नाः पदार्थाः प्रतिदिनमवनौ भूरिशः सम्भवन्ति ।
कः शब्दस्तत्र शक्तो भवतु न खलु यत् पूर्व्वमासीत्, तदेषा
जिज्ञासाऽगान्निवृत्तिं कृतिवरविहिताच्छब्दयोगप्रभावात् ॥१९॥

शक्ताः संकेतशब्दा भुवनतलगता भान्ति भुरिप्रकाशाः
स्रष्टव्यास्तन्नवीना न खलु भवति सा दीनता देववाण्याः ।
सैषानन्तप्रकृत्यादिभिरतुलनिकानन्तशक्तिः स्वभावात्
तस्याः काऽनन्तशब्दप्रसवमहिमहृद्दीनतायोगवार्त्ता ? ॥२०॥

एवं किञ्चित् कदाचिद् व्रजति यदि मनोमार्गमस्यानुरूपः
शब्दस्तन्मात्रसृष्टः सहजकृतिरभूच्छ्वासवत सम्प्रयुक्तः ।
धन्या विद्वत्सभासु प्रवचनमहिमाऽनर्गलो दीर्घकालं
साकाङ्क्षो योग्यताभृज्जलमिव सततासत्तिमैच्छब्दराशिः ॥२१॥

वक्तव्ये नूतनत्वं न यदि च तदुपस्थापनाभङ्गिरम्या
वक्तव्ये नूतनत्वं सृजति च तदुपस्थापनाभङ्गिरन्या ।
वाचां प्राचीनतायामपि भवति नवा योजना सावकाशा
प्रायस्तस्याः प्रभावाद्रमयति विदुषो नूतनार्थप्रकाशः ॥२२॥

एतत् सर्व्वं तदीयां कृतिततिमसकृद्भावयित्वावभायाद्
योऽसौ प्राचीनमार्गे भ्रमणमपिचरंश्चिन्तयत्यन्यथाऽपि ।
दीपस्यैव स्वभावः स तमसि सकलं गूढमर्थं व्यनक्ति
स्वात्मानं चोपधत्ते जननयनपथे सर्व्वतः सुप्रकाशम् ॥२३॥

सानुस्वारा विसर्गाः प्रतिपदमसकृत् संघशः सञ्चरन्तो
भूयांसः संस्कृतेऽस्मिन् शिशुजनमनसां भीतिमुत्पादयन्ति ।
तेषां ह्रासेन तेषां शमयितुमिव तां लोपसन्धिक्रियाभि-
र्भाषामाशानुरूपैरपि सुभगपदैर्नीतवान् कोमलत्वम् ॥२४॥

अध्यात्मग्रन्थरत्ने बुधजनविदितें मुक्तिवादेऽस्ति टीका
सूक्तिर्या जागदीशी तदुपरि विहिता दीपिका कापि भव्या ।
भाष्ये प्राशस्तपादे परिचितिमहती कन्दली श्रीघरोया
तस्यां काञ्चिद् व्यधासीद् विवृतिमखिलवैशेषिक-
प्रक्रियाढ्याम् ।।२५।।

टीकैका हारिरामीं कृतिमनुविहिता लोपमापद्यमानां
ग्रन्थागारेषु जीर्य्यल्लिपितनुशकलां कालकीटक्रियाभिः ।
नाना-सद्दर्शनानामुपरि बहुमतालोचनव्यक्तरूप-
व्याख्यानानि प्रदत्तान्यसकृदधिबुधक्षेत्रविद्वत्सभासु ।।२६।।

वक्त्रं चन्द्राभमासीद् वपुरतिरुचिरं कामरूपाभिरूपं
हासो ज्योत्स्नाप्रकाशः सततमुदलसद्दीप्तिविद्योतिताशः ।
दन्ता मुक्तावदाता नयनहरणकृच्छोभनो हस्तलेखो
हा हा किन्तत् तदीयं न यदतिमधुरं नापि सर्व्वातिशायि ।।२७।।

काव्यं पीयूषवर्षि प्रमदनकरणं भाषणं मानवाना-
मालापः प्रीतिदायी परमसुजनता दुर्लभा पण्डितानाम् ।
साहित्ये दर्शनादौ बहुमहिमधराः सन्निबन्धा निबद्धाः
हा हा किन्तत् तदीय न यदतिमधुरं नापि सर्व्वातिशायि ।।२८।।

किञ्चिन्नाट्यं प्रकृष्टं विरचितममुना शान्तरत्नाकराख्यं
नाट्यं चान्यत् सुधन्यं खलु नलदमयन्तीयनाम्ना प्रसिद्धम् ।
काव्यं सत्यानुभावं जगति परिश्रितं श्लाघ्यनानागुणाढ्यं
हा हा किं तत् तदीयं न यदतिमधुरं नापि सर्व्वातिशायि ।।२९।।

तोषस्तस्यातिमात्रं गुणवति सुजने स्थायिसम्प्रीतिरम्यो
वैदुष्यं निष्कलङ्कं परिचितिमगमद् यस्य किञ्चित् कदाचित् ।
स्थाने कुण्ठाविमुक्ता स्तुतिवचसि रतिः प्रायशो दुर्लभा या
हा हा किं तत् तदीयं न यदतिमधुरं नापि सर्व्वातिशायि ।।३०।।

सोऽयं निर्मत्सराणां सकलसुमनसां वन्दनीयोऽतिधन्यो
मान्यैः सम्राड्भिरुच्चैर्गुणमुदितमनोभिः समाराधितोऽभूत् ।
अर्थैर्मानैस्तथोपाधिभिरपि तुलनाहीनलोकोपलभ्यै-
र्नित्यं निष्कुण्ठनीराजितचरणयुगः प्रीतिकृत् पण्डितानाम् ।।३१।।

पत्र्याः सम्पादनायां परिषदि समगां तस्य यत् साहचर्य्यं
पुण्यं मन्ये प्रशस्तं गतजनुषि कृतं वर्षभोग्यं तदासीत् ।
तल्लेखं विन्दुमत्यां मम लिखितमभूत् पद्यवाण्यां कदाचिद्
यत् तत् संस्मृत्य चेतः स्पृशति मम परं भाग्यवत्त्वाभिमानम् ।।३२।।

नाना मासिकपत्रिकाः कृतपदास्तल्लेखनीसम्भवा-
स्तासां लोकरतिं व्यधत्त सुचिरं सम्पादनाकर्म्मणा ।
आ मृत्योर्न विरामभाक् सुललितैर्लेखप्रसूनाञ्जलि-
स्तोमैः सन्तनुते स्म शोभनतरां सारस्वताराधनाम् ।।३३।।

विश्वेषां सुधियां चिरान्तरचरो विद्वद्वरेण्याग्रणीः
राज्ञा श्लाघ्यमहापदद्वययुतोपाध्यायशब्दार्च्चितः ।
स्वाधीनेऽपि च भारते बहुगुणैर्मानादिभिर्मानितः
स श्रीमाननयच्छ्रियं सुमहतीं 'डी-लिट्'पदं स्वाश्रितम् ।।३४।।

त्वन्नामामृतसम्मितं स्मृतिपुटे विद्वद्गृहाभ्यन्तरे
बालानामपि धीर ! दर्शनरसो निर्व्वेशमाप्तस्त्वयि ।
त्वं श्रीमान् जगतीतलामृतकरो विद्यासुधासम्पदा-
मेको भाजनतां गतो विजयसे राजेश्वराराधितः ।।३५।।

साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा भृशकर्कशे तवसमं लीलायिता भारती ।
सर्व्वेषां ननु राजतां स्मृतिपथे वाक्कायकर्म्मोच्चयैः
शास्त्रारण्यवरेषु तेऽनवरतं शार्द्दूलविक्रीडितम् ।।३६।।

——०——

## तर्काचार्य्यवृत्तम्

[ निबन्धकः—दीनानुजः श्रीकार्त्तिकचन्द्र चक्रवर्ती ]

विद्यावतां वृत्तमालोचयितुं विद्यावन्त एव प्रभवन्ति, न खल्वविद्वांसः। अतएव, विद्यार्णवपारङ्गमस्य विद्वद्वरेण्यस्य महामहोपाध्याय-महाचार्य्यस्य तर्काचार्य्यस्य वृत्तकथने साभिलाषः प्रांशुलभ्ये फले लोभाद् उद्बाहुवामन इवोपहास्यतां लभ इत्यत्र नास्ति सन्देहः। तथापि महात्मनां दर्शनेन स्पर्शनेन वृत्तकथनेन च पुण्यं भवतीति विचिन्त्य दीनेन मया संक्षेपतः किञ्चित् निवेद्यते।

अस्ति पूर्व्वबङ्गेषु—अधुना वांलादेशेषु, फरिदपुरविभागे कोटालिपाड़ानामा कश्चिद् भूमिभागः, यत्रासंख्या विशिष्टा ब्राह्मणपण्डिताः सुखेन निवसन्ति स्म। तत्रैवोनशियाजनपदेऽद्वैताचार्य्यमधुसूदनसरस्वतीजन्मपूते काश्यपवंशे, दारिद्र्यदुष्टे ब्राह्मणगृहे महामहोपाध्यायतर्काचार्य्यस्य जन्म।

अस्य पिता विशिष्टनैयायिकप्रवरस्तर्कतीर्थोपाधिको निष्ठावान् ब्राह्मणो हरिदास-देवशर्म्मा, माता च जगन्मातेव परमकल्याणमयी सीतासुन्दरी देवी।

अल्पे वयसि विवाहे सत्यपि सीतादेव्या दीर्घकालमपत्यसम्भावनामदृष्ट्वा, देवद्विजे परमश्रद्धावान् साधूत्तमो हरिदासस्य पिता हरकुमारदेवशर्मा वंशलोपभयाकुलः स्वभावसिद्धया दैवश्रद्धयाविद्धमानसः, पौत्रलाभकामनया विशुद्धैर्विप्रैः श्रीश्रीचण्डीशतावृत्तिपाठमकारयत्। ततस्तस्यां सीतायां हरिदासस्य क्रमाच्चत्वारस्तनयाः समुत्पन्नाः, येषामाद्यस्तर्काचार्य्यः। देवताप्रसादाल्लब्धोऽयं पौत्र इति मनसि कृत्वा देवशिशूपमस्य बालस्य पितामहो यथाकाले 'कालीपद' इति नामाकरोत्।

अथ बाल्ये वयसि समाप्तायां प्राथमिकशिक्षायां, शैशवेऽतिक्रान्ते पिता स्वेच्छया पाश्चात्त्यविद्याशिक्षणार्थं कालीपदं कलिकातानगरीमानीय यथायोग्यविद्यालये तं प्रवेशितवान् ।

किन्तु विधातुरिच्छान्यप्रकारासीत् । यतः कियत्कालानन्तरमेव कालीपदो रोगाक्रान्तोऽभूत् । अतो देहस्यासुस्थतया विद्यालयं परित्यज्य स्वदेशं गतः । तत्र च पितृव्यसकाशे संस्कृतं शिक्षितुमारेभे ।

कियत्कालेनैव स्वदेशे अंशतः शब्दशास्त्रमधीत्य पुनः कलिकातामागत्य विशिष्ट-वैयाकरणस्य भुवन-विद्यारत्नमहोदयस्य समीपे तत्पाठं समाप्य अचिरेणैव कालेन व्याकरणतीर्थोपाधिपरीक्षामुत्तीर्णः ।

बाल्यादेव कालीपदस्य काव्ये महाननुराग आसीत् । अतः परमसौ साहित्ये विशेषज्ञानलाभार्थं मूलाजोड़संस्कृतमहाविद्यालये काव्यशास्त्रस्याध्ययनार्थं गतः । तत्र काव्यं पठन्नेवासौ परं यशो लब्धवान्, काव्यतीर्थपरीक्षायां च प्रथमं स्थानं लब्ध्वा ससम्मानमुत्तीर्णः ।

अस्मिन्नवसरे तेन सुरभाषया नलस्य वृत्तमवलम्ब्य 'नलदमयन्तीयं' नाम सुमधुरं नाटकमेकं विरचय्य सतीर्थैः सह सगौरवं तत्राभिनीतम् । ततः प्रभृत्येव तस्य देवभाषया गद्यपद्यमया विविधनिबन्धा नानास्थानीयासु पत्रपत्रिकासु प्रकाशिताः ।

पिता यस्य नैयायिकोत्तमस्तस्य न्यायशास्त्रे स्पृहा स्वाभाविक्येव । अतएवासौ तर्कशास्त्रस्याध्ययनाय गौतमसदृशनैयायिकधुरन्धरस्य महामहोपाध्याय-शिवचन्द्र-सार्व्वभौमस्य सकाशे सुचिरं स्थित्वा तर्कशास्त्रमधीत्य तीर्थपरीक्षायां प्रथमं स्थानं प्राप्य सुवर्णकेयूरादिपुरस्कारेण भूषितः । पितुरप्यधिको गुरुः सार्व्वभौमः परमप्रीत्यातिस्नेहेन च तं कालीपदं 'तर्काचार्य्यं' इत्युपाधिनालंकृतवान् ।

काव्ये व्याकरणे तर्के च तीर्थोपाधिषु सत्स्वपि गुरुदत्तमुपाधिमेव गुरुतमं मत्वा तमेवासौ नाम्नि धत्ते । अतः परं स केवलं 'तर्काचार्य्य' इति नाम्ना ख्यातः ।

न खल्वविघ्नसङ्कुलं मानवजीवनं रोगशोकविनिर्मुक्तं वा। किन्तु न तेन ज्ञानवन्तो मुह्यन्ति। तर्काचार्य्यस्य जीवनेऽपि विघ्ना बहुशः समागताः, किन्तु न कदापि तमभिभवितुं कर्त्तव्य-पथाद् विचालयितुं वा शेकुस्ते। पठद्दशायामपि तस्य परिजन-परिपालनाय पितुः साहाय्यार्थमर्थोपार्ज्जनेन प्रयोजनमभूत्। अतएव तेन कियत्कालं कस्मिंश्चित् विद्यालये शिक्षकतापदं गृहीत्वा कियत्कालञ्च अर्थविनिमयेन विविध-साहित्य-ग्रन्थानां टीका रचयित्वार्थोपार्ज्जनं कृतम्।

अथ समाप्तेऽध्ययनकाले स अध्यापनायामात्मानं नियोजितवान्। प्रथममेव स नवप्रतिष्ठिते संस्कृतसाहित्यपरिषद्विद्यालयेऽध्यापकत्वं गृहीत्वा नानाशास्त्रेषु बहुशिष्यानतन्द्रितः प्राध्यापयत्। अस्मिन्नेवावसरे तेन साहित्ये दर्शने च टीकारूपाः स्वतन्त्राश्च बहवो ग्रन्था निर्म्मिताः। येषां कतिपये ग्रन्थाः प्रीत्या परिषदा प्रकाशिताः केचिच्च प्रकाशिता अपरैः। संस्कृत-साहित्य-परिषत्-पत्रिका-सम्पादन-विधौ स पूर्व्वं सह-सम्पादकस्ततः सम्पादकोऽभूत्, यत् पदं मृत्युदिवसपर्य्यन्तं सादरं धारयामास।

ततः कियत्कालादनन्तरमेव तर्काचार्य्यो राजकीय-संस्कृत-महाविद्यालये अध्यापकतामगात्। तत्र महतोत्कर्षेण बहून् शिष्यानध्याप्य ग्रन्थग्रन्थनकर्म्मादिभिश्च सुमहद् यशोऽलभत। एवञ्च तस्य पाण्डित्यं स्वदेशमतिक्रम्य विदेशेऽपि विस्तारितमभूत्। येन बहवो वैदेशिकाः शिक्षार्थिनस्तत्सकाशमागत्य शिष्यत्वं गृहीत्वा आत्मनो धन्यानमन्यन्त। तेषामन्यतम आमेरिकादेशस्थ-हार्भार्ड-विश्वविद्यालयस्य प्राच्यविभागीय-प्रधानाध्यापको डाः ईङ्गल-महोदयः। कस्यचिद् ग्रन्थस्य भूमिकायां तेनैवोक्तम्—"आचार्य्यस्तर्काचार्य्योऽनन्तज्ञान-जलधिरिव। तस्य पादच्छायायामुपविश्य मया तज्जलधेः कतिपय-बिन्दव एव पीताः। यदि जीवत्कालं तत्सविधेऽहमस्थास्यं तदा धन्योऽहमभविष्यमिति"।

अचिरकालेनैव तर्काचार्य्यो राजकीय-संस्कृतमहाविद्यालये

प्राच्यविभागीयप्रधानो मनोनीतः। १९४१ खृष्टाब्दे इङ्गराज-शासिते राज्ये तत्कालीनराष्ट्रनियामकास्तं 'महामहोपाध्याय' इत्युपाधिना भूषितवन्तः। श्रीशृङ्गेरीमठाधीशः शङ्कराचार्य्यस्वामी तस्य न्यायशास्त्रेऽसामान्यां प्रतिभामनुभूय तस्मै 'तर्कालङ्कार' इत्युपाधिं दत्तवान्। तर्काचार्य्यस्य पाण्डित्यं कस्मिन्नपि एकविषये सीमाबद्धं नासीत्, स खलु सर्व्वशास्त्रविशारद इति मत्वा काशी-भारतधर्म्ममहामण्डलं तस्मै 'विद्यावारिधिः' इत्युपाधिं ददौ। संस्कृतसाहित्ये तस्य कविप्रतिभाऽसामान्या इति कृत्वा हाओड़ा संस्कृतसाहित्यसमाजस्तं 'महाकवि' इत्युपाधिना भूषितवान्। एवञ्चासंख्याः विद्यापीठास्तं विविधैः सम्मानैर्भूषितवन्तः। वर्द्धमानविश्वविद्यालयतस्तेन डि 'लिट्' इत्युपाधिः प्राप्तः।

स्वाधीनभारतस्य राष्ट्रपतिस्तर्काचार्य्यं भारतवर्षस्यान्यतमं श्रेष्ठपण्डितं मन्यमानो विशेषमानपत्रं वार्षिक-त्रिसहस्रमुद्रामूलामा-जीवनभोग्यां वृत्तिञ्चानुमोदितवान्। कलिकाताविश्वविद्यालयस्य पि एइच डि, डि लिट् इत्युपाधीनां कृते बहुशोऽसौ परीक्षकपदमलं चकार।

अथावसिते निर्द्दिष्टकार्य्यकालेऽसौ राजकीयमहाविद्यालयात् अवसरं गृहीत्वापि पुनस्तत्रैव गवेषणाविभागे परिचालकाध्यापक-रूपेण नियुक्तः।

काव्यनाटकदर्शनविषयमवलम्ब्य तर्काचार्य्यस्यासंख्या ग्रन्थाः निबन्धाश्च प्रकाशिताः। येषां प्रकाशनविधौ संस्कृत-साहित्य-परिषत्, एसियाटिक् सोसाइटी ; राष्ट्रिय-संस्कृत-महाविद्यालयः, छात्रपुस्तकालयः, विश्वभारती-प्रभृतयश्च उल्लेखयोग्याः।

विश्वभारती-प्रकाशन-विभागतः प्रकाशितस्य कविगुरु-रवीन्द्रनाथकृत-गीताञ्जलिग्रन्थस्य तर्काचार्य्यकृतः संस्कृतानुवादः साहित्यरसिकानां दुर्लभं रत्नम्। कविगुरोर्भाविन भाषया च सुसामञ्जस्यं विधाय ईदृशोऽनुवादो न कुत्रापि दृश्यते।

महाकवितर्काचार्य्यविरचितं , महाकाव्यं 'सत्यानुभावं' खण्डकाव्यञ्च 'मन्दाक्रान्तावृत्तम्' संस्कृत-साहित्य-परिषद्ग्रन्थ-मालायां प्रकाशितम्। खण्डकाव्यमिदं महाकवेर्जीवनालेख्यमिव प्रतिभाति। इदञ्चाद्यन्तं मन्दाक्रान्तावृत्तेन निबद्धम्।

तर्काचार्य्यस्याल्पे वयसि विवाहोऽभूत्। पत्नी तस्य गृहलक्ष्मीरिव राधालक्ष्मीरकाले दुरन्तव्याधिनाक्रान्ता दिवं गता। तामेवोपलक्ष्य कविना वृत्तमिदं रचितमिति तेनैवोक्तं कविनिवेदने—

अकाले स्वर्गमाप्तायाः पत्न्याः संस्मृतये चिरम्।
राधालक्ष्मी-समाख्यायाः कृतं काव्यमिदं मया॥ इति।

महाकवेस्तर्काचार्य्यस्यासंख्यातच्छन्दोबद्धाः कविताः साहित्यदर्शन-विषये निबन्धाश्च विभिन्नासु पत्रिकासु प्रकाशिताः, तास्तत्र तत्रैवानु-सन्धानीयाः। अस्य कतिपय-सुमधुर-गीतानि मया स्थानान्तरे प्रकाश्यन्ते।

महामहोपाध्यायस्तर्काचार्य्यो न केवलं महाकविः अपिच सुमहान् दार्शनिकश्च। तस्य दर्शनविषये पाण्डित्यं न सामान्यम्। तद्विरचिताः दर्शनग्रन्था एव तत् प्रकाशयन्ति।

"तर्केषु कर्कशधियो वयमेव नान्ये
काव्येषु कोमलधियो वयमेव नान्ये॥" इति नैयायिक-प्रवचनस्य याथार्थ्यं तर्काचार्य्येणैव प्रमाणीकृतम्।

महाकविस्तर्काचार्य्यो न केवलं कविर्दार्शनिकश्च, अपि च सुनिपुणो नाट्यकारः सुदक्षो नटश्च। छात्रावस्थायामेव तेन रचितं 'नलदमयन्तीयं' नाम सुमधुरं नाटकम्। अतःपरं तेन विरचितं सुधीजनमनोहरं नाटकद्वयं 'प्रशान्तरत्नाकरं' 'माणवकगौरव'ञ्च। 'स्यमन्तकोद्धार'व्यायोगस्तस्यैव लेखनीप्रसूतं महदवदानम्। एतेषां नाटकानां प्रायेण सर्वाण्येव बहुशः परिषत्सदस्यैस्तथान्यैश्च संस्कृतसाहित्यरसिकैरभिनीतपूर्व्वाणि।

किशोरकालादेव तर्काचार्य्यस्य काव्यरचनायां यथा महान-नुरागस्तथा नाट्याभिनये च महती प्रतिभासीत्।

नायकोचिताः सर्व्वे गुणास्तस्मिन्नवर्त्तन्त इति हेतोर्यस्यां कस्यामपि भूमिकायामवतीर्य्य स नाट्यरसिकजनमनांसि रञ्जयामास। संस्कृतसाहित्यपरिषदः प्रतिष्ठाकालादेव तर्काचार्य्यस्य राजकीय-संस्कृतमहाविद्यालयाध्यापकत्वग्रहणं यावत् परिषत्सदस्यैर्यानि यानि रूपकाण्यभिनीतानि तेषु सर्वेष्वेव रूपकेषु तर्काचार्य्य एव नायकः। स्मरामि तस्याभूतपूर्वमविस्मरणीयमभिनयचातुर्य्यं मृच्छकटिके चारुदत्तभूमिकायाम्। मन्ये नाट्यकारस्तमेवोपलक्ष्य चारुदत्तचरित्रमुपस्थापितवान् इति।

अथ यस्मिन् यस्मिन् नाटके यां यां भूमिकामवलम्ब्य तर्काचार्य्येणाभिनीतन्तासां नामान्युल्लिख्यन्ते।

(१) शूद्रककृते मृच्छकटिके चारुदत्तः। (२) विशाखदत्तकृते मुद्राराक्षसे विभिन्नसमये—चाणक्यश्चन्दनदासो राक्षसश्च। (३) आर्य्यक्षेमीश्वरकृते चण्डकौशिके धर्म्मः। (४) भट्टनारायणकृते वेणीसंहारनाटके विभिन्नसमये भीमो युधिष्ठिरश्च। (५) भवभूतेरुत्तररामचरिते रामः। (६) महाकविकालिदासस्य अभिज्ञानशाकुन्तले कण्वो दुष्यन्तश्च। (७) प्राचीनकवेर्भासस्य मध्यमव्यायोगे भीमः। (८) पञ्चरात्रे विराटः। (९) ऊरुभङ्गे दुर्य्योधनश्च।

आचार्य्यस्तर्काचार्य्यो न केवलमभिनयदक्षः आसीत्, स सुमहान् वाग्मी च। ये नाम भाग्यवन्तोऽस्य गुरुगम्भीरां सुललितां सरलदेवभाषामयीं वक्तृतां श्रुतवन्तस्त एव विमुग्धाः, त एव जानन्ति यत् तर्काचार्य्यस्य वक्तृताश्रवणाय शब्दसम्प्रसारणयन्त्रं नापेक्ष्यते।

बङ्गदेशस्य विभागहेतोः स्वदेशं पूर्व्वबङ्गं परित्यज्य पश्चिमबङ्गेषु हुगलीमण्डलान्तर्गत-भद्रकालीग्रामे 'शान्तिनगर' इत्याख्यस्थाने तर्काचार्य्यः स्वपरिजनैः सह वासमकल्पयत। तत्र प्रतिवेशिनः सर्वे आबालतरुणवृद्धादयस्तं देवतुल्यममन्यन्त, सर्वकार्य्येषु च तं शीर्षस्थानेऽस्थापयन।

तर्काचार्य्यस्य साहित्ये तथा दर्शने च प्रकर्षं तद्रचिता ग्रन्था एव प्रमाणयिष्यन्ति ।। ते यथा—

साहित्य ग्रन्थाः

१ । संस्कृतसाहित्यपरिषत्-प्रकाशिताः—

(१) नलदमयन्तीयं नाटकं । (२) प्रशान्तरत्नाकरं नाटकम् । (३) माणवकगौरवम्—उपमन्योः गुरुभक्तिमवलम्ब्य नाटकम् । (४) स्यमन्तकोद्धार-व्यायोगः । (५) सत्यानुभावम् । (६) मन्दाक्रान्तावृत्तम् ।

२ । संस्कृतछात्रपुस्तकालय-प्रकाशिता ग्रन्थाः—

(१) अनुवादनवोदयः—संस्कृतानुवाद-शिक्षाग्रन्थः । (२) काव्यचिन्ता—कविकाव्यसमालोचनाग्रन्थः । (३) महानाटकटीका (अंशतः) ।

३ । योगिभक्तचरितम्—श्रीश्रीनगेन्द्र मठ प्रकाशितं काव्यम् ।

४ । विष्णुप्रभा—विष्णुपुराणटीका । सत्यधर्म्मप्रचार-सङ्घेन सनातनशास्त्रपत्रिकायां प्रकाशिता ।

५ । गीताप्रतिच्छाया—श्रीमद्भगवद्गीताया ब्ल्याङ्कभार्स इत्याख्य -नवीनच्छन्दसा मूलानुरूपो बङ्गभाषानुवादः । देवयान-पत्रिकायां प्रकाशिता ।

६ । श्रीश्रीचण्डीप्रतिच्छाया—ब्ल्याङ्भार्सछन्दसा मार्कण्डेय-चण्डीग्रन्थानुवादोबङ्गभाषामयः, सुदर्शनपत्रिकायाम् अंशतः प्रकाशितः ।

७ । आलोकतिमिरवैरम्—खण्डकाव्यम् । दिल्लीस्थ-संस्कृत-प्रतिभापत्रिकायां प्रकाशितम् ।

८ । गीताञ्जलिः— विश्वकविरवीन्द्रनाथकृत-गीताञ्जलि-काव्यस्य संस्कृतानुवादः, विश्वभारती-ग्रन्थप्रकाशनविभागतः प्रकाशितः ।

दर्शनग्रन्थाः—

१ । संस्कृतसाहित्यपरिषत्-प्रकाशिताः—

(१) जातिबाधकविचारः । न्यायशास्त्रीयग्रन्थः ।

(२) मुक्तिदीपिका—गदाधरकृत-मुक्तिवादस्य टीका, वङ्गभाषा-मयतात्पर्य्यविवरणसहिता ।

(३) मुक्तिलक्ष्मीः–हरिरामकृत-मुक्तिवादविचार-टीका ।

(४) रत्नलक्ष्मीः – कणादतर्कवागीशकृतभाषारत्नग्रन्थस्य टीका ।

(५) मुक्तिदीपिका—जगदीशकृतायाः प्रशस्तपादभाष्य-सूक्तेः टीका । वङ्गभाषामयभाष्यतात्पर्य्यसहिता ।

२ । संस्कृत-छात्रपुस्तकालय-प्रकाशिता दर्शनग्रन्थाः ।

(१) भाषाप्रभा—सांख्यकारिकाया गौरपादभाष्यस्य पादटीका । (२) सारप्रभा—सांख्यसारटीका । (३) सार-दीपिका—सारमञ्जरीटीका ।

३ । कलिकाताराष्ट्रियसंस्कृतमहाविद्यालयात् प्रकाशिताः–

(१) सुप्रभा–– महामहोपाध्याय-महेशन्यायरत्नकृत-नव्यन्याय-भाषाप्रदीपग्रन्थस्य संस्कृतपरिशिष्टसहिता, बङ्गभाषामय-विवृतिः ।

(२) न्यायपरिभाषा—बङ्गभाषामयो न्यायशास्त्रीय-ग्रन्थः । (प्रकाश्यमानः)

३ । प्रवचनत्रयी—काशीसंस्कृतविश्वविद्यालये प्रचारिता न्यायवैशेषिकदर्शनीया वक्तृतामाला । तत्रत्य-सरस्वती-सुषमा-पत्रिकायां प्रकाशिता ।

१३७९ वङ्गाब्दीयश्रावणमासस्य एकादशदिवसे कृष्ण-पक्षस्य द्वितीयायां तिथौ गुरुवारे सरस्वतीवरपुत्रस्तर्काचार्य्यः सर्व्वा-नात्मीयजनान् विबुधवर्य्यानगणितान् शिष्यवर्य्यांश्च शोकसागरे निक्षिप्याकस्मादिहलोकादन्तर्हितोऽभूत् ।

अहो दौर्भाग्यं बङ्गदेशस्य तथा भारतवर्षस्य च यदेवं नानाशास्त्रे-ष्वसाधारणमतिः सारस्वतसमाजकुलपतिरजातशत्रुः विश्वविख्यात-कीर्त्तिर्वाग्मिप्रवरोऽसौ अकस्मात् विदेहतां गत इति ।

ईदृशस्य महापुरुषस्याकस्मिकतिरोधानान्मुह्यमाना अगणित-गुणमुग्धाः शोकदग्धा विदग्धा भृशं विलापं कृतवन्तस्तेषां विलापानामंशविशेषोऽत्र प्रकाश्यते—

१। "महतो महीयस एतस्य तिरोधानाद् भारतवर्षस्य संस्कृति-क्षेत्रे यादृशी क्षतिः संसाधिता, तस्याः पूर्त्तिरसम्भवपदमाधत्ते। हन्त वयमद्य दीनदीना अशरणाश्च जाताः।" इति कलिकाता विश्वविद्यालयस्य संस्कृतविभागाध्यक्षेण डाः श्रीकृष्णगोपाल-गोस्वामिमहोदयेनोक्तम्।

२। निस्तब्धा सुरभारतीकरलसद्वीणाद्य दीना सभा
बङ्गक्षौणिरुपैति मौनिवदना दुष्टाश्रुबिन्दुश्रुतिम्।
निःशब्दा सहसा ससिन्धुवसुधा प्रावृड्घना निःस्वना
भास्वद्भारतदेवता च मलिना लीना तमःसन्ततौ॥
नानानाट्यनिबन्धबन्धनमहाकाव्यादिसंग्रन्थने
वश्या स्त्रीव सदानुवर्त्तनपरा यस्याभवल्लेखनी।
आबाल्यं प्रलयावधिर्निरवधि स्थित्वा चिरं सङ्गिनी
साध्वी तेन समं गता सहमृता नान्यं वरितुं क्षमा॥
इति श्रीश्रीजीवन्यायतीर्थ-महाभागास्त्रेषां विलाप-
गाथायाम्॥

३। काव्ये कोमलता नये निपुणता शास्त्रार्थसंदक्षता
तर्के कर्कशता धियां न जड़ता सत्कर्म्मसु व्यग्रता।
धर्म्मार्थे शुचिता सदा विनयिता विज्ञे जने नम्रता
यस्यासीत् स महान् गतः सुरपुरं कालीपदः कोविदः॥
इति श्रीनलिनीकान्ततर्कतीर्थेनोक्तं तर्काचार्य्यस्मरणे।

४। काव्ये भव्यतमे यथैव सुमतिः स्वच्छन्दयात्रा यथा
तर्के कर्कशवाग् वितर्कविषयेष्वर्कस्यतुल्यो ज्वलन्।
वेदान्तप्रमुखे च दर्शनचये तुल्या रतिः शाश्वती
सोऽयं स्वर्गमितस्ततो बुधवरा हाहाकृतः शेरते॥
इति उच्यते श्रीराजेन्द्रनाथतर्कतीर्थेन तर्काचार्य्यस्मरणे।

५ । आचार्य्यस्तातकल्पः सुरगुरुसदृशः सर्व्वतन्त्रः स्वतन्त्रो
न्याये वैशेषिके वा ललितकविकृतौ विश्वविख्यातकीर्त्तिः ।
वाग्मी, बौद्धादितन्त्रे सुनिपुणप्रतिभो रम्यगम्भीरमूर्त्तिः
सश्रीकालीपदः किं नियतिकवलितो ज्ञानविज्ञानराशिः ।।
अद्यत्वेऽवसितं सदःसु मधुरं तत्संस्कृतं भाषणं
गाम्भीर्य्येण समागतिः समसृजद् यद्गौरवं संसदः ।
मीमांसातिमनोरमा यदभवत् शास्त्रार्थतत्त्वे क्षणात्
तत् सर्व्वं वत निष्ठुरेण कलिते कालेन नष्टं कृतम् ।। इति

तदन्तेवासिनः श्रीयादवेन्द्र न्यायतर्कतीर्थस्य हृदयाभिव्यक्तिः ।

६ । अद्य त्वं विज्ञमुख्य ! स्वतनुमिह जहद्बन्धुवर्गञ्च सर्व्वं
कुत्रासीति प्रचिन्त्याप्यखिलजनगणस्ते प्रबोद्धुं न शक्तः ।
यत्रासि त्वं सुबन्धो ! निजसुकृतिवशः शान्तिमायाहि शुद्धा-
मीशस्ते तोषजातं रचयतु विमलं चान्यलोकं गतस्य ।।

इति श्रीयोगेन्द्रमोहनविद्यारत्नस्य शोकाश्रु ।

७ । नाना शास्त्रेषु विज्ञः खलु प्रथितयशा वाग्मिवर्य्यो मनीषी
तर्काचार्य्यः प्रवीणः सततबुधजनैः पूजितः शुद्धशीलः ।
प्रख्याते प्राज्यवंशे जननमुपगतः सूक्ष्मधीः संयतेन्द्रो
लोकान् कालीपदाख्यो विबुधपुरमगाच्छोकमग्नान् प्रकुर्वन् ।

इति श्रीरमेन्द्रनाथ राय काव्यतीर्थस्य शोकोच्छ्वासः ।

८ । आसीद् यः सुरभारतीप्रवचने यद् वा तया लेखने
सोत्साहश्चिरजीवनं स्थिरमतिर्लोकप्रियः पण्डितः ।
दौर्भाग्यं सुरभारतीस्थितवतां विद्यावतां निश्चितं
कालग्रासगतो यदद्य सुजनो विद्वत्प्रवीणः कविः ।।
अजातशत्रोः सकलप्रियस्य स्वसाधनासङ्गतपूतधाम्नः ।
आत्मा यथा तस्य लभेत शान्तिं तत्कामयेऽहं विभुपादपद्मे ।।

इति निवेदयति श्रीदुर्गाप्रसन्न विद्याभूषणस्तर्काचार्य्यस्य महाप्रयाणे ।

९ । नानादेशचये सभासु नियतं गम्भीरदीप्तस्वरः
शास्त्राणां प्रकृतार्थभाषणरतो लोकोपकाराय च ।
सर्व्वज्ञानयुतोऽपि कोविदवरो हीनोऽभिमानेन य-
स्तर्काचार्य्यवरो बुधोऽमरपुरं कालीपदः सोऽगमत् ।।
उद्यन् पूर्व्वविभाग एष कृतिमानारुह्य कीर्त्तिं रथं
दीप्त्या विश्वमिदं शुभैकनिलयः प्रोद्भासयंस्तेजसा ।
क्षेमार्थं जगतो विकीर्य्य किरणं ज्ञानद्युतिं भास्करः
क्षिप्त्वा भ्रान्तचये समग्रधरणिं लोकान्तरं प्रस्थितः ।।

इति श्रीनित्यानन्द स्मृतितीर्थस्य भक्त्यञ्जलिः ।

१० । नभसि किरणदानाच्छान्तभूते शशाङ्के
प्रतिपदि विगतायां कृष्णपक्षे प्रदोषे,
सुरगुरुसमविज्ञः स्वर्गतो रुद्रसंख्ये
सुरगुरु दिवसे चास्तं गतः सूरिसूर्य्यः ।।
भवतां प्रीतये यद् वा क्रियते स्मृतितर्पणम् ।
तद्गृहीत्वानुगृह्णन्तु भवतां दीनसेवकम् ।। इति

तदन्तेवासिनः शोकार्त्तस्य श्रीकालीपदवेदतीर्थस्य शोकार्घ्यम् ।

११ । प्राधान्यं यस्य सर्व्वैर्बुधजनसदसि स्वीकृतं सर्व्वदैव
पाण्डित्ये वाग्मितायां बहुतिथविषये
योऽभवच्चाग्रगण्यः ।
यस्यासीत् तर्कशास्त्रप्रभृतिषु सततं तर्कशक्तिः प्रचण्डा
हा हासौ प्रत्नबन्धुर्नहि मम सविधे स प्रयातश्चिराय ।।
यातस्त्वं यत्र बन्धो परमसुखकरं सुष्ठु संवर्द्धनं ते
प्राधान्यञ्च त्वदीयं न खलु दर्वयितुं शक्तिमान्
कोऽपि तत्र ।
आकाङ्क्षेयं मदीया प्रियतमसुकृतिन् पार्श्वतस्ते मदर्थं
स्थानं किञ्चित् सुरक्ष्यं यदि तव निकटे स्थापनं
सम्भवेन्मे ।।

इति श्रीताराप्रसन्नतर्कतीर्थस्य विलापः ।

## महामहोपाध्याय-कालीपदतर्काचार्य्य डि लिट्‌ महोदयस्य महाप्रयाणे

# शोक-प्रस्तावाः

१। वर्द्धमानविश्वविद्यालयस्य संस्कृतविभागतः—

विद्वन्मूर्धन्यानां पण्डितप्रवराणा काश्यपकवीनां तत्रभवतां महामहोपाध्याय डक्टर कालीपदतर्काचार्य्यमहाभागानां मर्त्त्यलोकं परित्यज्य साधनोचितधामप्रयाणेन गुणगणमुग्धा वर्द्धमान-विश्वविद्यालयस्य सुरवाणीविभागीया अन्तेवासिनः अध्यापकाश्च वयं सद्यः स्वजनहीना जाताः। संस्कृतभारतीदानीं नितरां दीना सर्व्वथानाथा सञ्जाता इति मन्यामहे। महाभागानामेषां स्वर्गत आत्मा चिराय शान्तिं लभतामित्यस्माकं हार्दिकी प्रार्थना।

शोकाहताः सर्व्वे तदीयाः स्वजनास्तेषामेव शिवाशिषा आत्मनो धारयन्त्विति प्रार्थ्यते।

प्रस्तावस्यानुलिपिः स्वर्गीयाणां तर्काचार्य्यमहाभागानां परिजनेभ्यः प्रेषणीयेति सिद्धान्तितम्। इति—

वर्द्धमानतः
१३७९ संवत्सरीय
श्रावणमासस्य द्वाविंश-
दिवसे।

वर्द्धमानविश्वविद्यालयस्य
संस्कृतविभागस्य सदस्यानाम्

२। हाओड़ा संस्कृतसाहित्यसमाजतः, सौरश्रावणस्योन-विंशदिवसीयः शोकप्रस्तावः।

सर्वशास्त्रपारङ्गमाणां नैयायिक प्रवराणां न्यायादिदर्शनशास्त्र-टीकाग्रन्थप्रणेतॄणाम् अप्रतिद्वन्दिवाग्मिप्रवराणां सुविमलचरितानां विमलनम्रकुशलव्यवहाराणाम् अप्रतिमछात्रवत्सलानां शिष्टजनाश्रय-भूतानां यशःप्रभोद्भासितदिङ्‌मण्डलानां वाणीचरणारविन्द-मधुपानमत्तभृङ्गाणां संस्कृतशिक्षाप्रसारोत्सर्गीकृतजीवनानां सर्व्व-

तन्त्रस्वतन्त्राणां सर्व्वजनश्रद्धास्पदीभूतानां समधिगतराष्ट्रपति-पुरस्काराणां पण्डितकुलशिरोभूषणानां हाओड़ा-संस्कृत-साहित्य-समाजप्रतिष्ठातृसभापतीनां महामहोपाध्याय-महाकवि-डकटर कालीपदतर्काचार्य्यमहोदयानां परलोकप्रयाणेन समाजस्यास्य समग्रबङ्गभूमेस्तथा निखिलभारतवर्षस्यापूरणीयां महत्तमां क्षतिं स्मारं स्मारं हाओड़ा-संस्कृत-साहित्यसमाजस्य सभेयं व्याकुलीभूय हार्दिकं गभीरं शोकमुद्वेगञ्च प्रकाशयति ।

परलोकप्रस्थितानां तेषां महात्मनाम् आत्मनः परमां शान्तिं परमेश्वरं प्रयाचते, तथा तदीयशोकसन्तप्तपरिजनांश्च हार्द्दिकीं समवेदनां विज्ञापयति ।

प्रस्तावस्यास्य प्रतिलिपिरेका तेषां ज्येष्ठपुत्रसविधे प्रेषणीया ।

इति स्वाक्षरितः—श्रीनृत्यगोपालपञ्चतीर्थदेवशर्म्मभिः

अद्यतनाधिवेशनसभापतिभिः ।

३ । निखिलबङ्ग-संस्कृतसेविसमितेः श्रावणस्य त्रयोदश-दिवसीयः शोकप्रस्तावः

भारतवर्षकीर्त्तिस्वरूपाणां नैयायिकप्रवराणां सर्वतन्त्र-स्वतन्त्राणाम् असंख्यग्रन्थप्रणेतॄणां स्वभावकवीनां सुमधुर-व्यवहाराणां शिष्टप्रतिपालकानाम् अप्रतिद्वन्द्विवाग्मिनां गीर्व्वाण-वाणीचरणसरोजनिवेदितप्राणानां महामहोपाध्याय-महाकवि-कालीपद तर्काचार्य्यमहोदयानां महाप्रयाणेन बङ्गभूमेस्तथा निखिलभारत-वर्षस्य संस्कृतशिक्षायाः अपूरणीयां महतीं क्षतिं विचिन्त्य निखिल-बङ्गसंस्कतसेवि-समितेः सभेयं गभीरं शोकं प्रकाशयति ।

तेषां परलोकगतानां महात्मनामात्मनः परमां शान्तिं परमेश्वरं प्रार्थयते । तदीयशोकसन्तप्तपरिजनान् प्रति समवेद-नाञ्च ज्ञापयति ।

सर्वकारीय-संस्कृत-महाविद्यालय-समायोजित-

## —शोकसभायां शोकप्रस्तावः—

महामहोपाध्याय-महाकवि-भारतविख्यातनैयायिका अध्यापकाः कालीपद तर्काचार्य्य डि-लिट् महोदयाः (२७।७।१९७२) रात्रौ महाप्रयाणमकुर्वन्। तर्काचार्य्यमहाशयानामध्ययनजीवनादारभ्यैव न्याय-वैशेषिक-प्रभृतिषु दर्शनेषु तथा साहित्येषु लोकातीतायाः प्रतिभायाः विकाशः समघटत। एते यथा सुदीर्घं कालं यावदध्यापनायां निरताः सन्तः प्राप्ता-वसरं न्यायवैशेषिकादिदर्शनशास्त्रीयान् विविधान् ग्रन्थानरचयन् तथा साहित्ये महाकाव्य-खण्डखाव्य-नाटक-समालोचना-विषयकान् ग्रन्थान् असंख्यान् प्रबन्धांश्च रचयित्वापि निखिलेषु विद्वत्समाजेषु अनन्यसाधारणां प्रतिष्ठां समलभन्त। संस्कृतभाषायां बङ्गभाषायाञ्च असाधारणया वाग्मितया, नानाविधगुण-गरिम्णामायिकेन व्यवहारेण चैते विंश-शताब्द्यामस्यां बङ्गदेशे तथा भारतवर्षे अन्यतमसंस्कृतविद्रूपेण मनीषिरूपेण च सर्वेषां हृदय-मजयन्। एते खलु संस्कृतमहाविद्यालये प्रायेण चतुस्त्रिंशद्वर्षाणि यावदध्यापनायां तथा महाचार्यविभागे गवेषणायां नियुक्ता आसन्। एतेषामसंख्याः कृतविद्यास्छात्राः अधुना प्रतिष्ठामापन्ना अध्यापकरूपेण विभिन्नेषु प्रतिष्ठानेषु नियुक्ता वर्त्तन्ते।

छात्रवत्सलानां विद्वत्समाजस्य सुहृत्तमानां तर्काचार्य्यमहा-शयानां महाप्रयाणेनेयं सभा गभीरं शोकं प्रकाशयन्ती तदीयपुत्र-पत्नी-परिवारवर्गान् प्रति आन्तरिकीं समवेदनां ज्ञापयति।

एते ामाकस्मिकेन तिरोधानेन बङ्गदेशीयस्य तथा भारतीयस्य विपश्चित्समाजस्य या क्षतिरभूत्, सा अपूरणीयैव।

सभेयं परमेशितुः सकशे एतेषां स्वर्गगतस्यात्मनश्चिरशान्तिं कामयते । इति—

श्रीविष्णुपद भट्टाचार्य्यः
सर्वकारीय कलिकाता-संस्कृत महाविद्यालयाध्यक्षः ।
२८।७।६२ दिवसीयः ।

—०—

महामहोपाध्याय-तर्काचार्य्य-महाशयानां महाप्रयाणे
बङ्गीयसंस्कृतशिक्षापरिषत्सचिवेनायोजितायां

## शोकसभायां शोकप्रस्तावः

बङ्गीयसंस्कृतशिक्षापरिषत्कर्मिवृन्दानांसमुपस्थितानां पण्डितानाञ्चेयं सभा बङ्गदेशस्य तथा भारतवर्षस्य ख्यातिमतां पण्डितानां महामहोपाध्याय-कालीपदतर्काचार्य्य-महाशयानामाकस्मिकेन परलोकगमनेन गभीरं शोकं प्रकाश्य तदीयस्यात्मनः स्वर्गप्राप्तिं कामयते ।

महामहोपाध्यायाः सुदीर्घं कालं संस्कृतमहाविद्यालये तथा तत्रत्यायां महाचार्य्यश्रेण्याञ्च न्यायशास्त्रस्याध्यापका आसन् । ते च संस्कृत-साहित्य-परिषदः सभापतयो बङ्गीय-संस्कृत-शिक्षापरिषत्-कार्य्यनिर्वाहकसमितेश्च सदस्यास्तथा तदीयकार्य्यावल्या घनिष्ठतया संयुक्ता आसन् । महामहोपाध्यायमहाशयानां परलोकगमनेन भारतवर्षस्य तथा संस्कृतजगतः क्षतिरपूरणीयाजनिष्ट । तदीयशोकसन्तप्तैः परिजनैः सहेयं सभा गभीरां समवेदनामनुभवति ।

—०—

## विद्यासागरमहाविद्यालयायोजितायां शोकसभायां
## शोकप्रस्तावः
(२८।७।७२ दिवसीयः)

विद्यासागर-महाविद्यालयस्याध्यापकानामियं सभा परिणतवयसि महामहोपाध्यायपण्डितकालीपदतर्काचार्य्यमहोदयानां तिरोधानेन गभीरां वेदनामनुभवति ।

महामहोपाध्यायकालीपदतर्काचार्य्या हि प्राचीन-न्यायस्य नव्यन्यायस्य च गवेषणायां समग्रं जीवनमतिवाहितवन्तः । ते खलु भारतीयदर्शनानां विभिन्नासु शाखासु विशेषेण व्युत्पन्ना आसन् । बङ्गदेशस्य मध्ययुगीयाया नव्यन्यायचर्चाया अवशिष्टा प्रदीप-शिखा तेषां महाप्रयाणेन निर्वाणमाप्ता। बङ्गदेशीया संस्कृतिश्च तेषां तिरोधानेन सविशेषं क्षतिमापन्ना । महामहोपाध्यायकालीपद-तर्काचार्य्या आसन् सुविख्याता वक्तारः। संस्कृतभाषायां तत्-कृताया मनोरमाया ज्ञानगर्भायाश्च वक्तृतायाः श्रवणे येषां सौभाग्य-मजनिष्ट, तेषां सकाशे ते ह्यविस्मरणीयाः ।

तर्काचार्य्यमहाशयानामपरः परिचयः खलु—त आसन् एके ख्यातनामानः संस्कृतकवयः । असंख्याताः संस्कृतकवितास्ते रचित-वन्तः। 'काश्यपकवी'ति छद्मनाम्ना तैः कृता रवीन्द्रनाथस्य 'गीताञ्जलेः संस्कृतभाषानुवादः तेषां कविकृतेः सुमहान् परिचयः भूत्वा स्थास्यति । वस्तुगत्या त एवासन् आधुनिक-संस्कृतकविता-रचनाक्षेत्रे स्वनामधन्याः पथिकृतः । वैयक्तिक-जीवनयापनेन आसन् अनाड़म्बरं जीवनं यापयतां निरहङ्काराणां सहृदयस्वभावाना-मादर्शभूताः।

सभेयं तेषाममरस्यात्मनः सद्गतिं कामयमानास्तदीयशोक-सन्तप्तपरिवारान् प्रति समवेदनां ज्ञापयति ।

—o—

## कलिकाता-विश्वविद्यालयस्थ-संस्कृतविभागीयायां शोकसभायां शोकप्रस्तावः

[ आशुतोषभवने ३१।७।७२ दिवसीय-द्वितीयघटिकायाम्
सभापतिः—श्रीयुक्त रमाप्रसाद मुखोपाध्यायः
प्रधानातिथिः—श्रीयुक्त चपलाकान्त भट्टाचार्य्यः ]

कलिकाताविश्वविद्यालयस्य संस्कृतविभागस्थानामध्यापक-छात्रीछात्राणामियं सभा स्वर्गत-महामहोपाध्याय-पण्डित-कालीपद-तर्काचार्य्य-महाशयस्याकस्मिकेन परलोकप्रयाणेनान्तरिकं शोकं प्रकाशयन्ती तदीयं स्वर्गतमात्मानमुद्दिश्य गभीरां श्रद्धां ज्ञापयति ।

स्वर्गततर्काचार्यमहाशयस्य महाप्रयाणेन नहि केवलं बङ्गदेशस्य संस्कृतशिक्षैव क्षतिमापन्ना, परं समग्रस्य भारतस्य संस्कृतविद्या-क्षेत्रेऽपि तस्याकस्मिकेन तिरोधानेनापूरणीया क्षतिर्जाता ।

न हि स केवलं न्यायवैशेषिकादि-दुरूहशास्त्रेषु अनन्य-साधारण्याः पारदर्शितायाः अधिकारी समभूत्, परमसौ अनन्य-साधारण्याः कविप्रतिभाया अप्यधिकारी आसीदेव । तद्रचितानि संस्कृतभाषानिबद्धानि महाकाव्य-खण्डकाव्य-दृश्यकाव्यानि संस्कृतज्ञ-समाजेषु विशेषेणादृतानि ।

एवं सुदुर्लभकवित्वस्य वैदग्ध्यस्य च समावेशो यस्मिन्नघटत, असौ वरेण्यो मनीषी इदानीन्तने युगे बङ्गीयानां मनीषायाः अन्यतमः श्रेष्ठो विकाशः । महामहोपाध्याय-पण्डित-कालीपद-तर्काचार्य्य-महोदयस्य पवित्रां स्मृतिं प्रतीयं सभा श्रद्धां निवेदयति, आन्तरिक-भावेन कामयते च—तदीय लोकान्तरित-व्यक्तित्वस्य आदर्शः सारस्वतसाधना च भाविनि काले वङ्गवासिनः उद्बुद्धान् करिष्यति ।

वयं समवेतास्तदीयस्य स्वर्गतस्यात्मनः अक्षयां शान्तिं भगवच्चरणे प्रार्थयामहे ज्ञापयामहे च तदीयशोकविह्वल-परिजनवर्गं प्रति नः आन्तरिकीं समवेदनाम् ।

—०—

# महामहोपाध्यायानां महानुभवता

[ निबन्धकः—श्रीरवीन्द्रकुमार सिद्धान्तशास्त्री ]

जायन्ते खलु मनुष्याः शतसहस्रसंख्यका म्रियन्ते च प्रायेण समसंख्या एव प्रतिदिवसं धरण्यां कीटपतङ्गादय इव । स्मृतिस्तेषां दृश्यते क्षणस्थायिनी केवलमात्मीयवर्गेषु । अनात्मीयाः कालान्तरवर्त्तिनो देशान्तरवासिनश्च जना नैव स्मरन्ति तान् कदाचिदपि । लक्षसंख्यकेषु पश्यामो वयं स्वल्पप्रतिभाधरान् पुरुषान् द्वित्रान् वा त्रिचतुरान् वा ये विरचयन्ति कीर्त्तिं कियत्कालाय क्वचित् पाठ्यपुस्तकरचनादिना, क्वचिद् वा विद्यालय-चिकित्साभवन-देवमन्दिरादीनां प्रतिष्ठापनेन । एतादृशाः पुरुषा जयन्ति चित्तं बहूनां नराणां स्वालयसमीपवर्त्तिनामेव, विलभ्य श्रद्धायुक्तमासनं तेषां चेतसि । ईदृशान् पुरुषान् स्मृत्वा निगदितं नीतिशास्त्रकारैः—

"स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ।।" इति ।

कीर्त्तिमन्तोऽपि जना एतादृशाः अचिरस्थायितया नैव स्मर्य्यन्ते दूरवर्त्तिषु स्थानेषु दीर्घकालादनन्तरं वा मानवैः ।

तीक्ष्णप्रतिभाविभूषितास्तु जना दुर्लभा एव जगति । क्वचिद् दृश्यते एक एव तादृशः पुमान् कोटीषु, क्वचिद् वा ततोऽप्यधिकेषु जनेषु । न च सर्व्वकाले भवति एतादृशानां पुरुषाणामाविर्भावः । क्वचिद् गतास्वपि शताब्दीषु न दृश्यते आविर्भावः एकस्यापि तादृशपुरुषस्य, क्वचिच्च दृश्यन्ते सहस्राणि संवत्सराणामेवंविधपुरुषरहितानि । एतेष्वपि दृश्यते प्रतिभायाः प्रकाशो विभिन्नैरेव प्रकारैः । रघु-राम-भीष्म-द्रोण-कर्णार्ज्जुन-आलेक्जाण्डार-नेपोलियनसमा योद्धारो वर्षसहस्राणामन्तेऽपि नैव प्रादुर्भवन्ति

द्वितीयाः ; न च वाल्मीकि-व्यास-कालिदास-माघ-वाण-भवभूति-होमार-मिल्टन-सेक्स्पीयरतुल्याः कवयः, मनु-वशिष्ठ-याज्ञवल्क्य-पराशरसमा धर्म्मशास्त्रकारा वा कपिल-गोतम-कणाद-जैमिनि-पतञ्जलि-प्लेटोप्रमुखा वा दार्शनिका न जायन्ते द्वितीयाः। तीक्ष्ण-प्रतिभाधरेषु मनुष्येषु एष एव नियमः।

कलिकाता-संस्कृतसाहित्यपरिषदः प्राणपुरुषस्तत्रभवान् कालीपद-तर्काचार्य-महोदयः आसीच्छेषोक्तप्रकार एव तीक्ष्णप्रतिभाधरः। अहो! निर्बुद्धिता मे लेखन्या या खलु एतादृशगुणभूषितानपि महापुरुषानेकवचनेन विलिखति। तदितः प्रभृति बहुवचनेनैव निर्देशनीया इमे महाभागाः।

यदा खलु गुणग्राही भारतसर्व्वकारो लोकातीतप्रतिभाविभूषिता-नेतान् पण्डितप्रकाण्डान् महामहोपाध्यायविरुदेन सम्मानितानकार्षीत्, तदा विद्यालयेऽध्ययनरतः किशोरोऽहं संवादपत्रेभ्यो लोकपरम्परया च ज्ञातवानिदं विवरणं स्थित्वापि सुदूरस्थिते श्रीहट्टमण्डले। जनक-मुखादध्यापकवदनाच्च सर्व्वशास्त्रपारङ्गमाणां लोकातीतकविप्रतिभा-भूषितानां तर्काचार्य्यमहोदयानां सर्व्वज्ञताविषये किञ्चिदवगम्य ततः प्रभृति पोषयामि स्म प्रगाढ़ां श्रद्धां नियतमेतान् प्रति। जायते स्म तदानीमेव मे बलवती वासना द्रष्टुमेतेषां पुण्यविग्रहम्।

कियत्कालादनन्तरं दृष्टिपथमागता मे संस्कृतसाहित्यपरिषत्-पत्रिका, या सम्पादिता तत्रभवद्भिर्महामहोपाध्यायपदलाञ्छनैः कालीपदतर्काचार्य्यमहोदयैः। विलोक्य तत्र तेषां सावलीलं भावसमृद्धं पद्यं चित्ताकर्षकञ्च सुरचितं गद्यं दृढ़तरा बभूव मे श्रद्धा तदानी-मेतान् प्रति। यौवनं प्रविश्य संस्कृतभाषायां कथञ्चिद् व्युत्पत्तिं लब्ध्वा तर्काचार्य्यमहोदयानां रचनातश्च प्रेरणां विलभ्य व्यरचयं निबन्धं युगावतारविषयकं प्रेषयामि स्म च तं तर्काचार्य्यमहोदयानां सविधे प्रकाशनार्थं तेषां पत्रिकायाम्।

अहो! गुणग्राहिता तर्काचार्य्यमहोदयानाम्। दिनकति-पयाभ्यन्तर एव लिखितवन्तो लिपिमिमे मत्सकाशे समुद्दीपयन्तो

मे प्रोत्साहम्— "सुरचितं पाण्डित्यपूर्णञ्च भवतः प्रबन्धं प्रकाशयिष्यामि शीघ्रमेव परिषत्पत्रिकायाम् । अन्तरान्तरा इत्थं सारगर्भं प्रबन्धं विरच्य प्रेषयतु भवान् मत्सकाशं परिषत्पत्रिकायां प्रकाशनार्थम् ।" इत्यासीत् तर्काचार्य्य-महोदयानां पत्रांशः । 'युगावताराः' इति नाम मूर्ध्नि निधाय प्रकाशितो बभूव स मे प्रथमः प्रबन्धः संस्कृतसाहित्य-परिषत्पत्रिकायां क्रमशः १९४८ खीष्टाब्दीय-डिसेम्बरमासीय-संख्यायां १९४९ खीष्टाब्दीयजानुयारीमासीय-संख्यायाञ्च । इत्थं विलभ्य समुत्साहं तेभ्यो महाजनेभ्यः पुनः पुनर्लिखितवानस्मि निबन्धान् गद्यपद्योभयात्मकान् यथासम्भवं मे क्षुद्रशक्त्या सरल-सुरभाषया । प्रेषितवांश्च समयान्तरेषु मे गद्यमयान पद्यमयांश्च लेखान् तर्काचार्य्यमहोदयानां सविधे, प्रकाशिताश्च बभूवुः सर्व्वे एव ते ।

अघटनघटनपटीयसी राजनीतिर्यदा द्विखण्डितञ्चकार भारतं वर्षं विच्छिद्य पाकिस्तानसंज्ञया तस्य विपुलमंशम्, तदाहमासं सद्यो नियुक्तो राष्ट्रियशिक्षाविभागेन संस्कृताध्यापकत्वेन ।

१९४५ खीष्टाब्दे कलिकाता-पण्डित-सभा विभिन्नेषु संवादपत्रेषु विघोषितवती—'श्रीमद्भगवद्गीतायां भक्तिकर्म्मवादौ' इति विषयमवलम्ब्य प्रेषणीयः स्वरचितप्रबन्धः सुधीभिः । संप्राप्तेषु प्रबन्धेषु यस्य प्रबन्धः श्रेष्ठत्वं लप्स्यते, तस्मै प्रदास्यते 'महेश-चन्द्रन्यायरत्नस्मृति-स्वर्णपदकम्' द्वितीयस्थानाधिकारिणे च स्वर्ण-पदकान्तरम् । मुद्रापयित्वा च प्रचारपत्राण्येवंविधानि, तान्यपि प्रेषितवती सा सभा पण्डितप्रकाण्डानां वङ्ग-विहारासमप्रान्तवासिनां सविधे । एतस्मिन्नेवावसरे कनीयान् मे सहोदरस्तदानीमध्ययन निरतो ढाकानगरीस्थिते सारस्वतचतुष्पाठीसंज्ञक-संस्कृतविद्यालये । कलिकाता-पण्डितसभाया उल्लिखितमेकं प्रचारपत्रं स मत्सकाशं सम्प्रेष्य मामनुरुरोध—'अवश्यमेव प्रेषणीयः प्रबन्धो भवता' इति । भ्रातुरनुरोधात् मातुश्चादेशात् प्रेषितो मया स्वरचितो देवभाषा-

मयः प्रबन्धो यथाकालं पण्डितसभायास्तदानीन्तनसम्पादकस्य तत्रभवतः कालीपदशास्त्रिमहोदयस्य सविधे। वर्षकालादनन्तरं भारतविभागादव्यवहितप्राक्काले विघोषितमभूत् प्रतियोगितायाः फलं संवादपत्रेषु। ज्ञातं तस्मात्—लब्धं मया प्रथमपारितोषिकं सुवर्ण-तोलकचतुष्टयरचितं महेशचन्द्र-न्यायरत्न-स्मृतिस्वर्णपदकमिति। तदानीमेव लिखितं मया पत्रं पण्डितसभासम्पादकमहोदयस्य सविधे समनुरुध्य पदकप्रेषणाय रेजेष्ट्री-डाकयोगेन। अचिरादेव लब्धमुत्तरं सम्पादकस्य कालीपदशास्त्रिमहोदयस्य सकाशात्—"अत्रागत्य कलिकाताराष्ट्रियसंस्कृतमहाविद्यालयाध्यापकानामन्यतमस्य सकाशात् परिचयपत्रमानीय गृह्यतां भवतः पदकम्। नान्यथा दास्यते तत्।" इति।

यदा तु कियत्कालादनन्तरं देशविभजनाद् विगतसर्व्वस्वोऽहं जीविकान्वेषणाय कलिकातामागत्य कस्यचित् दूरसम्पर्कितस्यात्मीयस्य गृहे सामयिकमाश्रयं लब्धवान्, तदा तत्परेद्यवि एव तर्काचार्य्यमहोदयानां दर्शनाय तेषां वासभवनमगच्छम्। अहो! स्मर्य्यतेऽद्यापि मया शङ्करप्रतिमानां पूज्यपादानां तर्काचार्य्यमहोदयानां सा प्रथमावलोकिता रम्याकृतिः। उपविष्टा आसन्निमे खट्वासंस्थिते कट्यासने स्मारयन्त इव प्राचीनभारतीयानामाचार्य्याणां स्वरूपम। द्वारदेशमुपलभ्य तेषां निकेतनस्य यदावोचम्—"आगतोऽस्मि श्रीहट्टमण्डलाद् भवच्चरणदर्शनाय श्रीरवीन्द्रकुमार भट्टाचार्य्य-सिद्धान्तशास्त्रिसंज्ञकोऽहं भोः!" इति, तदानीमेव झटिति आसनादुत्थाय द्वारदेशमागम्य स्मितेन जितवन्तो मे हृदयं महात्मान इमे भूदेवाः। "अहमेव कालीपदतर्काचार्य्यः। आगच्छतु भवान् गृहाभ्यन्तरम्" इति तैर्निगदिते कृतवानहं पादवन्दनं तेषाम्। अहो! स्नेहवत्ता पण्डितप्रकाण्डानाम्। तत्क्षणादेव मामुत्थाप्य बाहुपाशेन सस्नेहमालिङ्ग्य स्थापितवान् मे वक्षः परमपवित्रस्य तेषामुरस उपरि। पितृहीनो युवाहं तदानीं पितृस्नेहमेव स्मृतवान् वाष्पपरिपूरिताभ्यां लोचनाभ्यां विस्फारितेन च चित्तेन। ततश्च सादरं विधृत्य मे

हस्तं प्रवेशयामासुरिमे मां तेषां गृहस्याभ्यन्तरम् । समुपवेश्य च मां कस्मिंश्चिदासने सुचिरमालोचितवन्तो मया सह विविधान् विषयान् ।

आलोचनावसरे तर्काचार्य्यमहोदयैः पृष्टोऽहं मे वंशपरिचयादिकमवोचम् । तदानीमानन्दविस्फारिताभ्यां लोचनाभ्यां स्मितेन चावदन्निमे—"अस्माकमेव समवंशीयो भवानिति मन्ये । कथमन्यथा पाश्चात्त्यवैदिकश्रेण्यां यजुर्व्वेदीय-काण्वशाखाश्रितं काश्यपगोत्रं भवितुमर्हेत् ? मन्ये मधुसूदनसरस्वतीमहोदयानां जननात् पूर्व्वकाले एव गता भवतां पूर्व्वपुरुषाः श्रीहट्टमण्डलमिति"। अहमवदम् "काशीपुरे ग्रामे निवसतामस्मद्वंशीयानां द्वादशपुरुषोऽस्मि । इतः प्राक् इटाराज्यशासकानां विप्रवंशीयभूपानां कुलगुरुरूपेण न्यवसन् मे पूर्व्वपुरुषाः इटाराज्यस्थिते डला-नामग्रामे । तत्र कियत्परिमित काल न्यवसस्ते इति न जाने । अच्युतचरणतत्त्वनिधिप्रणीते "श्रीहट्टेर इतिवृत्त" इत्याख्ये बङ्गभाषामये ग्रन्थे लिखितमस्ति—म्लेच्छबलैः पराभूते वन्दीकृते धर्म्मान्तरीकृते च इटाराज्यशासके तत्रभवति सुविन्नारायणे राजवंशीया अपरे पुरुषाः परिजनैः सह पलायाञ्चक्रिरे कौबेर्य्यां दिशि । लब्ध्वा च स्थितिमरण्यसङ्कुले प्रदेशे तत्रत्यमरण्यं छित्त्वा स्थापयामासुस्ते नवीनं जनपदन्तत्र, कृतवन्तश्च तस्य नाम 'वनभाग' इति । अस्मिन्नेव वनभागे लेभिरे भूस्वामित्वं राजवंशीयाः पुरुषा दत्तवन्तश्च ग्राममेकं कुलगुरवे तेषाम् । कुलगुरोर्नाम भवदेवभट्टाचार्य्य आसीदिति तदीयनिवासग्रामस्यापि नाम कृतं काशीपुरमिति । उक्तवन्तश्च तर्काचार्य्यमहोदयास्तेषामपि पूर्वपुरुषाणां कोटालिपाड़ागमनविवरणं स्थितिलाभहेतुञ्च तत्र। इत्थं कृतः सुचिरमालापस्तत्रभवद्भिस्तर्काचार्य्यमहोदयैः सह । मन्ये स्म तदानीं परमात्मीया एव इमे ममेति । विलभ्य महान्तमानन्दं सुचिरमालोचनया महामहोपाध्यायैः सह प्रत्यावृत्तोऽहं स्वकीयमाश्रयस्थलं कलिकातासंस्थितं तदानीम् ।

परेद्यवि कलिकाता पण्डितसभासम्पादकस्य निलयमगच्छम् । श्रुत्वैव मे परिचयं पृष्टवानसौ—"अपि समानीतं भवता परिचयपत्रं कलिकाता-राष्ट्रियसंस्कृत-महाविद्यालयाध्यापकानामन्यतमस्य सकाशात् ?" इति । अहन्तु न्यवेदयम्—"प्रागेव मया विज्ञापितो भवान् पत्रयोगेन, नास्ति मे परिचयपत्रं किमपी"ति । शास्त्रिमहोदयस्तु जगाद—"गच्छतु भवान् संस्कृतमहाविद्यालयम् ; आनयतु च परिचयपत्रम् । अन्यथा नैव दास्यते पदकम् । ईदृश एव कृतो नियमः पण्डितसभया ।"

तदा नैराश्यपूर्णेन चेतसा तदानीमेवागच्छं संस्कृतमहाविद्यालयम् । निवेदितवांश्च सर्व्वं व्यापारकलापं तत्रभवद्भ्यस्तर्काचार्य्य-महोदयेभ्यः । सर्व्वं श्रुत्वा किमपि वाक्यमनुच्चार्य्यैव महानुभावास्तर्काचार्य्यमहोदयाः पत्रं लेखनीञ्च समादाय लिखितवन्तः—"श्रीहट्टान्तर्गत-काशीपुरग्रामवास्तव्यः पण्डितप्रवरः श्रीरवीन्द्रकुमार-सिद्धान्तशास्त्रिमहोदयो मे विशेषेण परिचितं मित्रम् । शङ्काहीनेन चेतसा दातुमर्हति भवान् तस्य प्रतिभार्ज्जितं पारितोषिक महेशचन्द्रन्यायरत्नस्मृति-स्वर्णपदकमविलम्बितमेव तस्मै ।" इति । पत्रं लिखित्वा स्वनामाङ्कनात् प्रागेव तत् संस्थाप्य मे पुरतः इमे महाभागाः अपृच्छन्—"अपि लेखनीयं किमप्यन्यत् ?" इति । विस्मयविमूढ़चित्तोऽहमवदम् "प्रभूतमेव लिखितं भवद्भिः । मन्ये एतावतैव भविष्यति मे कार्य्यसिद्धिः ।"

ततस्तु तर्काचार्य्यमहोदयानां पादवन्दनं कृत्वा पुनरगच्छं कालीपदशास्त्रिमहोदयस्य निकेतनम् । परिचयपत्रं दृष्ट्वा सादरं मां समुपवेश्य तत्क्षणादेव मे पदकं प्रदाय च सबहुमानं सम्भाषितवान् मां शास्त्रिमहोदयः । सविनञ्चासौ जगाद—"क्लेशितः कार्य्य-गौरववशादेव भवानुपायान्तरहीनेन मया ; क्षम्यतां मे त्रुटिर्भवता ।"

स्वहस्तगतं कर्त्तुं गौरवसूचकं स्वोपार्जितं मे परितोषिकममूल्यं स्वर्णपदकमनेनैव प्रकारेण। मन्ये मनुष्यदेहधारिणो देवविशेषा आसन्निमे पण्डितप्रकाण्डाः स्वार्थसङ्घातसङ्कुलेऽस्मिन् कलिकालीये धरातले। नमामि स्वर्लोकगतान् तर्काचार्य्यमहोदयान् परमया भक्त्या पुनः पुनः। भवतु तेषां स्थितिर्ब्रह्मलोके, विष्णुलोके, शिवलोके वा यथाभिलषितन्तैः। सुखेन च तिष्ठन्तु तेषां परिजनाः सर्व्वबाधारहिताः। शिवमस्तु।

—०—

# स्मृतिसपर्या

[ निबन्धकः—श्रीसुरेशचन्द्र वन्द्योपाध्यायः
बङ्गीयसंस्कृतशिक्षापरिषत्सचिवः ]

आ सृष्टेरसंख्या नरा जाता मृताश्च। जीवनं मरणान्तम् इति प्रकृतिविधानम्। कस्तावन्मृत्युरिति चिन्तनीयम्। पाञ्चभौतिकस्य देहस्य पञ्चभूतेषु विलय एव मृत्युरिति कथ्यते। किन्तु, येन कीर्तिरर्जिता स पण्डितानां मते देहान्ते सत्यपि जीवति। वस्तुतः शोणितमांसादिनिर्मिताद् देहाद् यशोदेह एव महात्मनां प्रियतरः।

मरणात् परमपि ये चिरजीविनः, तेषां मध्ये महामहोपाध्यायः कालीपदतर्काचार्यमहोदयोऽन्यतमः। 'स जातो येन जातेन याति वंशः समुन्नतिम्' इति साधूक्तम्। सार्थकमासीन् महामहोपाध्यायस्य जन्म। पूर्वबङ्गस्थकोटालीपाड़ग्रामवास्तव्ये विश्रुते विदग्धकुले स जन्मग्रहण चकार, तत्कुलस्य ललामभूत आसोत् पण्डितप्रकाण्डः कालीपदतर्काचार्यमहोदयः।

दुर्लभं मनुष्यजन्म लब्ध्वा तेन सुदुर्लभा विद्या अर्जिता। तर्कशास्त्रे कर्कशधीरसौ पण्डितप्रवरः काव्येऽपि कोमलधीरासीत्। दुर्लभे कवित्वे सुदुर्लभा शक्तिश्च तेन लब्धासीत्। तस्य प्रयासः केवलमध्ययने अध्यापने च सीमितो नासीत्। स्वयं स सुललितश्छन्दोभिर्मनोज्ञशब्दसम्पदा विविधालंकारैश्च महाकाव्यं रचयामास।

न केवलं विद्यायां तस्यानवद्यं कृतित्वमासीत्। सदसि तस्य वाक्पटुतापि सर्वजनप्रशंसनीया आसीत्। तस्य कम्बुकण्ठः स्पष्टोच्चारणम् अनर्गला उक्तयश्च सभास्थितान् जनान् चित्रार्पितान् इव चक्रुः। वस्तुतस्तस्य उपस्थितया सभा स-भा एव बभूव।

महामहोपाध्यायस्य चरित्रमपि असाधारणमासीत्। तस्य चरित्रे आर्जवं प्रधानगुणरूपेण प्रतिभाति स्म। शरीरस्थं क्रोध-रूपं महारिपुं स सम्पूर्णरूपेण जिगाय। तस्य वचने कदापि परापवादो न श्रुतः। सदा हास्यसमुज्ज्वलं तस्य मुखं कस्य मनसि आनन्दं न जनयामास? परोपचिकीर्षा तस्य मानसं महिम-मण्डितं चकार।

पण्डितसमाजसौधस्य स्तम्भसदृशोऽसौ परलोकं गत इति महत् खेदस्थानमस्माकम्। इयं तु सान्त्वना--जीवलोके अर्थागमादीनि षट् सुखानि तेन भुक्तानि; परिणतवयसि च तस्य देहान्तरप्राप्तिर्बभूव, अक्षयं यशःशरीरं च तेन लब्धमासीत्।

तस्य पाण्डित्यं चरित्रं च अस्मभ्यम् अनुप्रेरणां यच्छताम्, तस्य महान् आत्मा स्वर्लोके चिरशान्तिं लभताम् इति च जगदीश्वरचरणे प्रार्थना।

—o—

## —वङ्गगौरवरविस्तर्काचार्य्यः—

[ निबन्धकः—अध्यापक श्रीविमल कृष्ण भट्टाचार्य्यः ]

साम्प्रतं ये तावत् कालीपदतर्काचार्यस्यानन्यसाधारणं पाण्डित्यं स्मरन्ति नूनमेव ते स्वीकुर्व्वन्ति यद् घटेन सागराम्भसः परिमापन-प्रचेष्टेवास्मदीयबुद्धया तर्काचार्य्यस्य प्रतिभाया अनुधावनं व्यर्थ-प्रयासमेव। तथापि महाजनानां माहात्म्यपर्य्यालोचनजनित-सुकृतेनात्मगतकल्मषं दूरीभवतीति मत्वा अस्य पुण्यश्लोकस्य जीवन-वृत्तं तथा चरित्रमाधुर्य्यमप्यालोचयितुं प्रयते।

सुप्राचीने काले महम्मदीयैराक्रान्ते कान्यकुब्जजनपदे बहवो ब्राह्मणा धर्मरक्षार्थं बङ्गेष्वागताः। तदनन्तरकाले तु ये तावद् ब्राह्मणाः कान्यकुब्जाद् बङ्गदेशमागता त एव बङ्गेषु पाश्चात्त्य-वैदिकब्राह्मणा इत्यभिधीयन्ते। अग्निहोत्री श्रीराममिश्रस्तेषा-मन्यतमः। असौ काश्यपगोत्रीयो यजुर्वेदीयश्च। अस्य सन्ततयो भूयांसं कालं यावत् पूर्वबङ्गस्थ-फरिदपुरमण्डलान्तर्गते ऊनशीया-नामके ग्रामे निवसन्ति स्म। बहवस्तु स्वनामधन्याः शास्त्रज्ञपण्डिता अस्मिन् वंशे जाताः। कृष्णगुणार्णववेदाचार्य्यः, लक्ष्मीदासन्याया-लङ्कारः, गङ्गेशविद्यालङ्कारः, सुतार्किको मा वानन्दोऽविलम्ब-सरस्वती, स्मार्त्ताग्निहोत्री गोविन्दचक्रवर्त्ती, सुनैयायिको धरणी-धरन्यायपञ्चाननः, विविधशास्त्रज्ञः पुरुषोत्तमन्यायालङ्कारः, सुवक्ता शशधरतर्कचूड़ामणिः, स्वनामधन्यतार्किको जयनारायण तर्करत्नश्च तेषामन्यतमाः।

अग्निहोत्रिणः श्रीराममिश्रस्य प्रपौत्रो गणपतिमिश्रः। तस्य प्रपौत्रस्तु प्रमोदनपुरन्दराचार्य्यः। साधककुलचूड़ामणिरयं प्रमोदनपुरन्दराचार्य्यस्तन्त्रशास्त्रोक्तविधानेन पञ्चमुण्डासनं संस्थाप्य शक्तिसाधनायां साफल्यं लेभे। तस्य षट् पुत्राः ( मतान्तरे

चत्वारः पुत्राः) आसन् । तेषां ज्येष्ठः श्रीनाथ आचार्य्यचूड़ामणि-द्वितीयस्तु यादवानन्द न्यायाचार्य्यः । तृतीयो हि भारतपूज्यः परिव्राजकाचार्य्यो मधुसूदनसरस्वती । असौ मधुसूदनसरस्वती अद्वैतसिद्धिं, सिद्धान्तविन्दु, वेदान्तकल्पलतिकां, महिम्नःस्तोत्रटीकां, श्रीमद्भगवद्गीताया गूढ़ार्थदीपिकेति टीकां तथा अपरानपि विविधान् ग्रन्थान् रचितवान् । अयं तु न केवलं बङ्गदेशस्यापि तु अखिलस्य भारतवर्षस्य अद्वितीयो वैदान्तिक आसीत् । शैशवे गृहं त्यक्त्वा असौ सन्नयासं गृहीतवान् । प्रमोदनपुरन्दराचार्य्यस्य प्रथमद्वितीयपुत्रयोरेव सन्ततिर्विद्यते । प्रथमपुत्रस्य चूड़ामणेरेका सन्ततिपरम्परा, अपरा न्यायाचार्य्यस्य । पाश्चात्यवैदिकब्राह्मणानां काश्यपगोत्रीयसमाजस्तु धाराद्वयेनानेन विभक्तः । आश्चर्य्य-मेतद्यदेकस्मिन्नेव काले अस्मिन् धाराद्वये विविधप्राच्यविद्यापारङ्गमं सुप्रसिद्धं पण्डितद्वयं प्रतिष्ठामलभत । न्यायाचार्य्यस्य धारायां महाभारतस्य भारतकौमुदीनाम्न्याष्टीकाया रचयिता बङ्गभाषया-मनुवादकश्च विविधशास्त्रवेत्ता पद्मभूषण इति राष्ट्रियोपाधि-भूषितो हरिदास सिद्धान्तवागीशः ( जन्म १८७६ खीः ) । चूड़ामणे-र्धारायान्तु कालीपदतर्काचार्य्यः (जन्म १८८८ खीः) । उभौ च तौ कतिपयवर्षाणां व्यवधानमात्रेण महामहोपाध्याय इति श्रेष्ठं संस्कृतो-पाधिं प्राप्तवन्तौ । ( हरिदासः १९३३ तमखीष्टाब्दे, कालीपदस्तु १९४१ तमखीष्टाब्दे ) ।

१८१०तम शकाब्दस्य ( १८८८तम खीष्टाब्दस्य ) मार्गशीर्षे मासि फरिद्पुरमण्डलान्तर्गते कोटालीपाड़ान्तर्वर्त्तिनि ऊनशीयाग्रामे कालीपदो जातः । तस्य पिता हरिदासतर्कतीर्थः, माता तु सीता-सुन्दरी देवी । स कालीपदः कानिचिद् वर्षाणि कलिकातानगर्य्या-माङ्गलविद्यालये अधीत्य पश्चाद् भुवनेश्वरविद्यालङ्कारमहोदयात् कलापव्याकरणमधीत्य परीक्षां चोत्तीर्णोऽभवत् प्रथमः सन् । ततो मूलाजोड़स्थ-संस्कृतमहाविद्यालये हरिपदविद्यारत्नस्य सविधे अध्यना-नन्तरं काव्योपाधिपरीक्षायां प्रथमविभागे प्रथमः सन्नुत्तीर्णोऽभूत् ।

ततस्तस्मिन्नेव महाविद्यालये महामहोपाध्यायशिवचन्द्रसार्वभौम-सकाशतो न्यायशास्त्रं सांख्यदर्शनं चाधीत्य नव्यन्यायशास्त्रस्य प्रथमां द्वितीयामन्तिमाञ्च परीक्षां प्रथमविभागे प्रथमतया उत्तीर्य्य महार्घं पारितोषिकादिकं लब्धवान्। प्रसङ्गत इदमुल्लेखनीयं यत् कालीपदस्य तर्काचार्य्य इत्युपाधिस्तु पूर्वोक्तसार्वभौममहोदयेन प्रदत्त इति। कालीपदश्चाजीवनम् अन्यान् राष्ट्रियोपाधीनुपेक्ष्य स्वनाम्नि तर्काचार्य इति गुरुप्रदत्तमुपाधिं व्यवहृतवान्। इदं त्वस्य प्रगाढ़गुरुभक्तेर्निदर्शनम्।

नव्यन्यायोपाधिपरीक्षामुत्तीर्य्यासौ छात्रपुस्तकालये ग्रन्थसंशोधन-टीकारचनादिकार्ये नियुक्तो भूत्वा 'विद्योदया' 'आर्य्यप्रभे'ति पत्रिकाद्वये विविधसंस्कृतग्रन्थान् विरच्य सविशेषां ख्यातिमर्जितवान्। १९१८-तम खीष्टाब्दे असौ संस्कृत-साहित्यपरिषत्परिचालितसंस्कृत-विद्यालये अध्यापकपदं गृहीतवान्। १९३१ तम खीष्टाब्दे स कलिकाता-राष्टियसंस्कृतमहाविद्यालये न्यायशास्त्रस्याध्यापकपदे नियुक्तो भूत्वा वर्षत्रयं यावत् 'संस्कृतपद्यवाणी'ति पत्रिकायाः प्रकाशनञ्चाकरोत्।

संस्कृतभाषां प्रत्यस्य प्रणयस्तथा संस्कृतशिक्षाप्रसारार्थं चैकान्तिकी प्रचेष्टा तं संस्कृतानुरागिजनानां हृदये अक्षयासने प्रत्यस्थापयत्। संस्कृतसाहित्यपरिषद्धि बङ्गदेशस्यान्यतमसंस्कृतप्रचार-प्रतिष्ठानम्। तर्काचार्य्यं विना संस्कृतसाहित्यपरिषदश्चिन्तन-मस्माभिः साध्यातीतम्। विविधप्रकारेणासौ अनया परिषदा सह संश्लिष्टोऽभूत्। १३२७ तमबङ्गाब्दे संस्कृतसाहित्यपरिषत् प्रतिष्ठिता बभूव। १३२४ तमबङ्गाब्दादारभ्य १३२८ तमबङ्गाब्दं यावदस्या परिषदः सहकारिसम्पादकत्वेनासावधिष्ठित आसीत्। १३२५ तमबङ्गाब्दे परिषद आचार्य्यपदं तथा परिषत्पत्रिकायाः सहकारिसम्पादकपदमप्यनेन गृहीतम्। १३३१ तमबङ्गाब्दादारभ्य १३३६ तम बङ्गाब्दं यावत् तथा १३५२ तमबङ्गाब्दादारभ्य आमरण-कालमस्याः पत्रिकायाः सम्पादकत्वेन च नानाविधगद्यपद्यात्मक-

निबन्धरचनया विद्वत्समाजे सुदीर्घत्रिंशद्वर्षाणि यावच्चास्मिन् पदे स्थित्वा १३७८ तम बङ्गाब्दे परिषदः सभापतिपदमलङ्कृत्य जीवनस्यान्तिमदिवसावधि अस्मिन् पदे सुप्रतिष्ठितोऽभूत् ।

१९४१ तम खीष्टाब्दे असौ महामहोपाध्याय इति राष्ट्रियोपाधिं लब्ध्वा संस्कृतपण्डितकुलस्य गौरवशिखरमध्यारोहत् । तदानीमसौ कलिकाताराष्ट्रियसंस्कृतमहाविद्यालयस्य प्राच्यविद्याविभागस्य प्रधानाध्यापकपदमप्यध्यकार्षीत् । तस्मादारभ्य कर्मणोऽवसरग्रहणात् परमप्यस्मिन्नेव महाविद्यालये महाचार्य्यविभागे अध्यापकत्वेन नियुक्तः सन् जीवनस्यान्तिमकालावधिं सगौरवं स्वस्मिन्न्यस्तं कार्य्यभारमवहत् ।

तर्काचार्यस्य चरित्रपर्य्यालोचनकाले सर्वत्रैवासामान्यता प्रकटीभवति । कुत्रापि न तस्य काचिन्न्यूनतासीत् । काव्यशास्त्रस्य विविधशाखासु अस्यानन्यसाधारणं पाण्डित्यमनुभूयते । "नलदमयन्ती" "काव्यचिन्ता", 'मानवकगौरवम्' इत्यादिषु स्वरचितकाव्यग्रन्थेषु "न्यायपरिभाषा" "प्रशस्तपादभाष्यसूक्तिः" "तर्कप्रकरणम्" "दीधितिप्रकाशः" इत्यादिषु सङ्कलितेषु न्यायविषयकग्रन्थेष्वप्यस्य सूक्ष्मचिन्ता प्रकटिता । प्रायश एकस्मिन्नाधारे भिन्नभिन्नविषयकपारदर्शिता नैव दृश्यते ।

यद्यपि तर्काचार्य्यस्य साहित्यप्रतिभा प्राचीनसाहित्ये निबद्धेव प्रतिभाति, तथापि इदानीन्तनसाहित्येऽपि तस्याग्रहः परिलक्ष्यते । तस्य जीवनकाले एव कविसार्वभौमो रवीन्द्रनाथो निखिलविश्वस्य साहित्यिकेषु श्रेष्ठासनमध्यकार्षीत् । कविसार्वभौमस्य काव्यैस्तथा सङ्गीतैस्तर्काचार्य्योऽपि नितरामेवाकृष्ट आसीत् । कविसार्वभौमं प्रति तस्य श्रद्धा च प्रगाढ़ा जाता । संस्कृतकाव्यपारदर्शिनो जनस्य तत्काले बङ्गसाहित्ये एतादृशोऽनुरागो विरल एव । रवीन्द्रनाथस्य स्मरणार्थमाहूतासु विविधसभासु तर्काचार्य्यप्रदत्तभाषणेन रवीन्द्रसाहित्यं प्रति तस्यैकान्तिकोऽनुरागः सुव्यक्तोऽभूत् । जीवनसायाह्ने नानाकर्मसु व्यापृतेनापि संस्कृतसाहित्यपरिषत्-

पत्रिकायां रवीन्द्रनाथस्य पद्यानि देवभाषयानूद्याबङ्गीयानां संस्कृत-सेविनां रवीन्द्रसाहित्यावबोधनाय सौकर्य्यमनेनैव तर्काचार्येण कृतम् ।

विविधशास्त्रेष्वधिकारः पण्डितानामनेकेषु दृश्यते। तर्काचार्यस्तु विविधशास्त्रसागरेषु निमज्ज्य अमूल्यज्ञानरत्नान्याहरत् । तस्येदृशं गभीरशास्त्रज्ञानमासीद् यत् काव्यविषयिण्या न्यायविषयिण्याः सांख्यवेदान्तादिविषयिण्याश्च यस्याः कस्या अपि समस्यायाः कतिपयमुहूर्त्तैः समाधाने तस्य क्लेशो नाभवत् । ये तावत् तर्काचार्य-महोदयस्य सान्निध्यलाभेनानुगृहीता आसंस्ते त्वस्मद्देशीय-प्राचीन-पण्डितानाम् एतादृगलौकिकक्षमतायामवश्यमेव विश्वसन्ति ।

'विद्या ददाति विनयमि'ति शास्त्रवाक्यस्य व्यभिचारोऽपि दृश्यते । प्रायशोऽल्पशिक्षितानां कदाचिदुच्चशिक्षितानां चाचारैर्वचनैर्वा पाण्डित्याभिमानः प्रकाशते। तर्काचार्य्यस्य तु स्वभावसिद्धा नम्रता तस्य पाण्डित्यं च चन्द्रमसं रोहिणीव सदैवान्ववर्त्तत । न केवलं महामहोपाध्याय इत्युपाधिरनेन प्राप्तः, भारत-शासकवर्गेणापि १९६२ तमखीष्टाब्दे वार्षिकसहस्रत्रयपरिमित-रूप्यकात्मकवृत्तिप्रदानेनासौ सम्मानितोऽभवत्। वर्द्धमानविश्व-विद्यालयेनासौ सम्मानसूचकेन डि, लिट् इत्युपाधिना भूषित आसीत् । तथा शृङ्गेरीमठाध्यक्षशङ्कराचार्येण "तर्कालङ्कार" इत्युपाधिना, हाओड़ास्थसंस्कृतपण्डितसमाजेन "महाकवि"-रित्युपाधिनाप्यसौ सम्मानितः । असावित्थं विविधप्रकारैः सम्मानितोऽपि निरहङ्कार एवासीत् । तस्यैतादृशी स्वभावस्निग्धता यत् कायेन मनसा वाचा वासौ कस्यचिन्मनसि न कदापि क्लेशमजनयत् । तत्समीपे यदि कश्चित् कस्यचिन्निन्दाप्रसङ्गमुदस्थापयत्तदा कौशलेन तं न्यवर्त्तयत् ।

न केवलं पाण्डित्यं तस्य जनप्रियताया मूलम् । अपरगुणैरप्यसौ असामान्यजनप्रियतामर्जितवान् । तेषामुल्लेखमन्तरेण तस्य चरित्रवर्णनमपूर्णमेव स्यात् । अनवद्या हि तस्य वाग्मिता । वक्तव्य-विषये रमणीयत्वमारोप्य श्रोतृवर्गं प्रत्युपस्थापनं तस्य वाग्मिताया

अन्यतमवैशिष्ट्यम् । एषा दक्षता बङ्गीयानामबङ्गीयानाञ्च विदग्धजनानां परमविस्मयमजनयत् । अभिनयदक्षतयाप्यसौ स्वसमकालवर्त्तिनां यूनां हृदयं जहार । मूलाजोड़स्थसंस्कृतमहाविद्यालये छात्रदशायां तद्रचितनाटकस्य तस्मिन्नेव महाविद्यालये अभिनयः सम्पादितः । यौवनकाले चासौ स्वग्रामे संस्कृतनाटकानां बङ्गीयनाटकानां चाभिनयं परमनैपुण्येन समपादयत् नाटचमञ्चेऽपि विविधभूमिकासु तस्याभिनयश्चमत्कारित्वेन अतुलनीय आसीत् । न केवलं तस्य नाटकनैपुण्यमपि तु कन्दर्पविनिन्दितकान्तिरपि तस्य प्रधानसहायिकासीत् । नाटकपरिचालनायां तस्य दक्षता नाटचरसिकैः सर्वैः सदैवाभिनन्दिता ।

न केवलं संस्कृतशिक्षाप्रसारे, अपि तु भारतीयसनातनधर्मसंरक्षणे चास्याग्रहातिशयः परिलक्ष्यते । ब्राह्मणोचितनिष्ठापरायणः ईश्वरे भक्तिमानसौ यदा कस्यचित् सदाचारस्खलनं ज्ञातवान् तदा मनसि वेदनामन्वभवत् । किन्तु तदर्थं न कमप्यभर्त्सयत् । प्राकृतजनान् धर्मस्य रहस्यं बोधयितुं कानिचित् पुस्तकान्यप्यसौ रचितवान् । श्रीश्रीसीताराम दास ओङ्कारनाथप्रवर्त्तितायाः 'आर्य्याशास्त्र'ग्रन्थावल्या असौ प्रधानसम्पादक आसीत् ।

१३७९ तमबङ्गाब्दे श्रावणस्यैकादशदिवसे (१९७२ तमखीष्टाब्दे जुलाइमासस्य सप्तविंशदिवसे) असौ महाप्राणो हुगलीमण्डलान्तर्गतभद्रकालीग्रामे काश्यपाश्रमनाम्नि स्वीयवासभवने रात्रौ सज्ञानं लोकान्तरं गतः । स्वदेशाय तथा स्वजनेभ्य आजीवनसाधनालब्धज्ञानराशिं महादर्शं च प्रदाय सकलपार्थिवबन्धनेभ्यो विमुक्तेनाक्षया ब्राह्मी स्थितिरनेन प्राप्ता । विरहक्लान्ता वयं सुरभारतीसेविनस्तस्यानुरक्तशिष्या बान्धवाश्च न केनाप्युपायेन दुस्तरशोकार्णवं तर्तुं शक्नुमः । चिराय एव बङ्गस्य गौरवरविरस्तमितः । तस्य स्मृतिस्तु केवलमस्मान् ज्ञापयति—

"शरीरं क्षणविध्वंसि, कल्पान्तस्थायिनो गुणा" इति

परमश्रद्धेयमहामहोपाध्याय डि लिट् कालीपद तर्काचार्य्य
महाकविमहोदयस्य महाप्रयाणे—

# यत्किञ्चित्

[ निबन्धकः—श्रीदुर्गाप्रसन्न विद्याभूषणः ]

तर्काचार्य्यः ख्यातकालीपदाख्यः
श्रेष्ठो विद्वान् संस्कृतासक्तचेताः ।
मान्यः सर्व्वैः सर्व्वशास्त्रार्थवेत्ता
कालग्रस्तः सोऽस्तमापद् गतायुः ॥ १ ॥
आसीद् यः सुरभारतीप्रवचने यद् वा तया लेखने
सोत्साहश्चिरजीवनं स्थिरमतिर्लोकप्रियः पण्डितः ।
दौर्भाग्यं सुरभारतीं श्रितवतां विद्यावतां निश्चितं
कालग्रासगतो यदद्य स जनो विद्वत्प्रवीणः कविः ॥ २ ॥
तस्योत्साहकथा नहीह वितथा नान्यस्तथा पण्डितः
सोत्साहः सुरभारतीप्रचलने बङ्गे द्वितीयोऽपरः ।
तर्के कर्कशबुद्धिरप्यतितरां काव्ये परः कोमलो
मान्यः पण्डितमण्डलीजनणे नास्ते स मर्त्त्ये बुधः ॥ ३ ॥
साहित्येष्वतिकोमलेषु कठिने न्याये च तुल्यप्रधी-
स्तर्काचार्य्यसमानकोविदवरो भाग्येन लभ्यः क्वचित् ।
कल्कत्तानगरे च संस्कृतमहाविद्यालयेऽध्यापना-
ल्लब्धं येन यशोऽतिनिर्म्मलमहो सोऽस्तं गतः पण्डितः ॥ ४ ॥
नानानाटकभव्यकाव्यरचना यल्लेखनीनिर्गता
विद्वच्चित्तचमत्कृतिं वितनुते शश्वत् प्रविष्टा श्रुतौ ।
विद्वन्मोदतरङ्गिणी समवहद् यद्भाषणाकर्णने
हाहा हन्त नितान्तदुर्द्दिनमिदं यत् कोविदो नास्ति सः ॥ ५ ॥

चातुर्य्यं सुरभारतीप्रवचने भाति स्म यस्य स्फुटं
माधुर्य्यं वचनावलौ च सरला भाषारसैः सङ्कुला ।
यस्यासीत् सततं सतामभिमतस्याहो विशुद्धात्मन-
स्तर्काचार्य्यमहोदयस्य मतिमान् यातः स लोकान्तरम् ।। ६ ।।
तस्यैवाद्य विपश्चितो विरहतः सद्यः क्षतिर्याभवत्
पूर्य्या नैव भवे भविष्यति पुनश्चान्येन सा केनचित् ।
सौम्यरम्यगुणोज्ज्वलः प्रथितधीर्विद्यावतामग्रणी-
स्त्यक्त्वा मर्त्यभुवं गतः स चिरतः स्थानं सुरैः सेवितम् ।। ७ ।।
यो गद्यपद्यात्मकदेवभाषया निरर्गलं वक्तुमलं महाकविः ।
आसीन्महात्मा महितो महाजनैः स कोविदो हन्त गतो विदेहताम् ।।
न केवलं नाटकलेखने पटु र्नाट्याभिनीतावपि को न तत्समः ।
तद्दक्षता शिक्षितदर्शकैर्भृशं प्रशंसितासीत् सततं विचक्षणैः ।।९।।
यासौ संस्कृतसाहित्य-परिषद् विश्वविश्रुता ।
तस्या मूलेऽस्य चेष्टैव विशिष्टा शिष्टसम्मता ।।१०।।
अजातशत्रोः सकलप्रियस्य स्वसाधनासङ्गतपूतधाम्नः ।
आत्मा यथा तस्य लभेत शान्तिंतत् कामयेऽहं विभुपादपद्मे ।।११।।
तादृक् सुविद्वद् विरहातुरेण दुर्गाप्रसन्नेन धरामरेण ।
यत् किञ्चिदेतल्लिखितं निरुद्धवाचा कथञ्चिद्गलदश्रुणैव ।।१२।।*

—०—

---

*विशेषतो द्रष्टव्यम् :—

प्रयासः पाठकवर्य्याः, परिषत्पत्रिकाया "स्तर्काचार्य्यस्मृति" संख्यायां यावन्तो लेखा अस्माभिर्लब्धुं सम्भाव्यमाना आसन्, तर्काचार्य्यप्रीतेर्निदर्शन-मुपदर्शयद्भिर्लेखकवर्य्यैरहमहमिकया ततोऽप्यधिकसंख्यका लेखाः संलिख्या-स्मभ्यं दत्ताः। तेन प्राङ् निर्दिष्टायामस्यां त्रैमासिक्यां संख्यायां तत्तल्लेखानां स्थानं दातुमपारयद्भिरगतिकतया कस्यांचिदपरस्यां त्रैमासिक्यां "तर्काचार्य्य-स्मृति" संख्यायामेते लेखाः प्रकाशयिष्यन्ते। आशास्महे, कारणेनैतेन दोष-मपश्यन्तो भवन्तः प्रीतिमेवास्मासु भक्ष्यन्ते इति।

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम्॥


| Vol. VI No. 4 | १८९५ शकीये श्रावणे १३८० बङ्गाब्दीये ५६तम-वर्षस्य ४र्थ-संख्या | August 1973 |
|---|---|---|


# विज्ञानपाठार्थिनां संस्कृतपठनेन प्रयोजनमस्ति न वा

[ निबन्धक :—श्रीरघुनाथ घोषः बि.ए. (अनार्स) ]

विज्ञानशब्दस्य सामान्यतोऽर्थो विशेषज्ञानम्। कौतूहलनिवृत्त्यर्थं ज्ञानाहरणमेव विज्ञानस्योद्देश्यम्। प्रकृतेः कस्यचित् निर्दिष्टविभागस्य सम्बन्धे ज्ञानं वैज्ञानिकज्ञानम्। अत्र विज्ञानशब्दस्य विशेषार्थो बहिर्विज्ञानमेव। एकदा कौतूहलनिवृत्त्यर्थं ज्ञानस्पृहामवलम्ब्य दर्शनस्य विस्तृते क्रोड़े सर्वेषां ज्ञानानां स्थानमासीत्। ततो यदा विश्वस्य विभिन्नविभागसम्बन्धि ज्ञानं जायते तदैव विज्ञानस्य जन्म।

मातृभाषया शिक्षादानमेवोचितम्। विदेशीयभाषया विद्याचर्चायां प्रायशो भाषाशिक्षैव छात्राणां प्रतिबन्धकस्वरूपा भवति। विदेशीयभाषया विज्ञानचर्चा छात्राणां श्रमसाध्या। मातृभाषया लब्धो विषयो यथा हृदयग्राही भवति न तथा भवति भाषान्तरेण। नानाविधप्रतिबन्धकं दूरीकृत्य शिक्षापथस्य ऋजुत्वकरणाय विज्ञानशिक्षाया अपि संयोगसाधिका मातृभाषा भवेत्।

भारतवर्षे मातृभाषया विज्ञानचर्चायां प्रतिबन्धकस्वरूपा भवति तस्या भाषाया दुर्बलता। मातृभाषया शिक्षादाने विज्ञानस्य बहवः पारिभाषिकाः शब्दा अविकृताः स्थास्यन्ति। तेन विभीषिकामया भाषागतकाठिन्यादि-दोषास्तिष्ठेयुः। परिभाषायाः प्रस्तुतिसाधनाय संस्कृतशिक्षया विद्यते प्रयोजनम्। अनन्तैर्धातुप्रत्ययादिभिः नूतनशब्दरचनायां पारदर्शिनी संस्कृतभाषा प्रयोजनानुरोधेन सम्प्रसरणशीला। अतो वैज्ञानिक-परिभाषाया मातृभाषायां रूपदाने संस्कृतशिक्षापरिहार्य्या। मातृभाषया विज्ञानालोचनार्थं प्रयोजनीयस्य क्षेत्रस्य सृष्टिर्वैज्ञानिकेन कर्त्तव्या। वैज्ञानिकस्तादृशः शक्तिमान् न भवेत् चेत्तर्हि विदेशीयभाषार्जनेऽक्षमं जनं निकषा विज्ञानं परकीयं धनमिव चिरं परकीयमेव तिष्ठेत्। ईदृशशक्ति-लाभार्थं संस्कृतशिक्षायै श्रमोऽवश्यं कर्त्तव्यस्तैः।

संस्कृतं हि विज्ञानस्य जननीस्वरूपम्। संस्कृतं चिकित्सादिविद्यानां धारकमासीदिति मया प्रदर्श्यते। चिकित्साविद्या प्राचीनकाले संस्कृत-भाषायामालोचिता। पुरा कृत्रिमाङ्गप्रत्यङ्गैश्छिन्नस्याङ्गस्य पूरणं समभवत्। ऋग्वेदे एवास्य प्रमाणमस्ति। सा ऋक् यथा—

"चरित्रं हि वेरिवाच्छेदि पर्ण-
माजा खेलस्य परितक्म्ययाम्।
सद्यो जङ्घामायसीं विश्पलायै
धने हिते सर्त्तवे प्रत्यधत्तम्॥"

अग्निमान्द्यस्य प्रतिकारविषये विभिन्ना उपाया मनीषिभिः प्रदर्शिता आयुर्वेदशास्त्रे। यथा—

"वचालवणतोयेन वान्तिरामे प्रशस्यते।"
"अन्नं विदग्धं हि नरस्य शीघ्रं
शीताम्बुना वै पारिपाकमेति।

तत् तस्य शैत्येन निहन्ति पित्त-
मक्लेदिभावाच्च नयत्यधिस्तात् ॥"

पुराकाले पृथिव्या आवर्तनतत्त्वमाविष्कृतम्। पृथिवी सूर्य्यं परित आवर्तते इति तत्त्वमाविष्कृतं भास्कराचार्य्यैः—"चला पृथवी स्थिरा भाती"-त्यनेन। 'ग्यालिलिओ' महोदयस्य तत्त्वमिदं प्रागेव भारतीयमनीषिभिः प्रमाणितम्।

"धर्म ओ आध्यात्मिकता" इति प्रबन्धे श्रीअरविन्दैरुक्तं यद् भारतीया मनीषिणो युक्त्या परीक्षया च बहूनां वैज्ञानिकतत्त्वानां पूर्वाभासं प्रदत्तवन्तः। तानि पूर्वप्रदत्तानि वैज्ञानिकतत्त्वानि पश्चात् इउरोप-देशवासिभिराविष्कृतानि।

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।
स्थाणुमन्येऽनुसंयान्ति यथाकर्म यथाश्रुतम् ॥"

इत्यनेन प्रमाणितं वृक्षः प्राणवानिति तत्त्वम्। तदुक्तं प्रश्नोपनिषदि—"स प्राणमसृजत, प्राणाच्छ्रद्धां खं वायुर्ज्योतिरपि इन्द्रियमि"त्यादि। अतो वृक्षः प्राणवानिति पश्चादाविष्कृतं वैज्ञानिकतत्त्वं संस्कृतसाहित्ये न नूतनं वस्तु।

भारतवर्षस्य प्राचीन-विज्ञान-चर्चायाः पुनर्जीवनदाने तेषां वैज्ञानिकतत्त्वा-नामाधुनिकतया रूपदाने च वर्तमानविज्ञानपाठार्थिनां भूमिका महत्येव। अस्मिन् कार्ये ते न सचेष्टाश्चेत्तर्हि अस्माकं संस्कृतिमृ तैव तिष्ठेत्। पुनर्जीवन-दानकाले तेषां मनसि उदेति ते न निःस्वा इति। भारतीयसंस्कृतेः सुमहतो ज्ञानभाण्डारस्य सन्धानं प्राप्य ते गर्विता भवेयुः। रामेन्द्रसुन्दरत्रिवेदि-महोदयाः आचार्य्यप्रफुल्लचन्द्ररायमहोदयाश्चास्य ज्ञानभाण्डारस्य सन्धानं प्राप्तवन्तः, यतस्ते संस्कृतज्ञा आसन्। तेषां पदाङ्को विज्ञानपाठार्थिभिरनु-सर्त्तव्यः। वैज्ञानिकानां साहित्यिकानां दार्शनिकानाञ्च सर्वेषां लोका-

नामुत्स एक एवेति मत्वा ते आनन्दिता अभवन्। वैचित्र्येष्वेकत्वमस्तीत्यनुभवोऽपि जातीयसंहतिं रक्षति।

कश्चिद्विज्ञानपाठार्थी संस्कृतज्ञश्चेदनायासेनासौ गवेषणाकार्य्ये साफल्यं लभेत। विख्यातो वैज्ञानिकः Oppenheimer महोदयो गवेषणाकार्य्यसिद्धये संस्कृतं ज्ञातवान्। अमृतबाजारपत्रिकायां प्रकाशिता निम्नोक्ता पङ्क्तिरेवास्य प्रमाणम्।

"The importance of the studies of Sanskrit stressed at the recent International conference reminds us of famous scientist Dr. Robert Oppenheimer who was a scholar of Sanskrit. Dr. Oppenheimer learnt Sanskrit to study Hindu scriptures in the original. When the first experimental "Atomic Bomb" exploded, for test in July 16, 1945 at the New Mexico desert, the awe-inspiring phenomenon reminded Dr. Oppenheimer of the sloka of the Gita—"Brighter than thousand suns.""

# बौद्धप्रत्यक्षविमर्शः

[ निबन्दकः—श्रीहेरम्बनाथ चट्टोपाध्यायः ]

अतएव विवरणानुगैर्वैदान्तिकैरादौ विषयप्रत्यक्षस्य स्वरूपं निर्धार्य्य प्रत्यक्षज्ञानस्य प्रत्यक्षप्रमाणस्य च स्वरूपं निरूपितम्। अर्थात् ते विषयतः एव प्रत्यक्षं प्रति दृष्टिमर्पयामासुर्न तु प्रमाणं प्रमेयं प्रति। भामतीपन्थिनो वैदान्तिकास्तु वाचस्पति-प्रभृतयः आदौ प्रत्यक्षप्रमाणस्य स्वरूपं निरूपयामासुः, सिद्धान्तितं च तैर्यत् प्रत्यक्षप्रमाणस्य ज्ञानमेव प्रत्यक्षज्ञानं तद्विषयश्च विषयप्रत्यक्षम्। अतएवादौ भामतीमतानुगधर्मराजाध्वरीन्द्रकृतवेदान्तपरिभाषोक्तं लक्षणं विश्लेषयिष्यामः [अत्र विशेषस्तु वेदान्तपरिभाषायाः प्रयोजनपरिच्छेदे, भामतीटीकायाः अध्यास प्रथमसूत्रस्य च भामत्यां, पञ्चपादिकाविवरणस्य अध्यासे प्रथमसूत्रस्य विवरणे, ब्रह्मविद्याभरणादिग्रन्थेषु च द्रष्टव्यः]।

ज्ञानगतप्रत्यक्षस्वरूपनिरूपणप्रसङ्गतः परिभाषाकृताभिहितं यदिन्द्रियप्रणालिकया अन्तःकरणं विषयाकारे परिणतं भवति। इयं नाम वृत्तिः। तथाहि दृश्यवस्तु यदा द्रष्टुश्चक्षुरिन्द्रियस्य पुरतः आगच्छति तदा तस्य स्वस्थमन्तःकरणम् इन्द्रियमार्गेण विषयदेशपर्य्यन्तं धावति विषयाकारं च परिगृह्णाति। इयं नामान्तःकरणस्य वृत्तिः। तद्वशाच्च द्रष्टुर्विषयगतमज्ञानमपगतं भवति, विषयश्च द्रष्टरि प्रतिभातः स्यात्। इदमेव विषयप्रत्यक्षम्। अतएव अन्तःकरणवृत्त्यवच्छिन्नचैतन्येन विषयावच्छिन्नचैतन्यस्य अभेदः स्यात् तद्वशाच्च विषयो द्रष्टृगोचरो भवेत्। तदुक्तम्—तथाच तत्तदिन्द्रिययोग्यवर्त्तमानाबाधितविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्'। (वेदान्तपरिभाषा, प्रत्यक्षपरिच्छेदः पृः ६२)।

अत्रायं प्रश्नावकाशः,—सर्वत्र ज्ञाने ज्ञातापि भासमानः स्यात्। परिभाषाकृता कृते लक्षणे तु प्रमातुरनुल्लेखात् लक्षणन्यूनता भवत्येव। तत्राह धर्मराजाध्वरीन्द्रः—अखिलं ज्ञानं ज्ञातारं प्रति प्रकाशयति विषयं द्वारं तु विषयप्रकाशस्य प्रमाणमेव। ज्ञातारमन्तरेण ज्ञानस्य प्रश्नो नोदेत्येव। उक्तलक्षणे स्पष्टतोऽनुल्लिखितोऽपि फलतो ज्ञाता उल्लिखित एव। प्रमाणचैतन्यमिति कथनात् स्वत एव प्रमातृचैतन्यस्य कथनं स्यात्, अतएव प्रमातृचैतन्यस्य पृथगनुल्लेखः। विषयगतप्रत्यक्षस्वरूपनिर्णयप्रसङ्गतो धर्मराजाध्वरीन्द्रेणाभिहितं यत् ज्ञात्रा सह अखिलपदार्थानामभेदाद् घटपटादीनां प्रत्यक्षत्वमिति। तथाहि घटादेर्विषयस्य प्रत्यक्षत्वन्तु प्रमात्रभिन्नत्वम्। (वेः पः, पृः ६३)।

ननु ज्ञातुश्चेतनपदार्थत्वात् घटपटादेश्च जड़पदार्थतया तयोरभेदस्तु कथमिति चेदुच्यते प्रमातुः यत्स्वरूपत्वात् चेतनपदार्थत्वाच्च तदस्तित्वव्यतिरेकेण जड़स्य विषयस्य नास्ति स्वतन्त्रमस्तित्वम्। जड़पदार्थाश्चैतन्ये प्रमातरि वा आरोपिताः प्रकाशतां भजन्ते। अत एवेदं गम्यते यद्विषयस्य स्वपरिच्छिन्नचैतन्ये कल्पिताध्यासप्रभाववशात् तयोर्जड़चैतन्ययोः भेदो नावगम्यते। तदेव विषयगतं प्रत्यक्षम्। विवरणानुगैः वैदान्तिकैर्विषयगतप्रत्यक्षमेव स्वीकृतम्। विषयेऽस्मिन् ते धर्मराजाध्वरीन्द्रानुवर्त्तिनः इति कृत्वा तत्कृतं लक्षणं न पृथगुपन्यस्तवन्तः।

तत् सिद्धं वेदान्तमतेऽपि इन्द्रियसंयोगः प्रत्यक्षकारणत्वेन स्वीकृत इति। इन्द्रियसंयोगस्य च कारणता नैयायिकसम्मतप्रत्यक्षलक्षणखण्डनप्रसङ्गतो युक्त्या खण्डिता। साप्यत्र प्रयोज्येति कृत्वा ग्रन्थविस्तृतिभयात् न पुनरुल्लिखिता।

तत्त्वसंग्रहकृता शान्तरक्षितेन वेदान्तमतखण्डनप्रसङ्गात् अभिहितं यद्वैदान्तिकाभिमतं नित्यज्ञानं युक्त्यनुभवविरुद्धम्। ज्ञानातिरिक्त-वस्त्वस्वीकारात् न किञ्चिदपराद्धं तैः, परन्तु विज्ञानस्यास्य नित्यत्वकथनमयुक्तिसिद्धम्। सदेव नित्यसञ्ज्ञाचानित्यम्। रूपरसबोधकविज्ञानं सदा न

समावस्थं स्यादिति अनुभवादेव लभ्यते, यदेव विज्ञानं रूपाभिधेयविषय-संस्पर्शाद् रूपप्रतिभासि तदेव शब्दादिविषयान्तरसंस्पर्शादन्यस्य विषयस्य प्रतिभासकं भवतीति ज्ञातमेव। विज्ञानस्य नित्यत्वे तस्य स्वरूपं प्रतिवस्तु न भिन्नं स्यात्। पुनश्च सर्वविषयाश्रयिणो विज्ञानस्य प्रतिभासकरूपेण सकृदेव तथ्यप्रकाशः सम्भवेत्। परन्तु दृश्यते च प्रतिक्षणं नवनवरूपेण आविर्भूतम्। तस्माद् विज्ञानं नित्यमिति वैदान्तिकोक्तिरग्राह्या एव। उक्तं तत्त्वसंग्रहे—

तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः।
रूपशब्दादिविज्ञानां (ने ?) व्यक्तं भेदोपलक्षणात्॥ ३३०
एकज्ञानात्मकत्वे तु रूपशब्दरसादयः।
सकृद्वेद्याः प्रसज्यन्ते नित्येऽवस्थान्तरं न च॥ ३३१ इति।

कमलशीलकृतायां टीकायां तु विशदीकृतम्—'नित्यता हि नाम तादवस्थ्यमुच्यते, अतादवस्थ्यं त्वनित्यता, न च रूपशब्दादिप्रतिभासि-विज्ञानमेकावस्थं सर्वदानुभूयते, किन्तु क्रमेण कदाचिद्रूपप्रतिभासमन्यदा च शब्दादिप्रतिभासम्। तद्यदि नित्यैकज्ञानप्रतिभासात्मका अमी शब्दादयः स्युस्तदा विचित्रास्तरणप्रतिभासवदसकृदेव प्रतिभासेरन्।'

पुनश्च प्रकाशस्वरूपस्य विषयस्पर्शशून्यस्य ज्ञानस्य प्रत्यक्षेण प्रतिपादनं न सम्भवति तस्य असत्स्वरूपत्वात्। तदुक्तं तत्त्वसंग्रहे—

रूपादि वित्तितो भिन्नं न ज्ञानमुपलभ्यते।
तस्याः प्रतिक्षणं भेदे किमभिन्नं व्यवस्थितम्॥ ३३२।

जैनपण्डितेन प्रभाचन्द्राचार्य्येण प्रमेयकमलमार्त्तण्डग्रन्थे वैदान्तिका-भिमतस्य सिद्धान्तस्य अयौक्तिकत्वं दर्शितं, ग्रन्थविस्तृतिभयान्नेह निवेद्यते। (अत्र प्रमेयकमलमार्त्तण्डे ६४-७७ पृः द्रष्टव्यम्)।

साम्प्रतं प्रकृतमनुसरामः। कल्पनाशून्यमभ्रान्तज्ञानमेव प्रत्यक्षमिति बौद्धसिद्धान्तः। आचार्य्येण जयन्तभट्टेन न्यायमञ्जरीग्रन्थे अस्य लक्षणस्य समालोचनं विहितम्। तेन हि प्रतिपादितं यद्बौद्धमतानुसारं कल्पनामात्रमेव अयथार्थाकारमादाय प्रवृत्तम, अतएव स्वाश्रयीभूतवस्तुनो यथार्थस्वरूपमनाच्छादितं विधाय नोत्पद्यते। जातिगुणक्रियाणामद्रव्य-रूपेण कल्पना पञ्चविधा। ताश्च क्वचिदभेदेऽपि भेदकल्पनात् क्वचिच्च भेदेऽप्यभेदकल्पनात् उच्यन्ते। तस्मात् कल्पना कदापि परमार्थतो वस्तुनः स्वरूपावगाहिनी न भवति। तदुक्तम्—

तस्मादतात्त्विकाकारसमुल्लेखपुरःसराः।
न यथावस्तु जायन्ते कदाचिदपि कल्पनाः॥

पञ्च चैताः कल्पना भवन्ति—जातिकल्पना, गुणकल्पना, क्रियाकल्पना, नामकल्पना द्रव्यकल्पना चेति। ताश्च क्वचिदभेदेऽपि भेदकल्पनात् क्वचिच्च भेदेऽप्यभेदकल्पनात् कल्पना उच्यन्ते।

जातिजातिमतोर्भेदो न कश्चित् परमार्थतः।
भेदारोपणरूपा च जायते जातिकल्पना॥

(न्यायमञ्जरी पृः १२२-२३)।

ननु यद्यभेदे भेदं भेदे चाभेदमारोपयन्त्यः कल्पनाः प्रवर्त्तन्ते, तत् कथमासु बाधकः प्रत्ययो न जायते शुक्तिकारजतबुद्धिवत्? अत्राहुः बौद्धाः,—यत्र वस्तु वस्त्वन्तरात्मनावभासते तत्र बाधको भवति मरीचिष्विव जलबुद्धौ, इह तु न जात्यादिवस्त्वन्तरमस्ति यतो वस्त्वन्तरात्मनाऽस्य ग्रहो भवेत्। (न्यायमञ्जरी पृः १२५)। एवं बौद्धसिद्धान्तमुल्लिख्य सयुक्तिकं खण्डितवान् जयन्तपादः। सविकल्पकप्रत्यक्षस्य अप्रामाण्यमुपजीव्य या युक्तिरुपन्यस्ता बौद्धाचार्य्यैः, तत्र जयन्तस्य मतेन भवति प्रश्नावकाशः।

'किं शब्दार्थस्वभासित्वगर्भीकृतमसदर्थवाचित्वं तदप्रामाण्यकारणमभिमतम्.... (पृः १२६)...तत्र तावन्न शब्दसंसर्गयोग्यार्थग्रहणद्वारकमसदर्थग्राहित्वमेषामप्रामाण्यकारणमभिधातुं युक्तम्। शब्दार्थस्य वास्तवस्य समर्थयिष्यमाणत्वात्। कः पुनरसाविति चेद् य एव निर्विकल्पके प्रतिभासते'। (पृः १२७)

अत्र बौद्धा वदन्ति यदर्थालीकनिबन्धनं सविकल्पकं प्रत्यक्षं नाप्रमाणं परन्तु सविकल्पकप्रत्यक्षविषयविश्लेषणादिदमालोच्यते यद् वस्तुव्यतिरिक्ता जात्यादयः कति पदार्थाः प्रत्यक्षे भासमाना भवन्ति ये यथार्थतो नास्तित्वशीलाः। कल्पितविषयाणां प्रत्यक्षान्तर्भूतत्वात् प्रमाणत्वेन ग्रहणं न युक्तियुक्तम्। पुनश्च सविकल्पकप्रत्यक्षे नामवाचकशब्देन अर्थस्य यः सम्बन्धः प्रतीयमानः सोऽपि अवास्तवः। अवास्तवं सम्बन्धमवगाह्य या नाम प्रतीतिरुपजायते किं जयन्तभट्टेन सा प्रमाणत्वेन स्वीकृता स्यात्? पुनश्च प्रत्यक्षकारणे शब्दसङ्केतस्य स्मरणस्य वा आवश्यकत्वं न स्वीकृतं, परन्तु शब्दार्थयोर्बोधे तदावश्यकत्वमैकान्तिकम्। तत् प्रत्यक्षप्रमाणस्य कारणसमष्ट्यनन्तर्गततया कथं प्रत्यक्षप्रमाणस्य अन्तर्गतत्वम्। तस्मात् सविकल्पकं प्रत्यक्षं प्रत्यक्षप्रमाणत्वेन न ग्राह्यम्।

[ युक्त्यन्तरेण यानि पुनर्जयन्तभट्टेन समुत्थापितानि बौद्धसिद्धान्तदृष्ट्या न तानि ग्रहणीयानि। नैयायिकैरिन्द्रियाणां प्राप्यकारित्वं स्वीकृतं न बौद्धैः। जात्यादीनां वास्तवास्तित्वं नाङ्गीकृतं बौद्धैः। स्वीकृतं पुनर्जयन्तभट्टेन। एवं विरुद्धदृष्टिवशादेव यद्दोषावारणं कृतं जयन्तभट्टेन बौद्धमतानुसारं न तद् ग्रहणयोग्यम्। अत्र मौलिकसिद्धान्तभेद एव कारणम्। अत्र विशेषस्तु न्यायमञ्जरीग्रन्थे (पृः १२६-१४५) द्रष्टव्यः।

जयन्तभट्टेन धर्मकीर्त्तिकृतप्रत्यक्षलक्षणे अभ्रान्तमितिपदप्रयोगस्य अयौक्तिकत्वं कल्पनापोढमिति प्रयोगेणैव भ्रान्तिज्ञाननिरासात्। तदुक्तम् अभ्रान्तपदस्यापि व्यावर्त्यं न किञ्चन तन्मतेन पश्यामः। ननु तिमिरा-

शुभ्रमणनौयानसंक्षोभाद्याहितविभ्रमस्य द्विचन्द्रालातचक्रचलत्पादादिदर्शनमपोह्यमस्य परैरुक्तम्'। (पृः १४७)।

धर्मोत्तरटीकाकृता पुनः अभ्रान्तपदस्य सार्थक्यं दर्शितं यथा—तत्रासत्यभ्रान्तग्रहणे गच्छद्वृक्षदर्शनादिप्रत्यक्षं कल्पनापोढ़त्वात् स्यात्। ततो हि प्रवृत्तेन वृक्षमात्रमवाप्यते इति संवादकत्वात् सम्यग्ज्ञानम्, कल्पनापोढ़त्वाच्च प्रत्यक्षमिति स्यादाशङ्का। तन्निवृत्त्यर्थमभ्रान्तग्रहणम्। (पृः ४५, न्यायविन्दुग्रन्थस्य ४र्थ सूत्रस्य टीकामाश्रित्य)।

बौद्धमतसिद्धव्यावृत्तिमुल्लिख्य भाषितं जयन्तभट्टपादेन यत् नौयानस्य द्रुतगतित्वात् तिमिररोगवशाच्च बुद्धिविकारतो यद् भ्रमात्मकं प्रत्यक्षं भवति तत्रातिव्याप्तिवारणाय अभ्रान्तमिति विशेषणं प्रयुक्तं तत्तु न युक्तियुक्तम्। उक्तं हि तेन न्यायमञ्जर्य्याम्—'सत्यमुक्तम्, अयुक्तन्तु तत् कल्पनापोढ़पदेनैव तद्व्युदाससिद्धेः। तत्रापि निर्विकल्पकं ज्ञानमेकचन्द्रादिविषयमेव, विकल्पास्तु विपरीताकारग्राहिणो भवन्ति। यथा मरीचिग्राहिणि निर्विकल्पके सलिलावशायी विकल्प इति। (पृः १४७)।

अस्याक्षेपस्य परिहारार्थं बौद्धमतमनुसृत्य इदं वक्तुं शक्यते यद् भ्रमज्ञानस्थले अर्थगतस्य वा इन्द्रियगतस्य वा दोषस्य अस्तित्वं स्यादेव। तिमिररोगाक्रान्तस्य द्विचन्द्रदर्शनादिस्थले चक्षुरिन्द्रियगततिमिररोग एव कारणम्। तिमिररोगवशाच्चक्षुस्तारकाया द्विधाभूतत्वाद् द्विचन्द्रदर्शनं भवति, अतएव तत्र द्विचन्द्रस्य निर्विकल्पकज्ञानमपि सम्भवति। मरुमरीचिकादर्शनस्थले जलस्य न निर्विकल्पकं ज्ञानं, निर्विकल्पके ज्ञाने बालुकाराशौ पतितानां सूर्य्यकिरणानां प्रत्यक्षत्वं भवति। परन्तु बालुकासंस्थानं सूर्य्यकिरणस्य पातनप्रक्रिया च तत्र विषयदोषत्वेन ग्राह्यम्। तद्वशाच्च उत्तरे काले जलस्य सविकल्पकं प्रत्यक्षं भवति। अतएव कदाचिदिन्द्रियदोषात् भ्रमोत्पत्तिः कदाचिच्च विषयदोषादिति कथनं न युक्तिसिद्धम्। निर्विकल्पके ज्ञाने विषयदोषाभावः सविकल्पकत्वे एव तस्यास्तित्वमित्यत्र

किं कारणम्? पुनश्च यावद् बाधकस्य निश्चयेन नोपस्थितिः, तावत् पूर्ववर्त्तिनो ज्ञानस्य मिथ्यात्वं न निरूपितं भवेत्। बौद्धमते तु सर्वपदार्थानां क्षणिकत्वस्वीकाराद् बाध्यज्ञानविनाशादनन्तरमेव बाधकज्ञानोत्पत्तिः। अतएव तेन बाधकज्ञानेन पूर्ववर्त्तिनो ज्ञानस्य भ्रमत्वनिर्धारणं न सम्भवति, यतो विनष्टस्य ज्ञानस्य याथार्थ्यं भ्रमत्वं वा निरूपयितुं न शक्यते। तस्मात् निरर्थकमेव अभ्रान्तपदप्रयोग इति जयन्तभट्टाशयः। तदुक्तं न्यायमञ्जर्य्याम्—ननु तिमिरेण द्विधाकृतं चक्षुरेकतया न शक्नोति शशिनं ग्रहीतुमिति निर्विकल्पकमपि द्विचन्द्रज्ञानम्। यद्येवं तरङ्गादिसादृश्यरूषितमूषरे मरीचिचक्रं चक्षुषा परिच्छेत्तुमशक्यमिति तत्रापि निर्विकल्पकमुदकग्राहि विज्ञानं किमिति नेष्यते। (पृः १४७) अत्र श्लोकद्वयमुल्लेखयोग्यम्—

इति सुनिपुणबुद्धिर्लक्षणं वक्तुकामः
पदयुगलमपीदं निर्ममे नानवद्यम्।
भवतु मतिमहिम्नश्चेष्टितं दृष्टमेतज्
जगदभिभवधीरं धीमतो धर्मकीर्त्तेः॥
श्रोत्रादिवृत्तिरपरैरविकल्पिकेति
प्रत्यक्षलक्षणमवर्णि तदप्यपास्तम्।
साम्यान्नयस्य न च सिध्यति बुद्धिवृत्त्या
द्रष्टृत्वमात्मन इति प्रतिपादितं प्राक्॥

(पृः १४८, न्यायमञ्जरी)

जयन्तभट्टकृतस्याक्षेपस्य परिहारार्थमिदं किञ्चिद् वक्तुं शक्यते। निर्विकल्पकज्ञानस्यैव प्रत्यक्षत्वस्वीकारात् प्रत्यक्षलक्षणे अभ्रान्तमिति पदस्य नैरर्थक्यं भ्रमज्ञानमात्रस्य कल्पनात्मकतया कल्पनापोढपदेनैव भ्रमज्ञानस्य निवारितत्वादिति जयन्तभट्टाशयः। नेदं शोभनम्। भ्रमज्ञानं कल्पनात्मकज्ञानञ्च न पर्य्यायकम्। भ्रमज्ञानादनन्तरं प्रवृत्त्या न ज्ञानप्रतिपाद्यवस्तुलाभः,

अतएव न तज्ज्ञानमविसंवादि। बौद्धमते तु सविकल्पकज्ञानादनन्तरं प्रवृत्त्या वस्तुलाभः। तत्र सविकल्पकज्ञानोत्तरे काले वस्तुलाभे यथार्थ-प्रयोजकं किं नाम ज्ञानं तच्चिन्तनीयम्। यद्वस्तु निर्विकल्पकेन ज्ञानेन प्रत्यक्षविषयीभूतं, सविकल्पकज्ञानादनन्तरं प्रवृत्त्या तस्यैव निर्विकल्पकज्ञानस्य विषयीभूतस्य वस्तुनो लाभः। नाम्ना रूपेण च संश्लिष्टं सद् वस्तु व्यवहारोपयोगि भवति, व्यवहारसाधनार्थं हि वस्तुप्रयोजनम्। अतएव प्रवृत्तेः प्राग् वस्तुनो नामनिर्देशः। प्रवृत्तिक्षेत्रे वस्तुनो विशेषनाम्नः आवश्यकत्वम्। तन्नाम तु न वस्तुनः स्वरूपं, नाम्यास्तित्वमस्ति काल्पनिकमेवेदमिति बौद्धाचार्य्याणामाशयः। सविकल्पकेन ज्ञानेन तद्विधनामनिर्धारणं वेति। अतएव यद् वस्तुनः प्राकृतं स्वरूपं न यस्यास्तित्वं न विद्यते तद्विधस्य नाम्नो जात्यादीनाञ्च कल्पनं सविकल्पकज्ञानप्रमाणपदवाच्यं न भवितुमर्हति। सविकल्पकज्ञानव्यतिरेकेण तु वस्तु प्रति प्रवृत्तिर्न सम्भवति इति बौद्धाः स्वीकुर्वन्ति। तस्माद् दृष्टमिदं यत् सविकल्पकं ज्ञानं न वस्तुस्वरूपावगाहि, न वा विपर्य्ययज्ञानवद् विसंवादि। अतएव धर्मकीर्त्तिना कल्पनात्मकं ज्ञानं विपर्य्ययज्ञानञ्च न समपर्य्यायकं कृतं पृथग्रूपेण भ्रान्तिज्ञाननिवारक-विशेषणं प्रयुक्तम्। अभ्रान्तपदस्य व्यावृत्तिर्या धर्मकीर्त्तिना प्रदर्शिता सा तु निर्देशिता प्राक्।

बौद्धाचार्य्यो दिङ्नागस्तदीये प्रमाणसमुच्चयग्रन्थे प्रत्यक्षलक्षणे अभ्रान्त-मिति पदं न निर्देशयामास, परन्तु शान्तरक्षितेन तत्त्वसंग्रहे ग्रन्थे धर्म-कीर्त्तिना न्यायबिन्दुग्रन्थे च अभ्रान्तमिति विशेषणं प्रत्यक्षलक्षणे प्रयुक्तम्। तदेवालोचितं प्रागिति कृत्वा पुनर्नालोच्यते पुनरुक्तिभिया।

भ्रमे इन्द्रियदोषस्य कदाचित् कारणत्वं कदाचिद्वा विषयगतदोषस्य कारणत्वमिति अयौक्तिकमिति यदाक्षिप्तं जयन्तभट्टेन तन्न सम्यक्। कदा किंस्वरूपकस्य दोषस्य भ्रमकारणत्वं स्यादिति निरूपणाय कार्य्यस्वरूपं भ्रमज्ञानं तु आश्रयणीयमेव। भ्रमज्ञाने कस्यचिद्दोषस्य अस्तित्वं भवेदित्यत्र

सर्वेषामैकमत्यम्। तत्र दोषस्य केवलमिन्द्रियगतत्वं विषयगतत्वं वेत्येकतरपक्षाश्रयणमसङ्गतम्। यत्र विषयस्य अविकृतरूपत्वेऽपि द्रष्टा अन्यरूपत्वेन विषयप्रत्यक्षं वेत्ति तत्र विषयगतदोषत्वं न अपितु इन्द्रियगतदोषत्वमेवावश्यं स्वीकार्य्यम्। तथाहि धवलशङ्खसत्त्वेऽपि रोगाक्रान्तेन जनेन पीतत्वेन रोगहीनेन धवलत्वेन तस्य प्रत्यक्षं भवति। अत्र इन्द्रियदोषत्वमङ्गीकार्य्यम्। मरुमरीचिकादौ पुनः नेन्द्रियदोषत्वं विषयगतदोषत्वमेव भ्रमकारणम्। जयन्तभट्टपादेन मरीचिकादिस्थले इन्द्रियगतदोषस्य कारणत्वं स्वीकृतं नवेति तु अज्ञातमेव, परन्तु इदं बुद्धिगम्यमेव यदत्र विषयदोषत्वम्। अतएव बौद्धाचार्य्यैः सर्वानुभवव्यवहारसामञ्जस्यमाश्रित्य स्थलभेदे इन्द्रियदोषत्वं स्थानान्तरे च विषयदोषत्वमङ्गीकृतम्।

[ अत्र प्रसङ्गतो बौद्धदर्शनप्रतिपादितो भ्रमः आलोचयितुं शक्यते, परन्तु ग्रन्थविस्तृतिभयान्न तत् कृतम् ]

न्यायवार्त्तिककृता उद्द्योतकारेण बौद्धमतसिद्धप्रत्यक्षलक्षणमाश्रित्य ये दोषाः समुत्तारिताः, इन्द्रियस्य प्राप्यकारित्वविषयप्रसङ्गतस्तदालोचितमिति पुनर्नोल्लिख्यते।

प्रभाचन्द्राचार्य्येण जैनपण्डितेन प्रमेयकमलमार्त्तण्डग्रन्थे बौद्धसम्मतस्य निर्विकल्पकप्रत्यक्षस्य विरुद्धत्वेन युक्तिविशेषः समुत्थापितः, बौद्धसिद्धान्तप्रसङ्गतस्तेषां बहुलं खण्डनं विहितम्। [ अत्र विस्तरतः आलोचनं प्रमेयकमलमार्त्तण्डीयप्रथमपरिच्छेदस्य तृतीयसूत्रे द्रष्टव्यम्। पृः २७—३८ ] केवलमत्र निर्विकल्पकप्रत्यक्षविरोधतो यदुक्तं तद्विचार्य्यते। तत्र प्रमेयकमलमार्त्तण्डग्रन्थे प्रमाणवार्त्तिककृन्मतमुल्लिख्य निर्विकल्पकप्रत्यक्षस्वरूपं प्रतिपादितम्, यथा—

संहृतसकलविकल्पावस्थायां रूपादिदर्शनं निर्विकल्पकं प्रत्यक्षतोऽनुभूयते। तदुक्तम्—

संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना।
स्थितोऽपि चक्षुषा रूपमीक्षते साक्षजा मतिः॥

प्रः वाः ३।१२४

प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिध्यते।
प्रत्यात्मवेद्यः सर्वेषां विकल्पो नामसंश्रयः॥ प्रः वा ३।१२४

( प्रः कः माः पृः ३२ )

अत्राहुः प्रभाचन्द्राचार्य्याः,—'विकल्पज्ञानकारणाभावस्थले न निर्विकल्पकज्ञानोत्पत्तिसम्भवः, निर्विकल्पकज्ञानेऽपि इन्द्रियावश्यकत्वस्य स्वीकृतत्वात्। येन कारणेन इन्द्रियं निर्विकल्पकज्ञानजनकं तेनैव कारणेन तत् सविकल्पकज्ञानस्यापि जनकं भवेत्। अतएव वार्त्तिककृता यदुक्तं संहृत्य-सर्वतश्चिन्तेत्यादिकं तन्न विचारसहम्। इन्द्रिय-विषययोः सान्निध्यं प्रत्यक्षस्य कारणानि च निर्विकल्पके तथा सविकल्पके ज्ञाने सममेव आवश्यकीयानि। यदि सविकल्पकज्ञाने एव तस्य आवश्यकत्वं भवेत् ( अर्थात् निर्विकल्पके ज्ञाने इन्द्रियविषययोः सान्निध्यस्य अपेक्षा यदि न स्यात् ) तर्हि सुप्तस्य प्रमत्तस्य वा निर्विकल्पकप्रत्यक्षे का बाधा? अतएव निर्विकल्पकज्ञाने कारणविशेषा आवश्यकीयाः सविकल्पकज्ञानेऽपि तेषामावश्यकत्वमवश्यमेव स्वीकरणीयम्। तस्मात् निर्विकल्पकज्ञानमेव स्यान्नतु सविकल्पकमित्यत्र का विनिगमना? तदुक्तम्—न चात्रावस्थायां नामसंश्रयतयाऽननुभूयमानानामपि विकल्पानां सम्भवः अतिप्रसङ्गादित्यप्युक्तिमात्रम्'।

( प्रः कः माः पृः ३२ )

बौद्धमतमाश्रित्य इदं वक्तुं शक्यते यत् विषयेन्द्रियसान्निध्यरूपाणि कति कारणानि सविकल्पके तथा निर्विकल्पके प्रत्यक्षे सममेवावश्यकानि। तथापि सविकल्पकप्रत्यक्षे अतिरिक्तकारणानामावश्यकत्वम्। नामजात्यादीनां योजना एव कल्पना। कल्पनात्मकं ज्ञानमेव सविकल्पकं ज्ञानमिति

नामजात्यादियोजनार्थं केवलं विषयेन्द्रियसान्निध्यमपेक्षते
ब्दसङ्केतस्मरणादीनामावश्यकत्वमनिवार्य्यमेव स्वीकार्य्यम्। अतएव
चार्य्योद्भावितस्य प्रमाणवार्त्तिकोपरि कृतस्य आक्षेपस्य अदृढ़मूलत्वम्।
मतसिद्धं प्रत्यक्षमालोचितम्। तत्सिद्धं, नामजात्यादिकल्पनाशून्यं
त्मकं) ज्ञानमेव प्रत्यक्षम्। साम्प्रतं तत्प्रकारभेदमालोचयिष्यामः।
प्रत्यक्षं चतुर्धा विभज्यते। उल्लिखितं तत् न्यायविन्दुग्रन्थे प्रमाण-
च आचार्य्यधर्मकीर्त्तिना सैव रीतिरत्रानुसृता। वस्तुप्रत्यक्षं केन
बौद्धाचार्य्याणां मतभेदः। तद्भेदमाश्रित्यैव प्रत्यक्षभेदः।
वस्तुप्रत्यक्षं करोति व्यवहितस्थितवस्तुनः अप्रत्यक्षत्वादिति
ज्ञानमेव यथार्थतो वस्तुप्रत्यक्षकारकमिति कृत्वा ज्ञानमेव द्रष्टा
त्रान्तिकाः। नेदमङ्गीकृतं वैभाषिकैः। तेषां मतेन ज्ञानस्य
तगतित्वात् तस्य द्रष्टृरूपत्वेन कल्पने व्यवहितस्थले न
धः। अतएव ज्ञानस्य द्रष्टृरूपेण कल्पनं परिहाय इन्द्रियस्य प्रत्यक्ष-
कल्पनं युक्तियुक्तम्। वैभाषिकाणामस्य प्रश्नस्य समाधानत्वेन धर्म
न्यायविन्दुग्रन्थे प्रतिपादितं तच्चतुर्विधम् (१।७) इति।

ल्लेखितञ्च धर्मोत्तरटीकायाम्—'यैरिन्द्रियमेव द्रष्टृकल्पितं मानस-
क्षणे च दोष उद्भावितः, स्वसंवेदनं च नाभ्युपगतं, योगिज्ञानं च,
प्रतिपत्तिनिराकरणार्थं प्रकारभेदं प्रत्यक्षस्य दर्शयन्नाह तच्चतुर्विध-
(१।७ सूत्रमाश्रित्य धर्मोत्तरटीकायाम्)।

र्मोत्तरटीकाकृतामुक्त्यनुसारेण स्पष्टमिदमायातं न्यायविन्दुग्रन्थः
कसम्प्रदायभुक्त इति। अस्य ग्रन्थस्य कुत्रापि बाह्यवस्तुनो न
मिति उल्लेखो दृश्यते। अतएव सौत्रान्तिकैः बाह्यवस्तुनः प्रत्यक्षं
तमिति यदभिमतं प्रचलितं तन्न युक्तिसिद्धमिति मन्यामहे।]

न्द्रियज्ञानं मनोविज्ञानम् आत्मसंवेदनं योगिज्ञानञ्चेति प्रत्यक्षं
प्रमाणवार्त्तिककृता प्रत्यक्षतो यद्यपि काचित् कारिका

नोपरचिता, तथापि प्रत्यक्षस्य चातुर्विध्यमुपलक्ष्य आलोचनं कृतं धर्मकीर्त्तिना। [ द्वितीयपरिच्छेदे प्रमाणवार्त्तिकस्य १९१-२८३ कारिकापर्यन्तमालोचनीयम् ] तत्र इन्द्रियज्ञानमुपलक्ष्य सूत्रितं न्यायविन्दुग्रन्थे यथा 'इन्द्रियज्ञानम्'—( न्यायविन्दुः १।८ सूत्रम )। इन्द्रियाश्रितं यत् तत् प्रत्यक्षमिति सूत्रार्थः। अत्रेयं तात्पर्य्यम्—प्रत्यक्षग्राह्यवस्तुनः इन्द्रियस्य च सान्निध्यमात्रमेव तयोर्योग्यतावशात् यज् ज्ञानमुपजायते तदेवेन्द्रियज्ञानमिति अभिधीयते। इदं तु लक्षणीयं यद् विषयेन्द्रिययोर्व्यवधानासत्त्वे प्रत्यक्षयोग्यता विद्यते तद्योग्यतावशादेव प्रत्यक्षं भवति।

[ ये तावद् विषयेन्द्रिययोः सन्निकर्षं कारणरूपेण स्वीकुर्वन्ति, तेषां नये अव्यवधानमेव प्रत्यक्षोपजीवित्वेन न गृहीतम, ते तु ग्राह्यवस्तुना सह इन्द्रियस्य संयोगाख्यं सम्बन्धं स्वीकुर्वन्ति। बौद्धनये तद्विधसंयोगस्तु असिद्ध एव ]

ननु विषयेन्द्रिययोः प्रत्यक्षं प्रति समुपयोगित्वात् कथमिन्द्रियनाम्ना प्रत्यक्षस्योल्लेख इति चेदत्रोच्यते प्रत्यक्षमिति पदस्य व्युत्पत्तिगतमर्थमुपलक्ष्यैव इन्द्रियज्ञानमिति नामकरणं कृतम्। प्रतिगतमक्षं प्रत्यक्षमिति प्रत्यक्षशब्दस्य व्युत्पत्तिगतोऽर्थः इत्येवमालोचितं प्राक्। दिङ्नागेन अक्षमक्षं प्रति वर्त्तते इति अव्ययीभावसमास आश्रितः। प्रमाणवार्त्तिकटीकाकृता मनोरथनन्दिना तु प्रादिसमासाश्रयणं विहितम्। तदुक्तम्—प्रतिगतमक्षं प्रत्यक्षमिन्द्रियाश्रितमित्यर्थः। ( प्रः वाः १९१ श्लोकमाश्रित्य )। व्युत्पत्तिलभ्यार्थेन प्रतिपाद्यपदार्थनिरूपणसम्भावनायां तस्यैव ग्रहणं समीचीनम्। प्रादिसमासाश्रयेण प्रत्यक्षपदनिष्पत्तौ विषयग्राहकस्य इन्द्रियस्य प्रत्यक्षशब्दस्य प्रतिपाद्यरूपेण ग्रहणं सम्भवति, तद्रूपार्थग्रहणे इन्द्रियमेव प्रमाणमिति स्वीकृतं भवति, ज्ञानप्रामाण्यवादिनो बौद्धास्तत्तु कर्त्तुं नार्हन्ति। तस्मादिन्द्रियाश्रितं ज्ञानमेव प्रत्यक्षमिति कथितम्। तदुक्तं प्रमाणवार्त्तिके—

समीक्ष्यगमकत्वं हि व्यपदेशो न गृह्यते।
तच्चाक्षव्यपदेशोऽस्ति तद्धर्मश्च नियोज्यताम्॥ २।१६२
ततो लिङ्गस्वभावोऽत्र व्यपदेशे नियोज्यताम्।
निवर्त्तते व्यापकस्य स्वभावस्य निवृत्तितः॥ २।१६३

ननु इन्द्रियाश्रितस्य ज्ञानस्य प्रत्यक्षत्वेन स्वीकारात् ज्ञानस्य द्रष्टृत्वमपि स्वीकृतम्। स्वीकृते द्रष्टृत्वे वैभाषिकोद्भावितानां दोषाणां सम्भाव्यत्वं तु स्थितमेव। अत्रोच्यते, ज्ञानस्य द्रष्टृत्वविशेषणादेव दोषसमाधानं भवेदेव। ज्ञानं स्वयमेव विषयदेशपर्य्यन्तं धावमानं विषयप्रकाशकं न भवति। परन्तु विषयेन्द्रियसान्निध्यवशात् प्रत्यक्षयोग्यता सङ्घटिता भवति। वस्तु च ज्ञाने स्वाकारं समर्पयति। तद्वशाच्च ज्ञानं वस्तुन द्रष्टृरूपेण कल्पितं भवति। व्यवहितदेशावस्थितवस्तुना इन्द्रियस्य प्रत्यक्षोपयोगिसान्निध्याभावात् ज्ञाने न वस्त्वाकारसमर्पणम्। अतएव ज्ञानस्य द्रष्टृत्वेऽपि व्यवहितदेशस्थितवस्तु-ग्रहणप्रसक्तिः निवारिता भवेत्। विषयेन्द्रियसान्निध्यं वस्तुस्फुरणानुकूलामवस्थां द्योतयति। विना सान्निध्यं वस्तुस्फुरणावकाशाभावात् वस्त्वकारमादाय कथं ज्ञानोत्पत्तिः? कस्यां नामावस्थायां वस्तु प्रत्यक्षयोग्यं भवति तत्तु अन्वय-व्यतिरेकनियमेन निरूपितं भवेत्। तस्मात् यस्यां यस्यामवस्थायां सन्निहितायां वस्तु प्रत्यक्षं यस्याः अभावे च वस्तुप्रत्यक्षबाधाभावः सा एव प्रत्यक्षयोग्यतेति गृहीता। अन्वयव्यतिरेकात् वस्तुप्रत्यक्षयोग्यता निरूपिता भवेदिति स्वीकारादिदमवगम्यते यदिन्द्रियं विषयश्च प्रत्यक्षज्ञानानुकूलामवस्थां सृजतः न तु इन्द्रियं प्रत्यक्षस्य प्रमाणं कारणं वा। प्रत्यक्षपदार्थविश्लेषणादवगतमिदं ज्ञानमेव प्रत्यक्षमिति। तत् ज्ञानं तु विषयविशेषस्य आकृतिमादाय उपजायते। आकारग्रहणानुकूलायाः अवस्थायाः सर्जनार्थमावश्यकमस्ति विषयेन्द्रिय-सान्निध्यस्य। वस्तुतः प्रकाशात्मकज्ञानस्य परिचायकः नियामको वा ज्ञानगतविषयाकारविशेषः। ज्ञानगतस्याकारस्य प्रतीतिरूपज्ञानस्य च अभिन्नत्वात् बौद्धाचार्य्याः ज्ञानमेव प्रमाणत्वेन स्वीकुर्व्वन्ति। प्रसङ्गतः

इदमप्यत्रावधेयं यत् इन्द्रियविज्ञानप्रत्यक्षमिति नामनिर्देशात् इन्द्रियमेव प्रत्यक्षकारणमिति नाशङ्कनीयम्। विशेषितमस्माभिर्यत् प्रत्यक्षं ज्ञानविशेषः, प्रकाशात्मकज्ञानस्य करणं तु ज्ञानगतवस्तुनः आकारविशेषः विषयसारमात्रं वा। तस्मान्निर्मूला चेयमाशङ्का।

श्लोकवार्त्तिककृता कुमारिलपादेन इन्द्रियस्य ज्ञानकरणत्वं निर्दिष्टं यथा—

यद्वेन्द्रियं प्रमाणं स्यात्तस्य वार्थेन सङ्गतिः ( श्लोः वाः ४।६० )।

धर्मकीर्तिना 'इन्द्रियविज्ञानम्' इति सूत्रयता खण्डितोऽयं मतवादः।

अत्रायं भवति प्रश्नावकाशः। इन्द्रियस्य प्रत्यक्षज्ञानजनकत्वेन स्वीकारादिदमपि अवश्यमेव स्वीकरणीयं यदेकमिद्रियमेकस्यैव निर्दिष्टस्य ज्ञानस्य जनकं भावेद्यथा चक्षुरिन्द्रियं रूपज्ञानस्य घ्राणेन्द्रियं गन्धज्ञानस्य। यत्र तु एकस्मिन्नेव वस्तुनि नीलपीतादीनां विभिन्नानां रूपाणामस्तित्वं, तत्र चक्षुरिन्द्रियं युगपदेव तेषां रूपाणां ग्रहणे समर्थं न वेति प्रश्नः। इन्द्रियस्य एकज्ञानजनकतावशात् प्रत्येकं ज्ञानं पृथक् पृथग्रूपेण क्रमादुत्पन्नं भवतीति वास्तविकमेव, तथात्वे तु नानारूपविशिष्टस्य वस्तुनः प्रत्यक्षत्वमसम्भवं स्यात्, यतः सौगतनये ज्ञानानां सर्वेषां क्षणिकता नानारूपविषयाकाणामनेकज्ञानानां क्रमादुत्पत्तौ एकत्रमिलनासम्भवः। एकैकेन ज्ञानेन पुनः वस्तुनः एकैकस्यांशस्य ग्रहणं सम्भवति, न तु नानारूपविषिष्टस्याखिलस्य वस्तुनः। तत् कथमत्रोपपत्तिरिति चेदत्राहुः धर्मकीर्त्तिपादाः प्रमाणवार्त्तिकग्रन्थे विभिन्नदेशस्थितानामसंश्लिष्टानामनेकतिलानामेकेनैव चक्षुर्विज्ञानेन ग्रहणं भवतीत्यनुभवसिद्धमेव। तेनेदं प्रमाणितं भवेद्यदिन्द्रियग्राह्यविषयाणामनेकत्वेऽपि एकेनैवेन्द्रियेण एकस्मिन्नेव ज्ञाने तेषां प्रकाशः। अतएव चक्षुर्ग्राह्यविषयरूपस्य प्रकारभेदे नानात्वेऽपि रूपत्वेनैव चक्षुषा एकत्रग्रहणं सम्भवति यथा चित्रपददर्शनादौ। तदुक्तं प्रमाणवार्त्तिके—

अर्थैकायतनत्वेऽपि नानेकं दृश्यते सकृत्।
सकृद्ग्रहावभासः किं वियुक्तेषु तिलादिषु॥ (२।१६७)

[ अत्र विशेषस्तु प्रमाणवार्त्तिके द्वीतीये परिच्छेदे १६७-२४८ कारिका पर्यन्तमनुसन्धेयः ]

इन्द्रियविज्ञानमाश्रित्य एतावता पर्यालोचनेन ज्ञातमेवस्यात् यस्मिन् प्रत्यक्षे इन्द्रियमधिपतिप्रत्ययं तदेव प्रत्यक्षमिन्द्रियविज्ञाननाम्नाभिधीयते। तत्र युक्तिरित्थम् विनेन्द्रियं प्रत्यक्षं न सम्भवतीति इन्द्रियस्य कारण-हेतुत्वम्। तदेव अधिपतिप्रत्ययः।

[ बौद्धनये प्रत्ययानां चातुर्विध्यं, ते तु समनन्तरालम्बनाधिक्यपति-भेदात्। कार्य्योत्पत्तौ सौगतनये हेतूनां षड्विधत्वं स्वीकृतम्। तदुक्तम्—

कारणं सहभूश्चैव सभागः सम्प्रयुक्तकः।
सर्वत्रगो विपाकाख्यः षड्विधो हेतुरिष्यते॥ कोशस्थानम् २।४६

उत्पन्नं कार्य्यं विहाय उत्पत्तिं प्रति अप्रतिकूलाः सर्वे कारणहेतुरूपेणा-भिधीयन्ते स्वतोऽन्यः कारणहेतुः। कोशस्थानम् २।५०

चक्षुः पश्यति रूपाणि सभागं न तदाश्रितम्।
विज्ञानं दृश्यते रूपं न किलान्तरितं यतः॥

कोशस्थानम् १।४२

कारणहेत्वतिरिक्ताः शिष्टाः पञ्चहेतवः हेतुप्रत्ययाः। समनन्तर इत्यस्य अर्थस्तावन् पश्चाद्वर्त्ती, सम् इत्यस्य चार्थः समानं तुल्यमिति। अतएव तुल्यजातीयस्य अनन्तरोत्पन्नस्य प्रत्ययस्य समनन्तर—प्रत्ययसंज्ञा। चित्त-चैत्ताः आलम्बनप्रत्ययान्तर्गताः। कारणहेतोः अधिपति—प्रत्ययसंज्ञा ]

अथ मनोविज्ञानप्रत्यक्षमालोचयिष्यामः। तत्रादौ तावद्विज्ञेयं यद्बौद्धसिद्धान्तितस्य मनोविज्ञानप्रत्यक्षस्य यथार्थतः प्रमाणाभावः।

बौद्धस्वीकृतं मानसप्रत्यक्षमेवेदम्। तदुक्तं धर्मोत्तरटीकायाम्—'एतच्च सिद्धान्तप्रसिद्धं मानसं प्रत्यक्षम्। न त्वस्य प्रसाधकमस्ति प्रमाणमिति'। ( पृः ६३ )

अस्य स्वरूपं तु धर्मकीर्त्तिना न्यायविन्दुग्रन्थे सूत्रितं यथा—

स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तर प्रत्ययेण जनितं तन्मनोविज्ञानम्। (१।६) अस्यायमर्थः। चक्षुरादीन्द्रियेनाधिपति प्रत्ययरूपेण घटादिज्ञानजननाव्यवहितोत्तरक्षणे समनन्तरप्रत्ययरूपेण अन्यत् घटादिज्ञानमुपजायते। तदेव मनोविज्ञानप्रत्यक्षम्। तथाहि विषयेन्द्रियसान्निध्यवशात् आदौ जायते किञ्चित् चाक्षुषविज्ञानम्। यथा घटादयः प्रत्यक्षग्राह्याः पदार्थाः यस्य चाक्षुषविज्ञानस्य विषयाः, तथा तदुत्पत्तिक्षणमपि। यतः ज्ञानग्राह्याः घटादयः पदार्थाः स्वाकारसमर्पणात् ज्ञानविषयाः भवन्ति ( सौत्रान्तिकमतमनुसृत्यैतदुक्तम् )। ज्ञानोत्पत्तिक्षणमपि ज्ञाने स्वाकारसमर्पणात् ज्ञानविषयं भवति।

[ बौद्धनये विज्ञानं क्षणिकम्। अतएव क्षणविशेषे अनियन्त्रितस्य विज्ञानस्य आत्मलाभः न सम्भवति। ज्ञानं क्षणश्च समकालोत्पन्ने। ज्ञानं पुनः प्रकाशस्वभावम्। अतएव ज्ञानसमकालोत्पन्नं सर्वमेव वस्तु ज्ञानप्रकाशकतया प्रकाशितं भवेत्। एवं क्षणमपि ज्ञानेन प्रकाशितं स्यात्। ज्ञानेन क्षणस्य अप्रकाशितत्वे क्षणिकं विज्ञानमिति प्रयोगो न स्यात्। क्षणानुभवव्यतिरेकेण क्षणिकस्य विज्ञानस्य असिद्धिः। यद्वस्तु ज्ञाने स्वाकारं न समर्पयति तत् कदापि ज्ञानस्य विषयं भवितुं नार्हति। अतएवेदं स्वीकर्त्तव्यं बौद्धदृष्ट्यनुसारं यत् चाक्षुषविज्ञानोत्पत्तिक्षणमपि तस्मिन् विज्ञाने स्वाकारसमर्पणात् ज्ञानविषयं भवति ]

प्रथमज्ञानादव्यवहितोत्तरक्षणे तद्विज्ञानानुरूपमपरं घटादिक्षणं विज्ञानञ्च ज्ञाने स्वाकारार्पणं कुरुतः। तदेव विज्ञानप्रत्यक्षम्। बौद्धमतसिद्धस्यास्य प्रत्यक्षस्य अनुधावनं व्याख्यागम्यम्। सौगतसिद्धान्तानुसारं सर्वस्मिन्नेव

विज्ञाने एकमधिपतिप्रत्ययमेकमालम्वनप्रत्ययञ्च अवश्यमेव तिष्ठतः। विज्ञानस्य मुख्यमेतत् कारणमधिपतिप्रत्ययः, विज्ञानविषयीभूतं वस्तु एव आलम्वनप्रत्ययत्वेन गृहीतं भवति। यथा चाक्षुषविज्ञाने चक्षुरधिपति-प्रत्ययः घटादयस्तावदालम्वनप्रत्ययाः। यत्र प्रथमोत्पन्नमिन्द्रियविज्ञानं अधिपतिप्रत्ययः सत् समनन्तरप्रत्ययरूपेण अपरविज्ञानस्य जनकं भवति तत्रैव भवति मनोविज्ञानम्। प्रथमे क्षणे घटादि प्रत्यक्षं जातं, तद्व्यवहित-परक्षणे अनेकशः प्रथमोत्पन्नप्रत्यक्षमजातीयानि अनेकानि प्रत्यक्षाणि जायन्ते। इयं नाम प्रत्यक्षधारा। नेयं पुनः मनोविज्ञानप्रत्यक्षत्वेन वक्तुं शक्यते यतः द्वितीयादिक्षणोत्पन्नप्रत्यक्षस्य कारणानुसन्धानादिदमालोक्यते यत् प्रत्यक्षोत्पन्नप्रत्यक्षस्य यत् कारणं द्वितीयादिक्षणोत्पन्नप्रत्यक्षस्य तदेव कारणं, किन्तु प्रथमोत्पन्नं प्रत्यक्षं द्वितीयादि प्रत्यक्षस्य कारणं न। प्रथमोत्पन्नप्रत्यक्षादनन्तरमिन्द्रियादयः यदि कस्मिन्नपि व्यापारे नियुक्ताः न स्युः अर्थात् चक्षुश्चेत् निमीलितं भवति, तदा चाक्षुषविज्ञानादव्यवहित— परक्षणे तस्यैव परिदृष्टस्य विषयस्य अपरं चाक्षुषं विज्ञानमुत्पन्नं भवति। तदेव मनोविज्ञानप्रत्यक्षम्। इन्द्रियं पुनः व्यापारान्तरे नियुक्तं चेत् पूर्वदृष्टेन वस्तुना इन्द्रियं सम्वद्धं चेद्वा, तदा प्राथमिकविज्ञानोत्तरक्षणे यद्विज्ञानमुपजायते न तन्मनोविज्ञानं परन्तु अपरं चाक्षुषविज्ञानम्। तदुक्तं धर्मोत्तरटीकायाम् 'एतच्च मनोविज्ञानमुपरतव्यापारे चक्षुषि प्रत्यक्षमिष्यते। व्यापारवति तु चक्षुषि यद्रूपज्ञानं तत्सर्वं चक्षुराश्रितमेव'।

मनोविज्ञानमाश्रित्य पर्य्यालोचनादिदमवगम्यते यत् यथायथकारण-सङ्घटनात् चाक्षुषादिविज्ञानोत्पत्त्यनन्तरं कारणवशाच्चेदिन्द्रियव्यापारः विलुप्तो भवेत् अर्थात् चक्षुश्चेन्निमीलितं, मनो वा समाहितं तदा प्राथमिकचाक्षुषविज्ञानादव्यवहितपरक्षणे पूर्वोक्तज्ञानस्य काचित् क्षीणा धारा अन्तःकरणे प्रतिफलिता भवति। विषयावगमानन्तरं कदाचित् तस्मिन् विषये ज्ञानप्रवाहः कियत्क्षणं यावत् फलतीति अनुभवसिद्धमेव।

वस्तुप्रत्यक्षानन्तरं चक्षुश्चेन्निमीलितं तदा प्राथमिकज्ञानात् परक्षणे तज्ज्ञानानुरूपं ज्ञानान्तरं किञ्चित् मनसि अवभासते। बौद्धमते इदं नाम मनोविज्ञानम्। दार्शनिकान्तरैः नेदं स्वीकृतम्। वस्तुतः अनुभवसिद्धमेतत्।

प्रमाणलक्षणपर्य्यालोचनया ज्ञातमेतत् यत् अज्ञातार्थज्ञापकमेव प्रमाणम्। मनोविज्ञानप्रत्यक्षे अधिगतविषयस्यैव पुनः ज्ञानात् प्रत्यक्षप्रमाणत्वेनास्य ग्रहणं भवति नवेति भवति प्रश्नावकाशः। अत्र सौगताचार्य्या आहुः, चाक्षुषविज्ञानस्य घटादिक्षणं मनोविज्ञानस्य घटादिज्ञानञ्च पृथगेव। द्वितीये विज्ञाने उत्पत्तिक्षणमपि तस्य ज्ञानस्य विषयीभूतं भवेदिति प्रतिपादितं प्राक्। तत्क्षणं तु पूर्वं नाधिगतम्। अतएव तस्य ज्ञानात् मनोविज्ञानप्रत्यक्षमपि अनधिगतविषयज्ञानमिति कृत्वा स्वीकृतं भवेत्। इदमपि लक्षणीयं यद्बौद्धमते प्रतिपदार्थस्य क्षणिकत्वात् प्राथमिकज्ञानोत्पन्नघटादिविषयाः मनोविज्ञानप्रत्यक्षकाले न विद्यन्ते। अतएव अनधिगतविषयस्य ज्ञापकं मनोविज्ञानं भविष्यत्येव। तदुक्तं प्रमाणवार्त्तिके—

तस्मादिन्द्रियविज्ञानानन्तरप्रत्ययोद्भवः।
मनोऽन्यमेव गृह्णाति विषयं नान्धदृक् ततः॥

(प्रः वाः २।२४३)

विषयस्य क्षणिकत्वेऽपि एकसन्तानक्षणवशवर्त्तितया चाक्षुषविज्ञानस्य अनुरूपविषय एव मनोविज्ञानप्रत्यक्षस्यापि विषयः भवति। तदुक्तं धर्मोत्तरटीकायाम्—

यदा च इन्द्रियज्ञानविषयादन्यो विषयो मनोविज्ञानस्य तदा गृहीतग्रहणादाव्युत्थितोऽप्रामाण्यदोषः निरस्तः।

अत्रेदमवधेयं यत् यत्र चाक्षुषं विज्ञानमधिपतिप्रत्ययरूपेण घटादयश्चा-

लम्बनप्रत्ययरूपेण विद्यन्ते तदा इन्द्रियविज्ञानमिति नाम्ना व्यपदेशः, यत पुनः चाक्षुषविज्ञानं समनन्तरप्रत्ययरूपेण कारणं भवति तत्रोत्पन्नं विज्ञानं मनोविज्ञानमित्यभिहितम्। समनन्तरप्रत्ययरूपेण कारणमभूत्वा चाक्षुषविज्ञानं यदि आलम्बनप्रत्ययरूपेण कारणं भवति (अर्थात् चाक्षुष विज्ञानमेव यदि उत्पाद्य विज्ञानस्य विषयं भवति) तदा प्राथमिक चाक्षुषविज्ञानात् परक्षणमेवोत्पन्नं विज्ञानं मनोविज्ञानमिति वक्तुं न शक्यते। तस्मात् स्पष्टमेवावगम्यते यत् चाक्षुषविज्ञानस्य समनन्तर-प्रत्ययरूपेण कारणत्वे अनन्तरोत्पन्नस्य विज्ञानस्य मनोविज्ञानत्वम्, आलम्बन-प्रत्ययरूपेण कारणत्वे न मनोविज्ञानम्। प्राक् चाक्षुषादिविज्ञानस्य असत्त्वे कथमपि मनोविज्ञानप्रत्यक्षस्य उत्पत्तिः न सम्भवति। चक्षुरादि विज्ञान-मनपेक्ष्य मनोविज्ञानप्रत्यक्षस्य उत्पत्तिस्वीकारे अन्धस्यापि रूपादिप्रत्यक्षे न कापि वाधा। अतएवोक्तं धार्मोत्तरटीकायाम्—

'यदा च इन्द्रियज्ञानविषयोपादेयभूतः क्षणं गृहीतः तदा इन्द्रियज्ञानेना-गृहीतस्य ग्रहणादन्धवधिराद्यभावदोषप्रसङ्गो निरस्तः।' (न्यायबिन्दुग्रन्थस्य नवमं सूत्रमाश्रित्य)। [अत्र तुलनीयम्—

तस्मादिन्द्रियविज्ञानान्तरप्रत्ययोद्भवः।
मनोऽन्यमेव गृह्णाति............ ॥ प्रः वाः २।२४३

## संस्कृतदिवसोद्यापनम्

मान्यमान्याः प्रेयांसो वाचकमहाभागाः, अस्मिन् वर्षेऽपि यथाकालमेव समुपजातं संस्कृतदिवसोद्यापनं संस्कृतसाहित्यपरिषदि सुमहताडम्बरेणेति विदांकुर्वन्तु भवन्तः। दिवसेऽस्मिन् नानाशास्त्रविशारदा विद्वांसः समुपस्थिताः संस्कृतदिवसोद्यापनमधिकृत्य महात्यालोचनया सभाकृत्यं समाप्तिमनयन् श्रीमतामिन्द्रमोहनचक्रवर्तिपादानामाध्यक्ष्येण।

॥ ॐ श्रीः ॥

# ॥ संस्कृतदिवसीयम् ॥

[ संस्कृतसाहित्यपरिषत्सदस्यैरनुष्ठितायां "संस्कृतदिवस"सभाया सभापतेः श्रीइन्द्रमोहनचक्रवर्त्तिनो भाषणम् ]

अन्तःस्था या वसति नियतं देवता वह्निवर्णा
सर्वेभ्यो नः प्रवहतु शुभ स्यन्दमाना नदीव ॥

भ्रातरो भगिन्यश्च ! अद्य तु संस्कृतदिवसमुपलक्ष्य किमहं ब्रवीमीति चिन्तयतो मे मनसि देवीसूक्तस्य कश्चिन्मन्त्र आविर्भूतः। आदौ तं मन्त्रमुद्धरामि ।—

अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥

प्रार्थयामि—

हे देवि ! हे वाक् ! हे देवभाषे ! हे सर्वासां भाषाणां जनक-जननी-जननि ! अस्मान् रुद्रान् कुरुष्व, येन वयं संस्कृतभाषाविरोधि-जनगणानवहत्य पराजेतुं शक्नुमः। यावन्न तत् स्यात् तावत् समदं संग्रामं चालयामः। भवत्वियमस्माकं प्रतिज्ञा संस्कृतदिवसे।

यदि वयं बद्धपरिकरा वर्तामहे, तदा सर्वा एव बाधा अपगमिष्यन्ति। जयोऽस्माकं निश्चितं दिवसद्वयाभ्यन्तरे तत्पश्चाद् वा। जगति नास्तीदृशी शक्तिर्या संस्कृतभाषां समूलघातं हन्तुमर्हति। या च भाषाविहङ्गमा सुप्राचीनकालादारभ्य वर्त्तमानकालपर्यन्तं स्वीयपक्षभरेण वाग्विहायसि राजते उड्डीना स्वमहिम्ना, कस्तां समर्थः पातयितुं धूलिषु चिराय ? पक्षच्छिदि सत्यपि वृत्रघ्नि, मैनाको वर्त्तते स्माक्षतः। गीताया भाषायाम्—नैनं छिन्दन्ति शस्त्राणि।

किन्त्वस्माकमस्मिन् जीवनमरणसंग्रामकाले भवतु चिन्तनीयमेतदस्माभिः,—कथं वर्तमानकाले संस्कृतभाषा प्राप्नोति बाधाश्चतुर्दिक्षु? का का त्रुटिर्वर्ततेऽस्याः परिचालने, अस्याः सेवायाञ्च संस्कृतसेविभिः? कथं न कुर्मः संस्कृतभाषां कालोपयोगिनीम्? विद्यापीठेषु, विशेषतो माध्यमिकविद्यालयेषु, संस्कृतपाठक्रमः कथं सहजः सरल आधुनिकभावाश्रितः श्रुतिमधुरो बोधगम्यशब्दपूर्णश्च न स्यात्? कथं नवनवशब्दान् नवनवभावांश्च नानयामो भाषामन्दिरे मातृपूजार्थम्? कथं न कुर्मो भाषां सहजां सरलां नवनवोन्मेषशालिन्या बुद्ध्या समृद्धाम्? कथं न कुर्मो व्याकरणं विद्यालयस्य छात्राणां कृते सहजबोधगम्यमाकर्षणीयञ्च दूरीकृत्य विभीषिकाम्?

काल उपस्थितोऽद्य कर्तव्यनिर्द्धारणस्य। सम्मिलितविचारेण स्थितिकार्य्ये साम्प्रतं कः कः पन्था अवलम्बनीयोऽस्माभिरिति। केनोपायेन मृतप्रायाया भाषाजनन्याः पुनरुद्धारं कुर्मः। भ्रातरो भगिन्यश्च ये अस्यां सभायामुपस्थिताः, ये चानुपस्थिताः, सर्वे वयं मिलित्वा तं पन्थानमाविष्कुर्मो येन भाषामातृका—यथासीत् सा वैदिकयुगे, यथासीत् सा उपनिषद्युगे, यथासीत् सा रामायणमहाभारतयुगे, यथासीत् सा महाकवेः कालिदासस्य युगे, यथासीच्च सा बङ्गकवेर्जयदेवस्य युगे—तथैव पुनःप्रतिष्ठितां कुर्मो निश्चितरूपेण सगौरवम्। पश्यामो मातरं देवभाषामस्माक स्वमहिम्ना सर्व्वोच्चशिखरारूढाम्, अर्चयामो मातरं प्रणिपातेन, पूजापीठीकृत्य समग्रां पृथिवीम्।

वन्दे मातरम्।
वन्दे संस्कृतम्।

वन्दे देववाणीं या मे धमन्यां स्रोतसा प्रवाहिता॥
ॐ शान्तिरस्तु शिवञ्चास्तु विनश्यत्वशुभञ्च यत्॥

शम्॥

## स्वाधीनतादिवसोत्सवः

व्यतीतसौरश्रावणस्य त्रिंशद्दिवसे बुधवासरे ( 1973, 15th August ) स्वाधीनतादिवसोत्सवमुपलक्ष्य संस्कृत-साहित्य-परिषदि समजनि जनगणानामुत्सवमुखरः समागमविशेषः। तत्रादौ 'वन्दे मातरम्' इति सङ्गीतेन पताकाभिवन्दने सम्पन्ने स्वाधीनताया ऐतिहासिकं वृत्तजात-मालोचितं समागतैः परिषत्सदस्यैः। अथ समाप्तिमागतोऽयमुत्सवः "जनगणमन" इति जातीय-संगीतेन समुपस्थितैर्जनगणैर्गीतेन।

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम्॥

# संस्कृत साहित्य

| | | |
|---|---|---|
| Vol LVI<br>No. 5 | १८९४ शकीये भाद्रे<br>१३८० बङ्गाब्दीये<br>५६तम-वर्षस्य ५म-संख्या | September<br>1973 |

तत्त्वचिन्तामणेः

## अनुमानमयूखः

सस्मिताननसरोजमङ्गणे
सञ्चरच्चलितचूर्णकुन्तलम्।
रोचनोल्लसितभालमस्तु मे
केशवं मनसि शैशवं वपुः॥
श्रीसार्वभौमस्य(१) गुरोः पदाब्जं
विद्यार्थिनां कल्पतरोः प्रणम्य।

टिप्पणी

अनुमानमयूखस्य मधुसूदनशर्मणा।
क्रियते टिप्पणी ग्रन्थपरिशोधनपूर्विका॥

१ अनेन जगदीशगुरुणा रामभद्रसार्वभौमेन गौतमीयन्यायसूत्रस्य पद्यकुसुमाञ्जलिग्रन्थस्य तथा रघुनाथकृतपदार्थतत्त्वनिरूपणग्रन्थस्य च रहस्याख्यटीका विरचिताः।

मणिमयूखोऽयमतिप्रयत्नाद्
विनिर्मितो विज्ञमुदं तनोतु ॥
प्राच्यैरनुचितविविधक्षोदैः कलुषीकृतोऽप्यधुना ।
मणिरयमनुपमसरणिः श्रीजगदीशप्रकाशितः स्फुरति ॥

सङ्गतमेवानन्तरं निरूप्यं नासङ्गतमिति शिष्यशिक्षार्थमनुमाने प्रत्यक्षस्योपजीवकत्वरूपसङ्गतिं प्रदर्शयन्नेवानुमानं तदनन्तरं निरूप्यत्वेन निर्दिशति 'प्रत्यक्षोपजीवकत्वादि'त्यादिना ।

'प्रत्यक्षानन्तरम्' प्रत्यक्षनिरूपणानन्तरम् । (१) तत्र च प्रत्यक्षप्रमाणस्य निरूपणोत्तरं तत्फल(२) इव प्रत्यक्षप्रमाया निरूपणोत्तरं तत्फलेऽपि(३) शिष्याणां प्रश्नसम्भवादनुमितितत्करणयोर्द्वयोरेव यथाक्रमं प्रत्यक्षधी-तत्करणानन्तरनिरूप्यत्वेन प्रतिज्ञेयत्वम्(४) प्रत्यक्षपदस्य प्रत्यक्षज्ञानतत्करणयोः शक्तत्वादनुमानपदस्यापि(५) भावकरणव्युत्पत्तिभ्यामनुमितितत्करणपरत्वात् । अतोऽनुमितिकरणमात्रस्य निरूप्यत्वेन प्रतिज्ञायां प्रथमतस्तदनिरूप्यानुमितेर्निरूपणं

---

१ प्रत्यक्षानन्तरमित्यत्र प्रत्यक्षपदस्य प्रत्यक्षप्रमाणपरत्वं प्रत्यक्षप्रमितिपरत्वञ्चाभिप्रेत्याह 'तत्र चे'ति ।

२ प्रत्यक्षप्रमिताविवेत्यर्थः ।

३ प्रात्यक्षिकपरामर्शात्मिकायाः प्रमायाः फलीभूतायामनुमितावपीत्यर्थः ।

४ अव्यवहितोत्तरकालकर्तव्यत्वप्रकारकबोधानुकूलव्यापारः प्रतिज्ञा, तद्विषयत्वमित्यर्थः ।

५ तथाच भावविहितेन ल्युट्प्रत्ययेन निष्पन्नमनुमानपदमनुमितिं बोधयति, अनुमीयत अनेनेति करणल्युटा निष्पन्नमनुमानपदमनुमानं प्रमाणमेवावगमयतीति भावः ।

मणिकृतो (१) ऽर्थान्तरग्रस्तमित्याशङ्काव्युदासाय प्रकारान्तरप्रयासो-नोपादेयः। प्रकृतग्रन्थेनानुमितेरपि प्रत्यक्षानन्तरनिरूप्यत्वेन प्रतिज्ञा-तत्वात्। तदनन्तरनिरूप्यमात्र(२)वृत्तिधर्मस्यैव तदीयसङ्गतित्वात्। न च (क) प्रत्यक्षोत्तरमनिरूपितेऽपि स्मृतिसंस्कारादौ वर्तमानस्य प्रत्य-क्षोपजीवकत्वस्य (ख तदीयसङ्गतित्वासम्भव इति वाच्यम्। अनुमान-निष्ठायाः प्रत्यक्षोपजीवकताव्यक्तेः प्रत्यक्षानन्तरनिरूप्यमात्रवृत्तित्वेन तथात्वसम्भवात्। (३)वस्तुतः स्वार्थधीद्वारा अनन्तराभिधाननिवर्त्य(ग) जिज्ञासाविषयज्ञाननिरूपितविषयतावच्छेदकरूपवत्त्वमेवानन्तरनिरूप्ये पूर्वं निरूपितस्य सङ्गतिः। नत्वनन्तरनिरूप्यमात्रवृत्तिधर्मवत्त्वं प्रत्यक्षस्य किं कार्यमित्याकांक्षया निरूपिते वर्तमानस्यानुमानत्वादेरप्यनुमानि प्रत्यक्षसङ्गतित्वापत्तेः, (४) यत्र प्रमेयस्य निरूपणोत्तरं प्रमेयत्ववत् किमित्याकाङ्क्षया घटः प्रमेय इत्यादिना घटादेर्निरूपणं, तत्र प्रमेयत्व-रूपायां प्रमेयसङ्गतावव्याप्त्यापत्तेश्च। प्रमेयत्वस्यानन्तरनिरूप्यमात्र-वृत्तित्वाभावात्। न च तथापि प्रत्यक्षानन्तरनिरूप्यतायां प्रत्यक्षोपजीवक-

---

१ प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम्। ( न्यायसूत्रस्य निग्रह-स्थानप्रकरणम् )

२ प्रमेयत्वादिकमादाय घटादेः सङ्गतिमत्त्ववारणाय 'मात्र'पदम्।

३ अतएव अनुमानदीधितिविवृतौ यद्धर्मविशिष्टविषयक-ज्ञानेच्छात्वेन जिज्ञासाया अनन्तराभिधानप्रयोजकत्वं तत्त्वमिति जग-दीशोक्तिरपि सङ्गच्छते।

४ निरूप्यमात्रवृत्तिधर्मस्य सङ्गतित्वे दूषणान्तरमाह 'यत्रे'ति।

---

* पादटीकास्थपाठा मातृकातो क ख सङ्केतेन गृहीताः। संशोधिताः पाठा मूले सन्निविष्टाः।

क न च इति पाठो नास्ति।

ख तदीया।

ग निवर्त्यपक्षधर्मतावच्छेदकरूपवत्त्वमेव।

त्वव्याप्यतापर्यवसन्नस्य तद्धेतुतावाचिपञ्चम्यर्थस्यान्वयायोगः, पञ्चम्याः प्रकृत्यर्थान्वितस्वार्थव्याप्यत्वस्य पदार्थान्तरस्य प्रकृत्यर्थव्यापकत्व-विशिष्टस्वरूपसम्बन्धेनैवान्वयबोधं प्रति साकांक्षत्वादन्यथा घटत्वादेरपि व्याप्यादिभ्रमेण प्रत्यक्षोपजीवकत्वव्याप्यतया घटत्ववान् प्रत्यक्षोपजीवक-त्वादित्यादिवाक्यस्यापि विषयाबाधेन प्रमाणत्वापत्तेरिति वाच्यम्। स्वरूपसम्बन्धसामान्येन प्रत्यक्षोपजीवकत्वस्य (१) प्रत्यक्षानन्तरकत्व-व्यभिचारेऽप्यनुमाननिष्ठ (२) तादृशसम्बन्धेन तस्यापि (क) तद्व्याप्य-त्वात् तथाविधसम्बन्धगर्भस्य प्रत्यक्षोपजीवकत्वव्यापकत्वस्य तदनन्तर-निरूप्यतायामनपायात् (ख)। वस्तुतः प्रत्यक्षोपजीवकत्वादित्यत्र ल्यब्लोपपञ्चम्या प्रत्यक्षोपजीवकत्वमवगम्येत्येवार्थो न तु प्रत्यक्षोप-जीवकताव्याप्यत्वमतो न हेत्वन्वयानुपपत्तिप्रसक्तिरपीति ध्येयम्।

ननु प्रत्यक्षकार्यं किमिति शिष्यप्रश्नस्य निवर्तकत्वमनुमाननिरूपण-स्यैवोपमाननिरूपणस्यापि सम्भवतीत्युपमानमेव कुतः प्रथमं न निरूप्यते तस्यापि प्रत्यक्षकार्यत्वादित्याकांक्षायामाह 'बहुवादी'ति।' 'उपमानात्' उपमाननिरूपणात्, तथाचाल्पवादिसम्मतत्वेन बलवदनिष्टा-नुबन्धि (ग) निरूपककर्तृग्रहादेवेदानीमुपमानं न निरूप्यत इति भावः(३)।

---

१ 'प्रत्यक्षानन्तरकत्वे'ति प्रत्यक्षनिरूपणानन्तरनिरूपणविषयत्वेति तदर्थः।

२ अनुमाननिष्ठतादृशसम्बन्धेनेत्यस्य अनुमानानुयोगिकस्वरूप-सम्बन्धेनेत्यर्थः।

३ अयं भावः—उपमानस्य प्रामाण्ये बौद्धसांख्यन्यायैकदेशिनामस्ति विप्रतिपत्तिः। अनुमानप्रमाणन्तु तेषामपि सम्मतमतो निरसनीयाकल्प-वादिविप्रपतिपत्तिकेनानुमानमेव प्राङ् निरूपितं नोपमानं तस्य निरसनीय-बहुवादिविप्रतिपत्तिकत्वादिति।

---

क तस्याप्यत्वात्। ख अनुपायात्। ग निरूपकत्वग्रहादे।

तत्र निरूप्ययोरनुमित्यनुमानयोर्मध्ये यद्यप्यनुमितेरिवानु (क)मानमपि निरूप्यत्वेन प्रतिज्ञातं, तथाप्यनुमानस्यानुमितिलक्षणगर्भलक्षणकत्वादनुमितिलक्षणमेव प्रथमतः प्राह (ख)'व्याप्तिविशिष्टे'त्यादिना। व्याप्तिविशिष्टे पक्षस्य धर्मतया आधेयत्वसंसर्गेण यज्ज्ञानं निश्चयस्तज्जन्यज्ञानमनुमितिरित्यर्थः। न च वह्निव्याप्यो धूमः पर्वत इत्याकारकानुभवजनितायां तादृशस्मृतावतिव्याप्तिरिति वाच्यम्। वह्निव्याप्यादिधर्मिकपर्वतादिनिश्चयत्वेन वह्निव्याप्यादिधर्मिकपर्वतादिस्मृतिं प्रत्यनन्त(ग)विषयान्तर्भावेनानन्तहेतुतायां मानाभावात्। स्मृतिसामान्यं प्रति ज्ञानत्वेना(घ)नुभवानामनुगतहेतुत्वसम्भवात् तद्धर्मिकतद्वत्त्वस्मृतिं प्रति तद्धर्मिकतद्वत्त्वसंस्कारत्वेन हेतुत्वस्यावश्यकतया तल्लिम्बादेव घटाद्यनुभवेन पटादिस्मरणोपत्त्यसम्भवात्। न च संस्कारं प्रत्यनुभवस्य समानाकारनिश्चयत्वेन हेतुत्वे स्मृतिं प्रत्यपि तथैव हेतुत्वम्, फलव्यापारौ प्रति एकरूपेणैव करणस्य हेतुत्वादिति वाच्यम्। तादृशनियमे मानाभावात्। चाक्षुषादिकं फलं प्रति चक्षुष्ट्वादिरूपेण करणभूतस्य चक्षुरादेस्तद्व्यापारीभूतसंयोगादिकं प्रति द्रव्यत्वादिरूपेण हेतुतायाः सर्वसिद्धत्वेन घटप्रत्यक्षे व्यभिचाराच्च (ङ)।

वस्तुतो वह्न्यभाववदवृत्तितात्वप्रकारेण गुञ्जाद्यभाववदवृत्तित्वमवगाहमानादपि वह्निव्याप्यो धूमः पर्वते (च) इत्याकारकपरामर्शात् पर्वतो वह्निमानित्यनुमितिदर्शनात्तादृशव्याप्तिघटकतत्तत्पदार्थविशिष्टवैशिष्ट्यावच्छिन्नविशेष्यताकपर्वतनिश्चयत्वेनैव तादृशनिश्चयोत्तरवह्न्यनुमितिं प्रति हेतुत्वं वाच्यमतो लक्षणघटकमपि तदेवेति न स्मृतादावतिव्याप्ति (छ) शङ्कापि वह्न्याद्यभावत्वेन गुञ्जाद्यभाव-

क नुमितेरिह। ख व्याप्तित्वादिना। ग विषयान्तर्भावेन। घ प्रत्यक्षानत्वेन
ङ घटव्यभिचारश्च। च 'पर्वते' इति पाठो नास्ति। छ स्मृतादतिव्याप्तिः।

विषयकानुभवात्ताद्रूप्येण वह्न्याद्यभावस्य स्मरणानुत्पत्त्या ताद्रूप्येण तद्व्यक्तिगोचरस्मृतिं प्रति तद्रूपेण तत्तद्व्यक्तित्वस्य वैशिष्ट्यबुद्धौ तथाप्यतिव्याप्तिस्तादृशबुद्धौ पर्वते वह्निव्याप्य इत्येवं निश्चयत्वेनैव हेतुत्वाद्वह्निव्याप्यः पर्वते न वेति संशयोत्तरमपि पर्वतीयो वह्नि-व्याप्यो नास्तीत्यादिधीप्रसङ्गादिति वाच्यम्। पर्वतत्वेनैकपर्वतस्य विशिष्टबुद्ध्युत्तरं ताद्रूप्येण पर्वतान्तरस्य वैशिष्ट्यज्ञानानुदयेन तत्रापि तत्तद्धर्मिविशेषान्तर्भावेनैव जनकतया अतिव्याप्त्यसम्भवात् साध्यव्याप्यधर्मिकपक्षप्रकारकनिश्चयत्वावच्छिन्नकारणतानिरूपितायाः पक्षविशेष्यकत्वावच्छिन्नजन्यताया एव वा प्रकृतनिरुक्तिघटकत्वात्। न च स्वविशेष्यकत्वावच्छिन्नस्यैव जन्यत्वस्य विवक्षायां विशिष्ट-वैशिष्ट्यादिबुद्धेर्वारणसम्भवात् पक्षविशेष्यकत्वावच्छिन्नजन्यत्व-पर्यन्तानुसरणं व्यर्थमिति वाच्यम्। पर्वतीयो वह्निव्याप्यः प्रमेय इत्यादि-बोधातिव्याप्तिवारकत्वात् वह्निव्याप्यः पर्वते न वेति संशयोत्तरं तादृशबोधानुत्पत्त्या पक्षीयत्वविशिष्टव्याप्यत्वावच्छिन्नप्रकारिताक इव पक्षीयत्वविशिष्टव्याप्यविशेष्यकत्वावच्छिन्नेऽपि(क) बोधे व्याप्यधर्मिक-पक्षीयत्वनिश्चयत्वेन हेतुत्वात्। न च पक्षीयत्वविशिष्टव्याप्यत्वा-वच्छिन्नविषयताकबुद्धित्वमेवोभयज्ञानानुगतं व्याप्यधर्मिकपक्षीयत्व-निश्चयस्य जन्यतावच्छेदकमतः सविशेष्यकत्वस्य तज्जन्यतायामप्रवेशा-न्नोक्तदोष इति वाच्यम्। संसर्गविधया पक्षीयत्वविशिष्टव्याप्यत्वाव-च्छिन्नविषयताकबुद्धेर्व्यभिचारेण तस्य (ख) तज्जन्यतानवच्छेदकत्वात्। एवञ्च व्याप्यधर्मिकपक्षप्रकारकनिश्चयत्वेन तादृशस्मृतिं प्रति हेतुत्वोप-गमेऽपि (ग) न क्षतिः। तत्रत्यजन्यतायाः पक्षविशेष्यकत्वावच्छेद्यत्वविरहा-देव तत्रातिव्याप्त्यसम्भवात्। न च वह्निव्याप्यधर्मिकपर्वतीयत्वनिश्चयो-त्तरबुद्धित्वावच्छिन्नं प्रत्येव तादृशनिश्चयत्वेन हेतुत्वादनुमितिनिष्ठायां

---

क न्नेति। ख तज्जन्यतावच्छेदकत्वात्। ग गमेन।

तादृशजन्यतायां पक्षविशेष्यकत्वावच्छेद्यत्वासम्भव इति वाच्यम्। गृह्यमाणाप्रमाण्यकस्य(क) वह्निव्याप्यधर्मिकपक्षीयत्वनिश्चयस्योत्तर स्वसामग्रीवशाज्जायमानायां पर्वते द्रव्यत्वस्य चत्वरे वह्नेर्वह्निविशिष्टपर्वते वा द्रव्यत्वस्यानुमितौ पर्वतधर्मिकायां वह्नेः शाब्दबुद्धौवापत्तौ (१) वाप्रामाण्यग्रहानास्कन्दितस्य तादृशनिश्चयस्य प्रागसत्त्वेन व्यभिचारभिया वह्निव्याप्यधर्मिकपर्वतीयत्वनिश्चयोत्तरपर्वतविशेष्यकवह्निविधेयकानुमितित्वावच्छिन्नं प्रत्येव भ्रमत्वग्रहानास्कन्दिततादृशनिश्चयत्वेन हेतुत्वस्य वाच्यतया तथाविधजन्यतायाः पक्षविशेष्यकत्वावच्छेद्यत्वनियमात परामर्शधर्मिकाप्रामाण्यज्ञानव्यक्तीनामभावस्य स्वतन्त्रेणानुमितिहेतुत्वमतेऽप्यनुमितेः परामर्शजन्यतायां पक्षविशेष्यकत्वादिनिवेशस्यावश्यकत्वाच्च। अन्यथा सर्वस्मादेव साध्यव्याप्यधर्मिकपरामर्शात पक्षतावच्छेदकधर्मावच्छेदेन तत्सामानाधिकरण्येन च द्विविधविषयक तादृश्यनुमितिप्रसङ्गात्, तदानीमापादकस्य तादृशसिद्ध्यभावादेः सत्वात् साध्यव्याप्ये पक्षतावच्छेदकधर्मावच्छेद्यत्वाद्यवगाहिपरामर्शस्यैव साध्ये तदवच्छेद्यत्वाद्यवगाह्यनुमितौ तन्त्रत्वात्।

यद्यपि पक्षसाध्यहेतूनामनेकविधत्वादेकविधमन्तर्भाव्य स्व, निरुक्तिकरणे अन्यविधसाध्यकाद्यनुमितावव्याप्तिस्तत्तत्पक्षसाध्यहेतुकानुमितित्वेन विशिष्य(ग)लक्ष्यत्वोपगमे तु तस्यैव साध्यस्य व्याप्तेर्नानाविधत्वादेकव्याप्त्युपादाने अन्यव्याप्त्यवगाहिपरामर्शजन्यायां पक्षधर्मिकपरामर्शजन्यायाञ्च तत्साध्यहेतुकाद्यनुमितावव्याप्तिरेव, तथापि वह्न्य-

---

१ आपत्ताविति-अर्थापत्ताविति तदर्थः। स्वमते तु व्यतिरेकव्याप्तिग्रहाधीनानुमितिरेव तदर्थः।

---

क गृह्यमहाप्रामाण्यकस्य। ख निरुक्तकरणे।
ग विशेष्यपक्षत्वोपगमे।

भाववदसंयुक्तधर्मिकपर्वतनिश्चयत्वावच्छिन्नकारणतानिरूपितायाः पर्वतविशेष्यकत्वावच्छिन्नकार्यतायाः समवायेनावच्छेदकीभूतधर्मवत्त्व विवक्षितं पर्वतत्वावच्छिन्नविशेष्यतानिरूपितवह्नित्वावच्छिन्नविधेयताकानुमितित्वेन वह्न्यादिपरामर्शजन्यतायाः समवायेनावच्छेदकत्वं न वह्नित्वादौ किन्त्वनुमितित्वजातावेवेति न वह्न्यादावतिप्रसङ्गो, न वा साध्यान्तरानुमित्यप्रसङ्गः।

इदन्त्ववधेयम्। पर्वतधर्मिकवह्न्यनुमितिसामान्यं प्रत्येव न वह्न्यभाववद(क)संयुक्तधर्मिक पर्वतीयत्वनिश्चयत्वेन हेतुत्वम्। वह्न्यभाववदसंयुक्तवान् पर्वतः पर्वतीयं रूपं वह्न्यभाववदसमवेतमित्यादिपरामर्शेन ख जन्यायां तादृशानुमितौ व्यभिचारात्। परन्तु वह्न्यभाववदसंयुक्तवान् पर्वतः, वह्न्यभाववदसंयुक्त(ग)धर्मिकपर्वतीयत्व(१)निश्चयाव्यवहितोत्तरतादृशानुमितित्वावच्छिन्नं प्रत्येवोक्तरूपेण हेतुत्वम्। तादृशनिश्चयाव्यवहितोत्तरत्वन्तु स्ववृत्तिप्रागभावप्रतियोगिनिष्ठेन स्वध्वंसवन्निष्ठेन वा सामानाधिकरण्यसम्बन्धेन घ तादृशनिश्चयविशिष्टत्वमतः प्रत्येकव्यक्तौ विश्रान्त्या (ङ) तस्याव्यवहितोत्तरत्वस्याननुगतत्वेऽपि न क्षतिः। वस्तुतस्तु (च) तादृशनिश्चयाव्यवहितोत्तरत्व तादृशनिश्चयविशिष्टकृतिमत्त्वम्। तत्र च कृतौ निश्चयस्य (छ) वैशिष्ट्यं स्ववृत्तिप्रागभावप्रतियोगिनिष्ठसामानाधिकरण्यसम्बन्धेनैव (ज) ग्राह्यम्। कृतिमत्त्वं तु सामानाधिकरण्यमात्रेण ग्राह्यमतो विनश्यदवस्थपरामर्श-

---

१ पर्वतीयत्वश्च आधेयत्वसम्बन्धेन पर्वतप्रकारकत्वमिति।

---

क वह्निमन्या। ख जन्यतायां।
ग वह्न्यभाववदसंयुक्त इति पाठो नास्ति। घ सम्बन्धत्वेन।
ङ प्रत्येकमति विश्रान्त्या। च तादश इति नास्ति।
छ वैशिष्ट्यस्ववृत्ति। ज सम्बन्धत्वेनैव।

स्थलीयानुमितेर्नासंग्रहः। यदि च वह्न्यभाववदसंयुक्तत्वाद्यवगाहि-परामर्शाव्यवहितोत्तरज्ञानसामान्यं प्रत्येव तादृशपरामर्शत्वेन हेतुत्वं न तु तज्जन्यतावच्छेदक(क)कोटावनुमितित्वस्यापि प्रवेशस्तादृशपरामर्श-धर्मिक प्रामाण्यज्ञानाभावकूटस्य स्वातन्त्र्येणैव वह्न्याद्यनुमितिहेतुत्वाद्-सति बाधके अनुमितिमात्रस्यैव पक्षतावच्छेदकधर्मावच्छेद्यत्व(१)-तत्-सामानाधिकरण्यान्यतरावगाहित्वो(२)पगमेन तदनुरोधादपि परामर्श-जन्यताया अनुमितित्वानवच्छेद्यत्वादित्यादिकं विभाव्यते, तदा पाकादे-रिष्टसाधनत्वावगाहिन्याः(ख) परामर्शव्यक्तेरुत्तरं(३) यत्र क्रमेणानुमितिः पाकेच्छा च जायते, तत्र व्याप्तिविशिष्टपक्षधर्मताज्ञानपदस्य तत्परामर्श-व्यक्तिपरत्वेन तद्व्यक्तिजन्यज्ञानवृत्तिज्ञानत्वाव्यापकजातिमत्त्वे मूल-निरुक्तेस्तात्पर्यम्। अनुभवत्वजातेरसत्त्वेन(४) तामादाय प्रत्यक्षादावति-व्याप्त्यसम्भवात्, सत्त्वे(५) वा तत्परामर्शव्यक्तिजन्यवृत्त्यनुभवत्वा-व्यापकजातिमत्त्वस्यैव वक्तव्यत्वादित्यास्तां विस्तरः।

---

१ पक्षतावच्छेदकधर्मावच्छेद्यत्वावगाहित्वं पक्षतावच्छेदकधर्म-व्यापकसाध्यताघटकसंसर्गावगाहित्वम्।

२ तत्सामानाधिकरण्यावगाहित्वञ्च साध्यताघटकससर्गतावच्छेदक-धर्ममात्रोपरागेण संसर्गावगाहित्वम्।

३ पाक इष्टसाधनं वह्निव्याप्यधूमवांश्च पर्वत इति समूहालम्बन-परामशव्यक्तेरनन्तरमित्यर्थः।

४ नवीनैरनुभवत्वजातेरनङ्गीकारात्।

५ प्राचीनमताभिप्रायेणाह सत्त्वेवेति। अनुभवत्वजातेर्विद्य-मानत्वे इति तदर्थः।

---

क दकादनुमितित्व।

ख गाहिन्यायात्।

'तत्करणमिति' निरुक्तव्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानकरणमित्यर्थः। ननु क) परामृश्यमानलिङ्गत्वेन वस्तुमात्रस्यैवानुमितिकरणत्वादनुमाने(ख तराप्रसिद्धया (१'तद्भे'दानुमापकत्वरूपमनुमानलक्षणत्वमुक्तनिरुक्तेरसम्भवीत्यत आह—(ग)'तच्चे'ति।' अनुमितिकरणञ्चे'त्यर्थः।

ननु परामृश्यमाणलिङ्गत्वेनैवानुमितिहेतुत्वे चानुमितेः व्याप्तिविशिष्टपक्षधर्मताज्ञानाजन्यत्वेन घ) तादृशपक्षधर्मताज्ञानजन्यज्ञानकरणत्वमनुमानस्यासम्भवी(ङ) त्यत उक्तं तच्चेतीत्यपि वदन्ति। चार्वाकः शङ्कते—'अथेति।' अनुमानं वह्न्यादि(च)व्याप्त्यवगाहिधूमादिज्ञानं(२) न (छ)प्रमाणं, न संवादिनिश्चयस्य करणमित्यर्थः। न च (ज)पामरमते विशिष्टधीमात्रस्य जात्याद्यलीकविषयकत्वेन संवादित्वासम्भवेन सिद्धसाधनं निर्विकल्पमूलकविकल्पसमानाकारस्यैव तन्मते संवादिपदार्थत्वात्तस्य च पर्वतो वह्निमानित्यादिविशिष्टबुद्धावप्यनपायात्।

---

१ 'तद्भे'दे'ति अनुमानेतरभेदेत्यर्थः।

२ चार्वाकनये अनुमितेरप्रसिद्धया तत्करणमनुमानमप्यप्रसिद्धं स्यादतोऽनुमानपदस्य यथाश्रुतार्थं परित्यज्य व्याचष्टे व्याप्त्यवगाहिधूमादिज्ञानमिति।

---

क "सम" इत्यधिकः।

ख अनुमानेनेतरा।

ग निरुक्तेरसम्भवीतीत्यत आह।

घ ज्ञानजन्यत्वेन।

ङ सम्भवत्यत उक्ततच्चेत्यपि वसन्ति। च अनुमानवह्न्य।

छ 'न' इति नास्ति। ज पातुरमते।

तत्तद्वह्निपर्वतादिव्यक्तिमात्रावगाहिना निर्विकल्पकप्रत्यक्षेणैव तन्मते तादृशविशिष्टधीजननात् शशविषाणमित्यादिविशिष्टज्ञानस्यैव व्यधिकरणप्रकारत्वेनास्मन्मत इव शशविषाणत्वाद्यखण्डधर्मप्रकारकवासनामात्रसमुत्थत्वेन तन्मते विसंवादित्वात्। न च संशयात्मकस्यैव व्याप्तिज्ञानस्य संवादिनिश्चयं प्रत्यकरणत्वात्, तथापि सिद्धसाधनं क) व्याप्तिज्ञानत्वावच्छेदेनैव निरुक्तसंवादिनिश्चयकरणत्वाभावस्य साध्यत्वात्। एतेन चार्वाकाणामनुमितेरप्रसिद्ध्या तत्करणत्वेन ख) पक्षत्वासम्भवः। शशविषाणादेरिवासत्ख्यात्युपनीतस्यैवानुमितिकरणस्य, तादृ्प्येण प्रत्यक्षत्वे तु तस्य निर्विकल्पकज्ञानरूपायां तत्सम्मतप्रमायामकरणत्वात्तादृशप्रमाकरणत्वाभावस्य साधने नैयायिकानां सिद्धसाधनमित्यपास्तम्।

उक्तसाध्ये हेतुमाह—सव्यभिचार(ग संशयादिति। धर्मपरोऽयं निर्देशस्तेन व्यभिचारसंशयः स्यादित्यर्थः। तादात्म्येन संशयस्यैव १) वा हेतुत्वम्। न च व्यभिचारज्ञानत्वादेरेव हेतुत्वसम्भवे संशयत्वपर्यन्तानुसरणवैयर्थ्यम् (२), चार्वाकानां(घ) व्यर्थविशेषणत्वस्यादोष-

---

१ स्वव्यभिचारसंशयस्यैवेत्यर्थः।

२ तथा हि नीलधूमत्वादेरिव व्यभिचारसंशयत्वस्यापि निरुक्तसंशयत्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकीभूतधर्मान्तरघटितत्वेन न तावद् व्यभिचारसंशयत्वं व्याप्यतावच्छेदकं भवितुमर्हति व्यर्थविशेषणघटितत्वात्। धर्मान्तरश्चात्र ज्ञानत्वमिति भावः।

---

क सिद्धसाधनव्याप्ति।

ख कारणत्वेन।

ग स्वविचार।

घ बौद्धानां।

त्वात्। व्यभिचारज्ञानमात्रे वा मूलस्य(१) तात्पर्यम्। ननु हेतुमति घटाद्यभावस्यैव साध्यादौ हेतुमन्निष्ठाभावप्रतियोगित्वादेर्योग्य प्रत्यक्षेणाभावनिश्चयः, तादृश एव व्याप्तिज्ञाने व्यभिचारसंशयत्वाभावान्न तस्य व्याप्तिज्ञानत्वावच्छेदे (क)वह्न्यादिनिश्चयकरणत्वाभावसाधकत्वं पक्षतावच्छेदकधर्मावच्छेदेन साध्यसिद्धौ तदवच्छेदेनैव हेतुमत्त्वनिश्चयस्य कारणत्वादतो व्याप्तिज्ञानत्वावच्छेदेन व्यभिचारसंशयत्वमुपपादयितुमाह—'योग्येत्यादि।' उपाधिपदं धर्मपरं, तथाच योग्यानां घटाद्यात्मकधर्माणां योग्यानुपलब्ध्या हेत्वधिकरणादावभावनिश्चयस्य सम्भवेऽप्ययोग्यस्य हेतुमन्निष्ठाभावप्रतियोगित्वसामान्याभावरूपस्योपाधेः शङ्कया सर्वत्र व्यभिचारसंशयादित्यर्थः। साध्यादिधर्मिके हेतुमन्निष्ठाभावप्रतियोगित्वसामान्याभावादिनिश्चय एव असम्भवी सर्वत्र साध्यधर्मिकस्य तादृशप्रतियोगित्वतदभावयोः संशयस्यैव सामग्रीसत्त्वात्। न हि घटाद्यभावस्य निश्चयस्थलमिव प्रकृतेऽपि योग्यानुपलब्धिरस्ति, येन सैव(ख) संशयं परिभूय निश्चयमुत्पादयेदतो व्याप्तिज्ञानत्वावच्छेदेन व्यभिचारसंशयत्वमस्त्येवेति भावः।

ननु मास्तु योग्यानुपलब्धिः, तथापि प्रकृते भूयः सहचारदर्शनमेव व्यभिचारकोटेरुपलब्धिं निवार्य(ग) व्याप्तिनिश्चायकं भवेदत आह—

---

१ सव्यभिचारसंशयादिति मूलग्रन्थस्येत्यर्थः।

---

क स्यैव।

ख एषः पाठो नास्ति।

ग व्यभिचारज्ञानकूटेऽनुपलब्धं निवार्थं।

'शतश' इति। लौहच्छेद्य'(१) पार्थिवत्वादित्यादौ (क)हीरक एव व्यभिचारग्रहात्, तथाच भूयोदर्शनस्य व्यभिचारधीप्रतिबन्धकत्वं दुर्घटमिति भावः।

ननु व्याप्त्यवगाहिधूमादिदर्शनस्य पर्वतादिधर्मिकवह्न्यादिनिश्चया-(ख)जनकत्वे तदुत्तर(ग)मनुभवसिद्धो यः पर्वतोवह्निमानित्यादि व्यवहारः स च न सम्भवति तथाविधव्यवहारं प्रति वह्न्यादिमत्तया पर्वतादिनिश्चयस्य हेतुत्वादत आह—'लोक' इति। 'सम्भावनामात्रा'-दिति। वह्न्याद्युत्कटकोटिकसंशयमात्रादित्यर्थः। स च संशयः कोटिद्वयोपस्थितिकालीनधर्मिज्ञानरूपभूयोऽधिकरणावच्छेदेन वह्नि-सहचरितधूमादिमत्त्वज्ञानादेवेति भावः।

ननु पर्वतः प्रायोवह्निमान्नवेत्येव सम्भावनाया एव व्यवहारहेतुत्वे तस्यां संवादिज्ञानत्वहेतुना संवादिनिश्चयत्वरूपस्य प्रमात्वग्रहोभ्रमः स्यादतस्तत्रेष्टापत्तिमाह— 'संवादिने चे'ति। उपसंहरति इति 'नो-प्रत्यक्षमि'ति। प्रत्यक्षं निर्विकल्पकस्य करणं(घ) तद्भिन्नं न प्रमाणं,

---

१ तथाच पार्थिवत्वलौहच्छेद्यत्वयोः शतशः सहचारदर्शनेऽपि लौहच्छेद्यत्वाभाववति हीरके पार्थिवत्वस्य सत्त्वेनासौ हेतुर्व्यभिचारीति भावः।

२ व्यवहारः प्रवृत्तिः शब्दप्रयोगो वेत्यवधेयम्।

---

क वारक एव। संशयकोटिद्वयो प्रतिकालीनध.... नरूप भूयो-ऽधिकरणतावच्छेदेन वह्निसहचरितधूमादिमत्त्वज्ञानादिरेवेति भावः।

ख निश्चयजनकत्वे।

ग अनुभवसिद्धः इत्यारभ्य व्यवहारं प्रतीत्यन्त पाठो नास्ति।

घ कलनां।

न संवादिनिश्चयस्य करणमित्यर्थः। न च प्रतिज्ञानिगमनपर्यवसन्नयो-रुपक्रमोपसंहारयोर्विरोधः समानाकारयोरेव तयोः साम्प्रदायिकत्वा-दिति वाच्यम्। उदाहरणोपनयात्मकावयवद्वयवादिनां (क)चार्वाकानाञ्च प्रतिज्ञानिगमनयोरनावश्यकत्वेन तयोः समानाकारत्वस्याकिञ्चित्-करत्वादितिभावः।

अनु पश्चात् प्रत्यक्षपश्चात्, (ख)मानं प्रत्यक्षजनितं मानम् प्रत्यक्ष-भिन्नत्वविशिष्टप्रमाणमित्येव 'प्रतिज्ञा' इत्यपि केचित्। शङ्कां निरस्यति—'ने'ति। (ग) "अप्रमाणसाधर्म्येणे"ति अप्रामाण्यव्याप्येना प्रमाणताप्रयोजकरूपशून्यत्वेन हेतुना संवादिनिश्चयाकरणत्वरूपस्या-प्रामाण्यस्य "साधने" निश्चये। "दृष्टसाधर्म्यस्ये"ति दृष्टमनुभवसिद्धं यत् साधर्म्यमप्रामाण्यव्याप्यतया व्यभिचारसंशयस्य ज्ञानरूपमात्म-साधर्म्यम् तस्यैव अनुमानत्वात् संवादिनिश्चयकरणत्वात्, तथा च व्याप्त्यवगाहिज्ञानत्वावच्छेदेन संवादिनिश्चयकरणत्वाभावसाधने बाध इति भावः। अथानुमानमप्रमाणमिति वाक्यमेव व्याप्तिज्ञानस्य निरुक्त-प्रमाकरणत्वाभावं शब्दधीविधया बोधयेद्तोनोक्तदोषावकाश इत्यत आह—एतदिति। 'सन्दिग्धेति'। अनुमानस्याप्रामाण्ये यः सन्दिग्धो यश्च विपर्यस्तो विपरीतनिश्चयवान्(घ), तयोरन्यतरं प्रत्येवानुमानं न प्रमाणमिति वाक्यस्य स्वार्थधीद्वारा (ङ) "अर्थवत्वात्" सप्रयोजन-त्वादित्यर्थः, तथा च परस्यानुमानधर्मिकाप्रामाण्यसंशयादिनिषेधार्थमे-

---

क बौद्धानाम।

ख मानं गणितमानम् प्रत्यक्षभिन्नत्वप्रमाणमित्येव प्रतिज्ञा।

ग अप्रमाणेत्यादि फलितोऽर्थ इत्यन्त पाठो मातृकायां नोपलभ्यते।

घ संशयत्वस्य।

ङ स्यात्तधीद्वारा।

वोक्तवाक्यं चार्वाकेन वक्तव्यम्। परस्य संशयविपर्यासौ(क) च न तस्य प्रत्यक्षा(ख)विति तज्ज्ञानार्थमवश्यं तेनानुमानमङ्गीकर्तव्यम्। यदाह — तयोरिति'। संशयविपर्यासयोश्चेत्यर्थः। अत्र (१)वृत्ति-शब्दैकदेशार्थयोरपि संशयविपर्यासयोस्तच्छब्देन परामर्शोव्युत्पत्ति-वैचित्र्यात् 'पटोलपत्रं पित्तघ्नं, मूलं तस्य विरेचकं; फलं तस्य त्रिदोषघ्नं, नाड़ी तस्य कफापहा' इत्यादौ पटोलादेरिवेत्यवधेयम्। (ग)

अथानुमानं प्रमाणं न वेत्यादिवाक्यवक्तृत्वेनैव साधारणधर्मेणाय-मनुमानस्य प्रामाण्ये सन्दिग्ध इत्यादिक्रमेण परस्य संशयादिकं सम्भाव्य तन्निवृत्तयेऽनुमानमप्रमाणमिति वाक्यं वक्तव्यमत आह— 'अनुमानमि'ति। 'प्रामाण्याप्रामाण्ययो'रिति। उक्तवाक्यस्य प्रमिति-करणत्वे प्रत्यक्षभिन्नं न प्रमाणमिति स्ववचनस्य व्याघातः। प्रत्यक्ष-भिन्नस्य वाक्यस्यैव प्रमाकरणत्वस्वीकारात् प्रमित्यकरणत्वे च तत्-प्रयोगस्य व्याघातो वैयर्थ्यं स्वार्थधीद्वारा संशयाद्यनिवर्तकत्वादिति भावः।

ननूक्तवाक्यस्य निश्चयात्मकप्रमित्यजनकत्वेऽप्यगृहीतासंसर्गक-प्रत्येकपदार्थस्मरणमर्जयित्वैव संशयादिनिवर्तकत्वसम्भवान्नानुमाने वैयर्थ्यमत आह—'अपि चे'ति। 'अनुमानस्य' व्याप्तिज्ञानस्य, "अप्रामाण्ये" संवादिनिश्चयाजनकत्वे प्रत्यक्षस्यापि, निर्विकल्पकस्यापि अप्रमाणत्वापत्तिः। संवादिनिश्चयकरणत्वलक्षणप्रमाणत्वाभावा-

१ तत्पदस्य शब्दैकदेशोपस्थापकत्वं व्युत्पादयति 'अत्रेति'।

क विपर्यासाच्च।

ख क्षादिति।

ग पहेलिपत्रं पित्तहेतस्य कपाघ्नं नाड़पहेत्यादौ पहेलादेरिवेत्य-वधेयम्।

पत्तिः। निर्विकल्पकं सम्वादिनिश्चयजनकं तदन्वयाद्यनुविधायित्वादित्याद्यनुमानेनैव निरुक्तप्रामाण्यस्य निश्चयात्, यदाह प्रामाण्यस्यानुमेयत्वा'दिति। ननु निर्विकल्पकं स्वयमेव स्वमिव स्वगतं संवादिनिश्चययजनकत्वलक्षणं प्रामाण्यमपि विषयीकरिष्यति किं तद्ग्रहार्थमनुमानेनेत्यत आह—'स्वत एवेति'। 'तत्संशयेति'। निर्विकल्पकोत्तरक्षण तद्धर्मिकनिरुक्तप्रामाण्यसंशयानुपपत्तिरित्यर्थः। तन्मते निर्विकल्पकस्यैव स्वधर्मिक विरुद्धप्रामाण्यनिश्चयत्वेन तद्विरोधित्वादिति भावः।

ननु तथापि साध्यतावच्छेदकादौ हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वादेः सर्वत्र संशयस्यैव सामग्रीसत्त्वाद् व्याप्तिनिश्चयस्यासम्भवात्तस्य प्रामाण्यं दुर्घटमत आह—'व्याप्तिग्रहोपायश्चे'ति। व्याप्तिनिश्चयोपायश्चेत्यर्थः। 'वक्ष्यत' इति। विपक्षबाधकतर्केण साध्यतावच्छेदकादौ साधनवन्निष्ठाभावप्रतियोगितावच्छेदकवदवृत्तिमत्तानिश्चयादिना वा तत्संशयस्य प्रतिबन्धान्नव्यापकत्वादिति निश्चयोऽनुपपन्न इति भावः।

इति अनुमितिग्रन्थः।

## व्याप्तिपञ्चकम्

(१)व्याप्तिविशिष्टेत्याद्यनुमितिलक्षणस्य विशेषणीभूतव्याप्तिनिरुक्तिं विना दुर्ग्रहत्वमित्याशयेन पृच्छति—'नन्विति'। यद्रूपावच्छिन्नधर्मिकपक्षधर्मतानिश्चयत्वेनानुमितिहेतुत्वं तद्रूपं किमित्यर्थः? तत्र प्रथमं (२)टीकाकृन्मतमाशंक्य निरस्यति—'न तावदिति'। अव्यभिचरितत्वम्, (क)अव्यभिचरितत्वपदबोध्यम्। 'साध्याभाववदि'ति। (ख)येन सम्बन्धेन येन रूपेण च साध्यता तेन सम्बन्धेन तेन रूपेण यः साध्याभावः तद्वदवृत्तित्वमर्थः। नातः सम्बन्धान्तरेण साध्यसामान्यस्य साध्यतावच्छेदकसम्बन्धेन वा तत्तत्साध्यव्यक्तेरभाववति वर्तमानत्वेऽपि (ग)व्यतिरेकिसाध्यकसद्धेतावव्याप्तिः। साध्याभाववत्त्व चेह निरुक्तसम्बन्धावच्छिन्नसाध्यवत्ताग्रहविरोधितावच्छेदकसम्बन्धेनैव बोध्यम्। न तु दैशिकविशेषणतया, घटभिन्नं पटत्वादित्यादावव्याप्त्यापत्तिः, तत्र घटत्वादिस्वरूपस्य साध्याभावस्य दैशिकविशेषणतया

---

१ अनुमितिलक्षणोपोद्घातसङ्गत्या व्याप्तिस्वरूपनिरूपणमित्यभिप्रायेणाह व्याप्तिविशिष्टेति।

२ न्यायतात्पर्यटीकाकृतां वाचस्पतिमिश्राणां मते अव्यभिचरितसाध्यसम्बन्धोव्याप्तिरतोऽग्रे न तावदव्यभिचरितत्वमित्यादिना तन्मतमाशंक्य निराकरिष्यतीत्यभिप्रायेणाह टीकाकृन्मतमिति।

---

क 'अव्यभिचरितत्ववदबाध्यम्'।

ख येन सम्बन्धेन रूपेण साध्यता तत्तम्बन्धेन यः भिन्नभावः।

ग 'व्यतिरेकसाध्यक'।

(क)अधिकरणत्वाप्रसिद्धेः। (ख)अतएवाव्याप्यवृत्तिसाध्यकसद्धेतावपि नाव्याप्तिः कपिसंयोगादिमत्ताबुद्धिं प्रति निरवच्छिन्नविशेषणतासम्बन्धेनैव तदभावनिश्चयस्य विरोधितया तद्वृक्षादेस्तादृशसम्बन्धेन कपिसंयोगाद्यभाववत्त्वविरहादिति। यद्यपि वह्न्यभाववति स्वावयवे धूमस्य समवायेन वर्तमानत्वादव्याप्तिः। साध्याभाववति हेतुताघटकसम्बन्धेन या वृत्तिस्तदभावेत्युक्तौ च सत्तावान् जातेरित्यादावव्याप्तिः सत्ताभाववति सामान्यादौ हेतुताघटकसमवायादिसम्बन्धेन वृत्तेरप्रसिद्धेः। न च हेतुताघटकसम्बन्धावच्छिन्नवृत्तिमत्तानिरूपितविशेषणतया साध्याभाववद्वृत्तित्वसामान्यस्यैवाभावो(घ विवक्षित इत्यदोष इति वाच्यम्। द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः संयोगेन रूपस्य गगनादेर्वा (ग हेतुतायामतिव्याप्तेश्च तथाप्यनुद्धारात्, तथापि (१) प्रकृतसाधनवद्वृत्तित्वनिरूपित(घ)विशेषणतासम्बन्धेनैव साध्याभाववद्वृत्तित्वसामान्यस्याभावोवक्तव्य इत्यदोषः। गगनादेर्ययधिकरणासम्बन्धेन रूपादेश्च लक्ष्यत्वे तु साध्याभाववन्निष्ठाधिकरणतावच्छेदकत्वस्य हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावच्छेदकतायाः स्व-

१ तथाच प्रकृतहेत्वधिकरणनिरूपितहेतुताघटकसम्बन्धावच्छिन्नवृत्तित्व प्रतियोगिकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकनिरुक्तसाध्याभाववन्निरूपितवृत्तितात्वेतरधर्मानवच्छिन्नतादृशवृत्तितात्वावच्छिन्नाभाव इति प्रथमलक्षणस्य पर्यवसितार्थः।

क अधिकरणताप्रसिद्धिः।

ख 'अ-एव व्याप्तवृत्ति'।

ग 'हेतुताया व्याप्तेश्चेष्वमप्यनुद्धारा' 'यद्यप्रामाण्यस्यैव व्याप्यवृत्तित्वस्यापि'।

घ 'विशेषणविशेषणता'।

रूपसम्बन्धेनाभाववान् यो हेतुतावच्छेदकधर्मस्तद्वत्वं वाच्यम्। ननु यद्यप्रामाण्यस्यैवाव्याप्यवृत्तित्वस्यापि धियानास्कन्दितो दैशिकविशेषणतामात्रेणैव कपिसंयोगाद्यभावस्य निश्चयः कपिसंयोगादिमत्त्वबुद्धेर्विरोधी, तदा कपिसंयोगी तत्त्वादित्यादावव्याप्तिः, वृक्षादेरपि कपिसंयोगवत्त्वबुद्धिविरोधितावच्छेदकेन (क) दैशिकविशेषणतासम्बन्धेन तदभाववत्त्वादतो लक्षणान्तरमाह—"साध्यवदि"ति। न च साध्यवद्भिन्नावृत्तित्वमित्यस्यैव सम्यक्त्वे साध्याभाववत्पद(१) वैयर्थ्यम्। साध्यवद्भिन्नपदस्य प्रतियोगिमदन्यार्थकतया (ख) तस्यावश्योपेयत्वात्। अन्यथा प्रतियोगिसामान्य(ग)वदन्यत्वस्याप्रसिद्ध्या घटाद्यभावप्रतियोगिमदन्यवृत्तित्वस्य च धूमादौ सत्त्वात् सद्धेतुमात्र एवासम्भवापत्तेरिति ध्येयम्। अत्र प्रतियोगिमदन्यत्वस्य निवेशापेक्षया लघुलक्षणमाह—"साध्यवत्प्रतियोगिके"ति। साध्यवत्त्वावच्छिन्नप्रतियोगिकान्योन्याभावाऽसमानाधिकरणो यस्य तत्त्व, स्वाधिकरणवृत्तिसाध्यवत्त्वावच्छिन्नान्योन्याभावकत्वमिति यावत्। वह्निमत्त्वावच्छिन्नात्यन्ताभावस्य धूमाधिकरणवृत्तित्वादव्याप्तिरतोऽन्योन्याभाव-

---

१ तृतीयलक्षणं परित्यज्य सकलसाध्याभावेत्यादि चतुर्थलक्षणानुसरणस्य बीजमाह ननु जातिमद्भिन्नमित्यादिना।

२ वैयर्थ्यं नाम व्यर्थविशेषणघटितत्वम्। तच्च स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वम्। तथाहि प्रकृतस्थले स्वपदेन "व्याप्तिः व्याप्तीतरेभ्यो भिद्यते साध्यवद्भिन्नसाध्याभाववदवृत्तित्वा" दित्यत्र साध्यवद्भिन्नसाध्याभाववदवृत्तितात्वं ग्राह्यम्। तादृशधर्मान्तरपदेन च तादृशहेतुघटकीभूतसाध्यवद्भिन्नावृत्तितात्वं ग्राह्यम्।

---

क वैशेषिकविशेषणता।  ख तद्व्याप्यावश्योपेयत्वात्।

ग सामान्यपदस्य त्वन्याप्रसिद्ध्या।

नुसरणम्। ननु जातिमद्भिन्नं द्रव्यत्वादित्यादावुक्तलक्षणातिव्याप्ति-स्तत्र गुणत्वादिस्वरूपस्य साध्यवद्भेदस्य द्रव्यत्वाधिकरणवृत्तित्वादत आह—सकलेति। वह्न्यादेरपि धूमाद्यभाववज्जलादिनिष्ठाभावप्रति-योगित्वादव्याप्तिरतः "सकले"ति साध्याभाववतो विशेषणम्। अत्रापि येन सम्बन्धेन येन रूपेण च साध्यता तत्तत्सम्बन्धेन तद्रूपावच्छिन्न-प्रतियोगिक एव साध्याभावो (१)ग्राह्यः। तेन समवायादिना वह्न्याद्य-भाववति संयोगसम्बन्धावच्छिन्नधूमसामान्याभावस्यासत्त्वेऽपि न क्षतिः। साध्याभाववत्त्वं (क)तन्निष्ठत्वञ्च निरवच्छिन्नदैशिकविशे-षणतया बोध्यम्। अतः कपिसंयोगी तत्त्वादित्यादावेतद्वृक्षत्ववान् कपिसंयोगादित्यादौ च नाव्याप्तिरतिव्याप्तिर्वा। अभावमात्रस्य भावभिन्नत्वमते च लक्षणकरणान्नि(ख)र्धूमो निर्वह्नित्वादित्यादौ धूम-वह्न्यादेर्दैशिकविशेषणतया वृत्तिविरहेऽपि नाव्याप्तिः। हेत्वभावस्य तत्तद्ध्रदैः प्रत्येकं सकलविपक्षावृत्तित्वादव्याप्तिप्रसङ्गस्तु दीधितिकृदुक्त स्तत्र नाशङ्कनीयः। साध्याभाववन्तो यावन्तस्तत्प्रत्येकनिष्ठाभाव-प्रतियोगित्वविवक्षयैव तद्वारणसम्भवात्। न चैवं सति द्रव्यं सत्त्वादित्यादावतिव्याप्तिः सर्वत्रैव साध्यशून्ये विशिष्टसत्त्वस्य समवायेन सत्त्वसामान्यस्य च संयोगेनाभावसत्त्वादिति वाच्यम् येन सम्बन्धेन यद्रूपविशिष्टस्य हेतुता तेन सम्बन्धेन तद्रूपावच्छिन्नस्यैव निरुक्तप्रतियोगित्वस्य लक्षणत्वादिति। यद्वा (ग)सकले साध्याभाव-वति साध्यविरोध्यभाववति वर्तमानस्य स्वविरोध्यभावस्य प्रतियोगि-

१ एवञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकमात्राव-च्छिन्नप्रतियोगिको ग्राह्य इत्यर्थः।

क तद्भिन्नत्वञ्च। ख निर्धातो।

ग सकले इति नास्ति।

त्वमर्थः। (१)साध्यादिविरोधित्वञ्च साध्यत्वादिघटकसम्बन्धेन तदधिकरणे दैशिकविशेषणतयाऽवृत्तिमत्त्वं (२)तदर्थमेवाभावद्वयोपादानात्। द्रव्यं संयोगादित्यादौ च गुणादिनिष्ठश्च संयोगाद्यभावः साधनविरोध्येवेति नाव्याप्तिः। प्रत्याश्रयमभावस्य भेदमत एव निरुक्तिकरणात्। प्रतियोगिपदस्य सम्बन्धिपरतया यावन्तः साध्यविरोध्यभाववन्तस्तन्निष्ठस्य स्वविरोध्यभावस्य सम्बन्धित्वमात्रं वार्थः। तथाच (३ स्वविरोधिनो द्रव्यादिभेदस्यैव यथाकथञ्चित्सम्बन्धवत्त्वमस्त्येव संयोगादेरिति द्रव्यत्वादिसाध्यकतादृशहेतौ नाव्याप्तिः। (४)इत्थञ्च अभावमात्रस्य भावभिन्नत्वानङ्गीकारेऽपि न क्षतिरिति ध्येयम्।

ननु(५) शब्दशून्यं घटत्वादित्यादावव्याप्तिः, साध्याभाववतो गगनस्य साकल्याप्रसिद्धेः साध्यादिभेदेन व्याप्तेर्विभिन्नतया यत्साध्यशून्यस्य बहुत्वमप्रसिद्धं तत्साध्यकनिरुक्तौ(क) साकल्यस्यानुपादेयत्वेऽपि प्रथमव्याख्यायां ख) घनी चैत्रत्वात् अयं चैत्रस्तद्धनादित्यादौ वृत्त्यनियामकस्वामित्वादिसम्बन्धेन साध्यत्वे साधनत्वे वा अव्याप्तिः, तादृशसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः अपेक्षाबुद्धि-

---

१ साध्यादीति। आदिपदेन हेतुपरिग्रहः।

२ तदर्थमेवेत्यस्य। विशेषणताविशेषसम्बन्धेनावृत्तिमत्त्वमेवेत्यर्थः।

३ अत्र स्वपदं प्रकृतहेतुपरम।

४ इत्थञ्चेति। द्वितीयव्याख्यायाः फलमाह—'इत्थञ्चे'ति।

५ सकलसाध्याभावेत्यादिचतुर्थलक्षणं परित्यज्य साध्यवदन्यावृत्तित्वमिति पञ्चमलक्षणस्योत्थितौ बीजमुपदर्शयति—'नन्वि'त्यादिना।

---

क 'घनिरुक्तासाकल्यस्य'।

ख धन चैत्रत्वात् प्रधनादित्यादौ।

विशेषविषयत्वपर्यवसितस्य साध्याभाववन्निष्ठयावत्त्वस्य सर्वत्र दुर्ज्ञेयत्वाच्च। अत एव न द्वितीयः (क)प्रकारोऽपीत्यत आह—"साध्यवदन्ये"ति। साध्यवदन्यावृत्ति(१)स्वाधिकरणतासामान्यकमित्यर्थः। (२)तेन द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः, पर्वतनिष्ठस्यैव(३) वह्नित्वावच्छिन्नाधिकरणत्वस्य धूमवदन्यावृत्तित्वादतिव्याप्तिरतः सामान्यपदम्।

परे तु साध्यवदन्यवृत्तिस्वाधिकरणतानवच्छेदकीभूतहेतुतावच्छेदकसम्बन्धवत्त्वमर्थः। न च द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिर्वि'शिष्टस्यातिरिक्तत्वात्। अनतिरिक्तत्वे तु (ख) विशेषणविशेष्योभयसम्बन्धेन तत्र हेतुत्वात्। साध्यवदन्यवृत्तित्वावच्छिन्नाधिकरणतानवच्छेदकीभूतसाधनतावच्छेदकसम्बन्धविशिष्टधर्मवत्त्वं तु नार्थः। द्रव्यं घटत्वविशिष्टसत्त्वादित्यादौ तादृशाधिकरणत्वाप्रसिद्धेरित्याहुः। 'केवलान्वयिनीति'। केवलान्वयिसाध्यकहेताबित्यर्थः। तेन वाच्यं घटत्वादित्यादिव्यतिरेकहेतावप्यव्याप्तिसम्भवान्न मूलस्य न्यूनत्वम्।

इति व्याप्तिपञ्चकग्रन्थः।

---

१ 'स्वं'—प्रकृतहेतुत्वेनाभिमतम्।

२ प्रकृतहेतौ साध्यवदन्यावृत्तित्वमनिवेश्य स्वाधिकरणतासामान्ये तन्निवेशस्य प्रयोजनमाह—'तेने'ति।

३ सामान्यपदस्य व्यावृत्तिमाह—'पर्वतनिष्ठस्यैवे'त्यादिना।

---

क 'द्वितीयः प्रकारोपपत्यत'।

ख 'विशेष ... ष्योभयः' इत्यत्र।

# सिंहव्याघ्रलक्षणम्

(क लक्षणान्तरमाशङ्कते नापीति। साध्यस्यासामानाधिकरण्यं यत्र (ख तत्साध्यासामानाधिकरण्यं साध्यवद्वृत्तित्वानवच्छेदकमिति यावत्। तादृशमनधिकरणं(१) यस्य तत्त्वम्। साध्यवद्वृत्तित्वानवच्छेदकीभूताधिकरणकान्यत्वं साध्यवद्वृत्तित्वानवच्छेदकीभूतस्वावच्छिन्नाधिकरणकान्यधर्मवत्त्वमिति तु फलितार्थः। तेन द्रव्यं विशिष्टसत्त्वादित्यादौ साध्यवद्वृत्तित्वानवच्छेदकस्य गुणादेः सत्ताद्यधिकरणत्वेऽपि विशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणत्वविरहान्नाव्याप्तिः। साध्यवत्त्वमिह साध्यताघटकसम्बन्धेन बोध्यम्। तेन ज्ञाप्यात्मत्वादित्यादौ विषयतासम्बन्धेन यज्ज्ञानाधिकरणं तद्वृत्तित्वानवच्छेदकस्याप्रसिद्धावपि नाव्याप्तिः। ग)ज्ञानसमवायिवृत्तित्वानवच्छेदकीभूतस्य घटत्वादेः सुलभत्वात्। (२ ननु साध्यवद्वृत्तितामात्रस्यैव व्याप्यवृत्तित्वात्तदवच्छेदकाप्रसिद्ध्या निरुक्तलक्षणस्यासम्भवः, विरुद्धयोर्भावाभावयोरेकत्र सत्त्वार्थमेव तदवच्छेदकानुसरणादतो लक्षणान्तरमाह—'साध्यवैयधी'ति। साध्येन 'विगतं

---

१ 'तादृशमनधिकरणं' इत्यादि यदधिकरणमनधिकरणं यस्येति व्युत्पत्त्या यस्याधिकरणं साध्यानधिकरणं तत्त्वमित्यर्थः।

२ लक्षणान्तरमवतारयति—'नन्वि'त्यादि।

---

क 'शाङ्क्ते ... पति'।

ख तत्साध्यं 'सामानाधिकरण्यं'।

ग 'ज्ञाने समवायिवृत्तित्वानवच्छेदकीभूतस्य ज्ञानत्वादेः'।

(क)शून्यमधिकरणं यस्य तत्त्वं साध्यानधिकरणाधिकरणकत्वमिति यावत्, तदनधिकरणत्वमित्यर्थः। साध्यवैयधिकरण्यं साध्यवद्-वृत्तित्वानिरूपकाधिकरणावृत्तित्वं तस्यानधिकरणत्वमिति वा। परे तु साध्यासमानेति। वर्णव्यत्यासेन साध्यस्य साध्यशून्यस्य समानं सदृशं साध्यानधिकरणमात्रवृत्तिधर्मवदिति यावत्। तादृशमधि-करणं यस्य तत्त्वानधिकरणत्वमित्यर्थः। वह्न्याद्यनधिकरणद्रव्यत्वादि-धर्मवदधिकरणकत्वं धूमादेरप्य(ख)स्तीत्यतो मात्रपदम्। (ग)साध्यान-धिकरणाधिकरणत्वस्य साध्यानधिकरणमात्रवृत्तिधर्मवदधिकरणत्व-मपेक्ष्य लघुत्वात् तदन्तर्भावेण लक्षणान्तरमाह—साध्यवैयधिकरण्ये-(घ)त्यादीत्याहुः।

ननूभयनिरुक्तावेव चरमाधिकरणांशस्यानतिप्रयोजनत्वमतः फलि-तार्थमाह—'तदुभयमपीति'। 'वा'शब्दस्यानुषङ्गेण तदुभयलक्षणार्थो वा साध्यानधिकरणाधिकरणकान्यत्वमित्यर्थः। दूषयति—'तच्चे'ति। 'च' हेतौ, (१)उक्तनिरुक्तित्रयं हि। (२) 'तत्र'—केवलान्वयिनि (ङ) अप्रसिद्धमित्यग्रिमेणान्वयो वाच्यत्वाद्यनधिकरणस्याप्रसिद्धेरिति भावः।

---

१ 'उक्तनिरुक्तित्रयं हि'—इत्यनन्तरं तदर्थ इति पूरणीयम।
२ तत्रे'ति मूलस्यार्थमाह—'केवलान्वयिनी'ति।

---

क 'विगत' न्यून'म्।
ख 'पत्यतो मात्रपदम्'।
ग 'साध्यानधिकराधिकरणस्तस्य'।
घ साध्यवैयाधिकरण्यत्वादित्याहुः।
ङ 'अप्रसिद्धमित्यन्येऽन्वयो'।

(क्रमशः)

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम्॥

# संस्कृत साहित्य

| Vol. LVI<br>No. 6 | १८९५ शकीये आश्विने<br>१३८० बङ्गाब्दीये<br>५६तम-वर्षस्य ६ष्ठ-संख्या | October<br>1973 |
|---|---|---|

## योगिनामीश्वरः

[ निबन्धकः—श्रीदीननाथ त्रिपाठी नवतीर्थः, महाचार्य्यः ]

अस्ति खलु भारतीयेषु दर्शनेषु सेश्वरनिरीश्वरत्वाभ्यां द्विविधो वादः। तत्र चार्वाकशाक्यार्हतसांख्यमीमांसका निरीश्वरवादाः, नैयायिकवैशेषिक-योगिवेदान्तिनः सेश्वरवादाः। सेश्वरवादेष्वपि योगिव्यतिरिक्ताः सर्वे ईश्वरस्य जगन्सृष्ट्यादिकर्तृत्वादिकमातिष्ठन्ते। योगिनः पातञ्जलाः पुनरीश्वरमभ्यु-पेयन्तोऽपि न तस्य जगत्स्रष्टृत्वादिकमनुमन्यन्ते। अतः पातञ्जलमते ईश्वरः किंस्वरूपः, किंलक्षणकः, किंप्रयोजनक इत्यादयः संशया उत्तिष्ठन्ति। तत्-संशयव्युदासार्थं पातञ्जले ईश्वरनिरूपणपरं सूत्रं प्रवृत्तं—"क्लेशकर्मविपाका-शयैरपरामृष्टः पुरुषविशेष ईश्वरः" [ योगसूः १।२४ ] इति। यद्यपि सर्वे पुरुषाः चितिशक्तिस्वरूपास्तथापि पुरुषविशेष एवेश्वरो न तु पुरुषसाधारणः। एतेन पुरुषविशेषत्वमीश्वरस्य संक्षिप्तं लक्षणमुक्तं भवति। परन्तु तन्मात्रस्य लक्षणत्वे मुक्तजीवेष्वतिव्याप्तिः स्यात्। यतो मुक्ताः खलु केवलिनः क्लेशैः कर्मभिर्विपाकैराशयैश्च शून्या भवन्तीत्यत आह क्लेशकर्मविपाकाशयै-

रपरामृष्ट इति। अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशा उच्यन्ते। अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या। बुद्धिपुरुषयोर्भेदाग्रहोऽस्मिता। सुखतृष्णा रागः। दुःखक्रोधो द्वेषः। मृत्युभयोऽभिनिवेशः। कर्म विहितनिषिद्धरूपम्। ब्राह्मणादिजन्मायुर्भोगा विपाकाः। फलपर्यन्तमाशयाते चित्तभूमौ पुण्यपापे आशयशब्देनोच्येते। अथवा पुण्यपापवासनाः। एतैः कालत्रयेण असंसृष्टः पुरुषविशेष एवेश्वर उच्यते। मुक्तस्य जीवस्य मुक्तेः प्राग् बन्धनान्यासन् ईश्वरस्य तु तथा कदाचित् पूर्वबन्धनमासीत्। नाप्युत्तरबन्धनानि यथा प्राकृतलयानां प्राकृतं बन्धनं विद्यते। प्रकृतिभावनासंस्कृता जनाः शरीरविनाशात् परं प्रकृतौ लीना भवन्ति। प्रकृतिलयकाले प्रकृतिलीनानां बन्धनानुभवाभावेऽपि प्रकृतेः पुनरुत्थाय बन्धनप्राप्तिर्भवति। नैवमीश्वरस्य उत्तरकाले कदापि बन्धनं भवेत्। स्थूलदेहरहिता बुद्धिवृत्तिमन्तो हि विदेहा उच्यन्ते। तेषां शब्दादिविषयेषु रागो विद्यते। अयं खलु वैकारिको बन्ध उच्यते। एषोऽपि नास्तीश्वरस्य। कर्मदक्षिणादानादिष्वनुरागरूपो दक्षिणाबन्धः खलु दिव्यादिव्यविषयभाजामस्ति। स नास्तीश्वरस्य। अतः पुरुषविशेष एव ईश्वरः। नास्ति तत्तुल्योऽपरोऽभ्यधिको वा कश्चित्। न चाययमीश्वरो जगत् सृजति पालयति संहरति वा। कर्ता हि अचेतनो भवति, परिणामित्वात्। पुरुषस्यापरिणामिनः कूटस्थस्य कथमपि कर्तृत्वं न सम्भवति। एतद्विषये सांख्यसिद्धान्तो योगिभिरभ्युपगम्यते। अतः पुरुषसंयोगवशात् प्रकृतिरेव महदादिरूपेण परिणमते इति सैव जगत्कर्त्री। ननु पुरुषसान्निध्यात् प्रकृतेर्जगत्सर्जनादिसम्भवेन किमर्थमीश्वरः पुरुषविशेषः स्वीक्रियते, किं वा तत्र प्रमाणमिति चेत्। उच्यते। ईश्वरे तावच्छ्रुतिः प्रमाणम्। "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नामरूपमन्नं च जायते।" [मुः उः १।८] "एको हि रुद्रो न द्वितीयाय तस्थुर्य इमाल्लँोकान् ईशंत ईशानीभिः। प्रत्यङ् जनास्तिँष्ठति संचुकोपान्तकाले

संसृज्य विश्वा भुवनानि गोपाः।" [ श्वेताः उः ३।२ ]। इत्याद्याः श्रुतय ईश्वरं प्रमाणयन्ति। ननु श्रुतेः प्रामाण्यसिद्धौ तया श्रुत्या ईश्वरः सिध्येत्। श्रुतेः प्रामाण्यं कथं सिध्यति इति चेत्। उच्यते। ईश्वरस्य प्रकृष्टसत्त्वं शास्त्रनिमित्तम्। अयमर्थः = विशुद्धकूटस्थचैतन्यमात्रं नेश्वरपदवाच्यं, कूटस्थचैतन्यस्य नित्यज्ञानस्वरूपतया निर्विकारतया च न ज्ञानक्रिये सम्भवतः। विना ज्ञानक्रिये भूतानुजिघृक्षा न सम्भवति। ज्ञानेच्छाकृतीना सत्त्वधर्मत्वात्। अतो रजस्तमोरहितविशुद्धसत्त्वोपाधिश्चिच्छक्तिः ईश्वर इत्युच्यते। जीवाना चित्तसत्त्वेन सह यथा स्वस्वामिभावाभिमानो न तथा ईश्वरस्य प्रकृष्टचित्तसत्त्वेन सह स्वस्वामिभावाभिमानः। किन्तु तापत्रयपीड़ितान् जीवान् संसारसागरादुद्धरिष्यामीति करुणया ईश्वरः प्रकृतेः सकाशात् प्रकृष्टसत्त्वमुपाधित्वेन गृह्णाति अविद्यादिभिरपरामृष्टोऽपि नटवत् स्वेच्छया अविद्याद्यभिमानीव भवति। यथा नटः स्वस्य रामत्वमारोप्य अभिनयति, न तु स्वस्य रामत्वमध्यवस्यति, तथा जगज्जीवोद्धरणकार्यार्थं प्रकृष्टचित्तसत्त्वमुपाददपि ईश्वरो न ममेदमिति जानाति। यस्मान्नित्यमुक्तो हीश्वरः। वेदादिशास्त्रप्रणयनेन शास्त्रोपदेशेन च जीवानामुद्धरणं भगवतः कार्यम्। ज्ञानक्रियासामर्थ्यव्यतिरेकेण नोपदेशः सम्भवति। नापि ज्ञानक्रियासामर्थ्यं विशुद्धसत्त्वं विनेति ईश्वरः प्रकृतेर्विशुद्धचित्तसत्त्वमुपादत्ते। तादृशविशुद्धसत्त्वोपहितश्चिद्रूप ईश्वरः समर्थो भवति जीवानामज्ञानां ज्ञानोपादेशाय। ननु केवलकूटस्थचैतन्यस्य न काचिदिच्छा। अतो जीवोद्धारेच्छा खलु ईश्वरस्य विशुद्धसत्त्वग्रहणेन सम्भवति। विशुद्धसत्त्वग्रहणं जीवोद्धारेच्छया इति प्रसक्तमन्योऽन्याश्रयत्वं दुरुद्धरमिति चेत्। न। अनादिरयं जीवोद्धारेच्छासत्त्वग्रहणव्यापारः। तथाहि—पूर्वसर्ग-प्रलयात् पूर्वम् ईश्वरस्य सत्त्वग्रहणसङ्कल्पो भवति। प्रलयानन्तरं सृष्टेरादौ अहं सत्त्वप्रकर्षं ग्रहीष्यामीति सङ्कल्प्येश्वरो जगत् संहरति। तदा प्रलयकाले ईश्वरोपाधिभूतं चित्तसत्त्वं प्रधाने लयं गतं भवति। तथापि तादृशवासनावशान्महाप्रलय-

समाप्तौ ईश्वरचित्तं सत्त्वभावेन परिणमते। यथा कश्चित् सुषुप्तेः प्राक् सङ्कल्पयति सुषुप्तेरुत्थाय इदं करिष्यामीति, स तथैव वासनावशेन सुषुप्तेरुत्थाय करोति तथा। एवमनन्तरसृष्टावीश्वरः प्रकृष्टचित्तसत्त्वेन जीवोद्धारणेच्छया वेदादिशास्त्रप्रणयनेनोपदिशतीति अनादित्वादुद्दिधीर्षासत्त्वोपादानयोर्बीजाङ्कुरन्यायेन न अन्योऽन्याश्रयः।

नन्वेवं सति ईश्वरचित्तसत्त्वनिमित्तं श्रुतिप्रामाण्यं श्रुतिनिमित्तं चेश्वरचित्तसत्त्वमिति पुनरन्योऽन्याश्रय इति चेत्। मैवम्। ईश्वरप्रणीतेषु मन्त्रायुर्वेदेषु सफलप्रवृत्तिदर्शनादर्थाव्यभिचारनिश्चयाद् वेदानां प्रामाण्यं सिध्यति। न खलु वेदानां प्रामाण्यसिद्धिरीश्वरचित्तसत्त्वमपेक्षते। किन्तु ईश्वरचित्तसत्त्वं वेदानां प्रामाण्यनिर्वाहकमात्रमिति। वेदानां त्वीश्वरचित्तसत्त्वप्रमापकत्वम्। ईश्वरचित्तसत्त्वप्रमापकत्वेन तादृशचित्तसत्त्वोपहिते ईश्वरेऽपि प्रमाणं वेदा इति निष्कर्षः। तस्मान्नास्त्यन्योऽन्याश्रयदोष इति। नन्वीश्वरस्य श्रुतिप्रमाणकत्वे—"विश्वस्य कर्ता भुवनस्य गोप्ता"इत्याद्याभिः श्रुतिभिरीश्वरस्य जगत्कर्तृत्वमपि श्रुतिसिद्धं भवेदिति चेत्। न। प्रकृतेः वैषम्यहेतुक्षोभस्येश्वरेच्छावशात् सम्भवेन प्रकृतेः कर्तृत्वं भगवति उपचर्यते। न तु परमार्थत ईश्वरस्य कर्तृत्वमस्ति। तथा सति ईश्वरस्य विकारित्वापत्तेर्नित्यमुक्तत्वव्याघातः। अपि च श्रुत्यन्तरमीश्वरस्याकर्तृत्वं ब्रवीति—"ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोग्यार्थयुक्ता। अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्॥" इति [ श्वेताश्वः उः १।९ ]। अत्रायं विशेषः—ईश्वरस्य ज्ञानेच्छादिकं महाप्रलये न विद्यते। तत्काले प्रकृतेर्गुणसाम्यात् ईश्वरस्य चित्तसत्त्वमपि प्रकृतिकत्वात् प्रकृतिसाम्यं प्राप्नोति। प्रकृतिसाम्याभावे ईश्वरचित्तसत्त्वस्याप्राधानिकत्वापत्तेः। न चेष्टापत्तिः। तस्याप्राधानिकत्वे कूटस्थचितिशक्तिस्वरूपत्वे इच्छादिधर्मकत्वाभावापत्त्या तत्त्वान्तरापत्तिः स्यात्। न च सांख्यसिद्धान्ते प्रकृतिपुरुषव्यतिरेकेण तत्त्वान्तरमस्ति। तस्मात् महाप्रलये ईश्वरचित्त-

सत्त्वस्य प्रकृतिसाम्यात् न ज्ञानेच्छादिकमीश्वरस्य नित्यं सम्भवति। किन्तु महाप्रलयावसाने प्रकृतेर्वैषम्याद् उद्भवति पुनर्महाप्रलये प्रकृतिसाम्यात् ज्ञानेच्छादिकं तिरोभवति इति वाचस्पतिमिश्राणां मतम्।

विज्ञानभिक्षवस्तु—ईश्वरचित्तसत्त्वस्य ज्ञानेच्छादिकं नित्यमेवातिष्ठन्ते। तत्र "नैवाहस्तस्य न निशा नित्यस्य परमात्मनः" इत्यादिशास्त्रं प्रमाणम्। नचेश्वरसत्त्वस्य नित्यत्वे महाप्रलयेऽपि गुणसाम्याभावापत्तिरिति वाच्यम्। तस्येश्वरसत्त्वस्य नित्यत्वेऽपि विसदृशपरिणामाभावरूपसाम्यावस्था प्रलये सम्भवति। महाप्रलये ईश्वरसत्त्वं न स्वकार्यं करोति इत्यपेक्ष्य शास्त्रे ईश्वरस्य द्विपरार्द्धान्तलय उच्यते न तु वस्तुतस्तस्य लय इति। तस्मात् प्रलयेऽपि ईश्वरस्य ज्ञानात्मिका वृत्तिरस्ति इति तस्य तत्काले ज्ञातृत्वमिष्टम्। उपाधिं विना कूटस्थचैतन्ये स्वरूपतो ज्ञातृत्व सम्भवति इति प्रलयेऽपीश्वरोपाधेः सत्त्वस्य सद्भावाज् ज्ञानात्मिका वृत्तिरेष्टव्या। किञ्च "एतत्तमो वा इदमेकमास तत्परे स्यात् तत्परेणेरितं विषयत्वं प्रयाती"त्यादिश्रुतिभिरीश्वरप्रयत्नस्य गुणवैषम्यहेतुत्वं प्रतिपाद्यते इति प्रकृतिसाम्यावस्थायामपि ईश्वरोपाधेर्ज्ञानादिकमस्तीति सिद्धमीश्वरज्ञानादिकं नित्यमित्याहुः।

अपरश्च विशेषः—क्लेशकर्मविपाकाशयैर्वस्तुतोऽपरामृष्टोऽपीश्वरो भूतानुजिघृक्षया अविद्यया अविद्याभिमानीव प्रकृतेश्चित्तसत्त्वमुपादत्ते। तेनास्येश्वरस्य ज्ञानादिकमाहार्यम्। स चेश्वरः प्रलये स्वसंकल्पवशात् स्वोपाधिं स्वस्माद्वियोज्य शेते। पूर्वसर्गसंकल्पसंस्काराभ्यां चेश्वरेण सह स्वोपाधिः पुनः संयुज्यते इति वाचस्पतिमिश्राणां मतम्।

भिक्षूणां तु मते—ईश्वरोपाधेर्नित्यत्वान्न कदापि ईश्वरसत्त्वम् ईश्वराद्वियुज्यते। ईश्वराद्वियुज्य पुनस्तेन सत्त्वस्य संयोगे सति ईश्वरस्याविद्यावत्त्वापत्तिः। यस्म द्बुद्धिपुरुषसंयोगस्य अविद्याहेतुकत्वं "तस्य हेतुरविद्ये"ति सूत्रमाह। न च तस्य बुद्धिपुरुषसंयोगस्य अविद्यया आहार्यज्ञानरूपसंयोगत्वमिति वाच्यम्। ईश्वरस्य विवेकज्ञानवत्त्वेन विवेकख्यातेरविद्यानि-

वर्तकत्वात् अविद्यया संयोगासम्भवात्। तस्मात् प्रलये ईश्वरस्य लयः पुनः सृष्टौ तस्य व्युत्थानमिति यच्छास्त्रे वर्णितं तद्दैनन्दिनप्रलये जन्येश्वराणा ब्रह्मादीनामिति बोद्धव्यम्। न तु नित्येश्वरस्य परमात्मनो लयो व्युत्थानं वास्ति इति समीचीनम्।

एवमीश्वरसिद्धौ स एक एवेति ज्ञातव्यम्। अन्यथा अनेकेश्वरस्वीकारे यदैक ईश्वर इदं नवमस्तु इति कामयतेऽपरश्च इदं पुरातनमस्तु इति कामयितुं शक्नोति। तत्र यस्येच्छाविघातः स्यात् सोऽन्यापेक्षया न्यूनो भवेदिति अन्यून एवेश्वरोऽस्तु। न न्यूनः। न चोभयोस्तुल्यैश्वर्यमस्त्विति वाच्यम्। द्वयोश्च युगपत्कामितत्वे वस्तुनः पुराणत्वं नूतनत्वं च न सम्भवति। नूतनत्वपुरातनत्वयोर्विरुद्धत्वादेकस्मिन् वस्तुनि। तस्माद् यत्र ऐश्वर्यस्य निरतिशयत्वं स एक एव ईश्वर इति। साम्यातिशयविनिर्मुक्तैश्वर्यः एक ईश्वरः सिध्यतीति भावः।

एवं श्रुतिप्रमाणसिद्ध ईश्वरे निरतिशयसर्वज्ञत्वमनुमानेन प्रमाणयितुं सूत्रकार आह—"तत्र निरतिशयं सर्वज्ञबीजम्।" दृश्यते हि लोके कश्चित् किञ्चिदतीतादि जानाति। अपरश्च तदपेक्षया बहु जानाति। अन्यश्च बहुतरं, ततोऽप्यधिकम् अपर इति। तदेकं ज्ञानं सातिशयमिति। सातिशयं हि कुत्रचित् काष्ठां प्राप्नोति। अन्यथा अनवस्थापत्तेः। यथा घटादौ परिमाणं सातिशयमात्मादौ निरतिशयं भवति एवम्। तथाच सातिशय-ज्ञानं क्वचित् काष्ठां प्राप्नोति सातिशयत्वात् परिमाणवत्। काष्ठा च निरतिशयत्वम्। यदपेक्षया अतिशयवत्ता नास्ति तन्निरतिशयम्। यत्र च ज्ञानं निरतिशयं स सर्वज्ञ इति सर्वज्ञत्वमनुमानेन सिध्यति। एवंविधः सर्वज्ञः पुरुषविशेष ईश्वरः। न च गुरुत्वसंस्कारयोः सातिशयत्वेऽपि निरति-शयत्वं न दृश्यते इति गुरुत्वादौ सातिशयत्वहेतुर्व्यभिचारी इति वाच्यम्। अवयवगुरुत्वातिरिक्तस्य अवयविनो गुरुत्वं नास्ति। परमाण्वाद्यवयवेषु अवयविषु च गुरुत्वं प्रत्येकवर्ति भिन्नं भिन्नं च। तस्य समूहे

गुरुत्ववृद्धेरभिमानो भवति। न तु वस्तुतः कुत्रापि गुरुत्वस्य सातिशयत्वमस्ति येन सातिशयत्वं हेतुस्तत्र स्यात्। ज्ञानं तु प्रतिविषयं न समाप्यते। बहुषु विषयेषु एकं ज्ञानमपि जायते इति तत्र सातिशयत्वमस्ति। ननु एवं सर्वज्ञत्वानुमाने कपिलकणभुगादीनामपि सर्वज्ञत्वं सेत्स्यति इति एकः परमात्मा सर्वज्ञ इति नैकान्त्येन सिध्येदिति चेत्। न। उक्तेनानुमानेन सामान्यतया सर्वज्ञत्वसिद्धावपि न विशेषनिश्चयो भविष्यति। विशेषनिर्णयस्तु श्रुत्यादिशास्त्रात् सिध्यति। शास्त्रेण हि शिवो विष्णुः, इत्यादिनामभिरीश्वरो निर्दिश्यते।

अत्रापि कश्चिदविशेषोऽस्ति। शास्त्रेषु हि, ईश्वरः शिवो विष्णुरित्यादि संज्ञाविशेषो निर्दिष्ट इति वाचस्पतीनां मतम्।

भिक्षूणां तु मते—न शिव इत्याद्याः सञ्ज्ञाः परमेश्वरस्य। किन्तु परमेश्वरस्य शक्तिविशेषाणां संज्ञाः। ईश्वरस्य संज्ञा तु ब्रह्म, अन्तर्यामी, परमात्मा इत्याद्या। संज्ञादीत्यत्रादिपदेन पूर्णानन्दत्वपरमकारुणिकत्वपारमार्थिकात्मत्वजगदाधारकारणत्वादयो गृह्यन्ते इति। एवम्भूतेश्वरस्य स्वप्रयोजनाभावेऽपि भूतानुग्रहार्थं वेदादिशास्त्रप्रणयनेनोपदेशादिरूपा प्रवृत्तिरस्ति। सोऽयमीश्वरः अर्पितसकलकर्मतत्फलाभिसन्धि साधकं प्रति प्रसन्नतया समाधितत्फलाभ्यां च योजयत्यपि इति ईश्वरप्रसादात् सर्वं सिध्यति। तेनेदृशेश्वरो भक्त्या उपास्य इति।

# चैतन्योपासकः प्रबोधानन्दसरस्वती

[ निबन्धकः—श्रीमानवेन्दु वन्द्योपाध्यायः ]

महाप्रभोश्चैतन्यदेवस्य भक्तवर्येषु वाराणसीवास्तव्यः प्रबोधानन्दसरस्वती मुख्यतमः। स च चैतन्यमाहात्म्यमवलम्ब्य चैतन्यचन्द्रामृतमित्यभिधस्य* स्तोत्रकाव्यस्य रचयिता। कोऽयं प्रबोधानन्द इति स्थिरीकरणाय बहवो वैष्णवग्रन्थकर्तारो व्याकुलीभूता आसन्। केषुचिद्वङ्गभाषाप्रणीतवैष्णवग्रन्थेषु प्रबोधानन्दस्य प्रासङ्गिक उल्लेखो दृश्यते। नरहरिचक्रवर्त्तिप्रणीते भक्तिरत्नाकरग्रन्थे त्रिमल्लभट्टो वेङ्कटभट्टः प्रबोधानन्दश्च त्रयः सहोदराः, षड् गोस्वामिनामन्यतमो गोपालभट्टश्च वेङ्कटस्यात्मज इत्युक्तम्। 'श्रीवैष्णव'-सम्प्रदायभुक्ता एते चैतन्यदेवस्य प्रभावेण राधाकृष्णसेवकाः सञ्जाताः। नित्यानन्ददासप्रणीते प्रेमविलासग्रन्थे मनोहरदासस्य अनुरागवल्ल्याञ्च प्रबोधानन्दो गोपालभट्टस्य पितृव्य इत्युक्तम्। नित्यानन्ददासेन पुनरप्युक्तम् —गोपालभट्टस्त्रिमल्लभट्टस्य पुत्र इति। दाक्षिणात्यपर्यटनकाले चैतन्यदेवस्त्रिमल्लस्य गृहे चातुर्मास्यं पालयन् प्रबोधानन्दस्योपरि बालकगोपालस्य शिक्षापरिचालनभारं न्यस्तवान्। मुरारिगुप्तस्य चैतन्यचरितामृतमहाकाव्ये (तृतीयप्रक्रमस्य पञ्चदशसर्गे श्लोकाः १४-१६) त्रिमल्लगृहे चैतन्यस्योपस्थितिः, तत्पादस्पर्शेन बालकगोपालस्य चैतन्यभक्तरूपेण परिणतिश्चाभिहिता। कविकर्णपूरस्य चैतन्यचरितामृतमहाकाव्यस्य त्रयोदशसर्गे उक्तम्—

त्रिमल्लभट्टस्य महाशयस्य गृहे कृतवासविधिः कृपालुः।
कुतूहलेनैव निनाय चातुर्मास्यं स आवश्यककर्म कुर्वन्॥

(श्लोकः ४)

---

* बहरमपुरात् प्रकाशितं राधारमणप्रेससंस्करणम् (१९२६)।

किन्तु मुरारिकर्णपूरादीनां चरितकाव्येषु वृन्दावनगोस्वामिनां ग्रन्थेषु च गोपालभट्टप्रबोधानन्दयोः सम्पर्कसूचकः कोऽपि प्रसङ्गो न परिलक्ष्यते।

गोपालभट्टस्तस्य हरिभक्तिविलासग्रन्थस्य मङ्गलाचरणश्लोके प्रबोधानन्दं तस्य गुरुरूपेण वर्णयामास न तु पितृव्यरूपेण। तत्रोक्तम्—

"भक्तेर्विलासांश्चिनुते प्रबोधानन्दस्य शिष्यो भगवत्प्रियस्य।
गोपालभट्टो रघुनाथदासं सन्तोषयन् रूपसनातनौ च॥"

इति।

अत्र 'भगवत्प्रियस्य' इत्यनेन चैतन्यमहाप्रभोः प्रियशिष्यः प्रबोधानन्द इत्यर्थ आयाति। श्रीरूपगोस्वामिना 'वैष्णववन्दना'ग्रन्थेऽप्युक्तम्—

"प्रबोधानन्दसरस्वतीं वन्दे विमलां यया मुदा।
चन्द्रामृतं रचितं यत्शिष्यो गोपालभट्टः॥" इति।

तस्मान्नरहरिप्रभृतिभिर्बङ्गभाषाप्रणीतेषु वैष्णवग्रन्थेषु 'प्रबोधानन्दो गोपालभट्टस्य पितृव्य' इत्यनेनोल्लेखो ह्यप्रामाणिक एवेत्यस्माकं मतम्। एतद्वृत्याश्चर्यं यत् कृष्णदासकविराजप्रणीते गौड़ीयवैष्णवानामाकरग्रन्थे प्रबोधानन्दसम्बन्धि किञ्चिदपि नोक्तम्। कविकर्णपूरप्रणीतगौरगणोद्देश-दीपिकायामभिहितम्—व्रजलीलायां राधासहचरी तुङ्गविद्यैव गौरलीलायां प्रबोधानन्दरूपेणाजायतेति। तदुक्तम्—

"तुङ्गविद्या व्रजे यासीत् सर्वशास्त्रविशारदा।
स प्रबोधानन्दयतिर्गौरोद्गानसरस्वती॥" (श्लोकः १६३)

नाभादासजीविरचिते हिन्दीभक्तमालग्रन्थे* प्रबोधानन्दविषयमधिकृत्योक्तम्—

"श्रीप्रबोधानन्दसरस्वतीगुँसाईजूका वर्णन—

---

* बम्बइ (Bombay)—नगर्याः व्रजवल्लभहरिप्रसादमहोदयेन प्रकाशितम् (१९२४ खीः)।

श्रीप्रबोधानन्द वड़े रसिक आनन्दकन्द श्रीचैतन्यचन्द्रजूके पारषद प्यारे हैं। राधाकृष्णकुञ्जकेलि निपट नवेलि कही झेलि रसरूप दोउ किये दृग तारे है। वृन्दावनवासको हुलासले प्रकाश कियो दियो सुखसिन्धु कर्मधर्मसर्वटारे हैं। तहाँ सुनि सुनि कोटि कोटि जन रंग पायो विपिन सुहायो बसे तनमन वारे हैं।" (कवित्त ६१२)

अत्रेदमवधेयम्—चैतन्यस्य प्रियपार्षदः प्रबोधानन्दो वृन्दावने वसन् गौराङ्गविषयकं राधाकृष्णमाहात्म्यसूचकञ्च काव्यजातं विरचितवान्। तत्काव्यरसास्वादेन रसिकजनाः परमामोदं प्राप्तवन्त इति। यद्यपि प्रबोधानन्दो वाराणस्यधिवासी इति केषाञ्चिन्मतम्, तस्य वृन्दावनाधिष्ठानत्वमपि भक्तमालग्रन्थाज् ज्ञायते। किञ्च तस्य वृन्दावनमहिमामृतकाव्ये वृन्दावनस्य निपुणवर्णनया एतदनुमीयते यत् कियन्तं कालं स राधाकृष्णयोर्लीलाक्षेत्रमध्युवास।

प्रबोधानन्दः प्रकाशानन्दसरस्वती चाभिन्न एवेति केषाञ्चिदभिमतम्। शिशिरकुमारघोष-महोदयेनैतयोः पण्डितवर्य्ययोरभिन्नत्वं हृदि कृत्वा पुस्तकमेकं* बङ्गभाषया प्रणीतम्। ४०४ चैतन्याब्दे प्रकाशितस्य चैतन्यचन्द्रामृतग्रन्थस्य भूमिकायां रामदयालघोषपादेन शिशिरकुमारस्य मतं समर्थितम्। किन्तु केन प्रकारेण प्रबोधानन्दः प्रकाशानन्दाभिधया परिणतोऽभवत्तत्ताभ्यां न विशदीकृतम्। वृन्दावनदासस्य चैतन्यभागवते (मध्यखण्डस्य तृतीयाध्याये श्लोकाः ३७-४०) मुरारिगुप्तमभिलक्ष्य चैतन्यदेवकृतोऽद्वैतवादिनः प्रकाशानन्दस्य कार्य्यस्योपक्रोशो वर्णितः। कृष्णदासकविराजविरचित-चैतन्यचरितामृतकाव्यस्य मध्यलीलायाः सप्तदशाध्याये वैदान्तिकस्य चैतन्यद्वेषिणश्च प्रकाशानन्दस्य चैतन्यदेवप्रभावात्तद्भक्तरूपेण परिणतेः कथा विस्तरेणोपस्थापिता। किन्तु नापि वृन्दावनदासेन

* 'प्रबोधानन्द ओ प्रकाशानन्द'।—अमृतबाजारपत्रिकाकार्य्यालयात् १३१५ बङ्गाब्दे प्रकाशितोऽयं ग्रन्थः।

न च कृष्णदासकविराजेन प्रबोधानन्दस्य प्रसङ्गोऽपि वर्णितः। चैतन्यचन्द्रामृतग्रन्थस्य आनन्दिकृतरसिकास्वादिनीटीकायां (१६४५ शकाब्दः) प्रबोधानन्दविषयक आवश्यिकस्तथ्यसन्दोहः परिदृश्यते। तत्रापि च प्रकाशानन्दस्य कथा सर्वथैव परित्यक्ता। तत्र प्रथमश्लोकस्य टीकायामुक्तम्—"श्रीश्रीपादपरिव्राजराजो वेदान्तसांख्यवैशेषिकपातञ्जलमीमांसागमनिगमपुराणमहापुराणसेतिहासगरुचराचालङ्कारकाव्यनाटकादिरहस्यसिद्धान्तानर्गलवक्तृत्वोज्ज्वलीकृतासङ्ख्यकाशीवास्यन्तेवासिकजनानामन्तःकरणकः सर्वावतारिणः स्वयंभगवतोऽङ्गीकृताह्लादिनीशक्तिसारभूतश्रीराधिकाभावरूपस्य श्रीश्रीकृष्णचैतन्यमहाप्रभोः कृपादृष्टिपातेन स्फुरितयथार्थसिद्धान्तः प्रबोधानन्दसरस्वती परममहानुभावस्तस्यैवोपास्यत्वं निर्णयन् तद्गुणवर्णनप्रधानचैतन्यचन्द्रामृताभिधानमङ्गलस्वरूपग्रन्थमारभते" इति। एतेनैतद्धि ज्ञायते यत् तीर्थाटनेन पवित्रीकृतमानसो विविधशास्त्रनिष्णातो वाग्मितया काशीवासिना हृदयाकर्षकः प्रबोधानन्दश्चैतन्यकृपया धन्योऽभवत्। वेदान्तसांख्यवैशेषिकादयो ग्रन्थाः प्रधानतो ज्ञानमार्गाश्रयिणामद्वैतवादिनामेवालोचनीयास्तस्माद्गौरकृपाप्राप्तेः पूर्वं प्रबोधानन्दोऽद्वैतवादिनामाचार्य्य आसीदिति केषाञ्चिन्मतम्। चैतन्यचन्द्रामृतग्रन्थस्य ऊनविंशतितमश्लोकं विषयीकृत्यैतन्मतं समर्थितञ्च कैश्चित्। स च श्लोकः—

"तावद्ब्रह्मकथाविमुक्तिपदवी तावन्न तिक्तीभवे-
त्तावच्चापि विशृङ्खलत्वमयते न लोकवेदस्थितिः।
तावच्छास्त्रविदां मिथः कलकलो नाना बहिर्वर्त्मसु
श्रीचैतन्यपदाम्बुजप्रियजनो यावन्न दृग्गोचरः॥"

ड० सुशीलकुमारदे महोदयेनैतस्मिन् प्रसङ्गे उक्तम्—"From stanza 19 it is probable that Prabodhānanda was an Advaita Sanyāsin before he met Caitanya."*

प्रबोधानन्दप्रणीतेषु बहुषु ग्रन्थेषु सत्स्वपि** चैतन्यचन्द्रामृतकाव्यं तस्य प्रख्यातिं सातिशयं वर्द्धयति। भावगम्भीरभाषया रचितो गौरमाधुर्य-परिपूर्णो ग्रन्थोऽयं गौड़ीयवैष्णवसमाजे परममादरणीयः। अत्यद्भुतकारुण्य-विग्रहो गौरहरिरेव जगत्पालकः सत्त्वानामार्त्तिहर इत्येव कविना सश्रद्धं प्रतिपादितं स्वग्रन्थे। तदानीन्तनवैष्णवसम्प्रदाये चैतन्यमहाप्रभोः प्रभाव-स्तेन सह ग्रन्थकर्त्तुः सम्बन्धश्च कीदृशा आसीत्तत्स्थिरीकरणाय ग्रन्थस्यास्य पर्यालोचनावश्यमेव विधातव्येति हेतोः काव्यस्य सारसंक्षेपः प्रदर्श्यते।

त्रिचत्वारिंशदधिकशतसंख्यका ग्रन्थस्यास्य श्लोका द्वादशविभाग-विभक्ताः। तथा च प्रथमविभागे गौराङ्गस्तुतिप्रकरणम् ( श्लोकाः १-७ ), द्वितीये गौराङ्गप्रणामः ( श्लोकाः ८-१२ ), तृतीये आशीर्वादप्रार्थना ( श्लोकाः १३-१७ ), चतुर्थे चैतन्यभक्तमहिमा ( १८-३० ), पञ्चमे चैतन्याभक्तनिन्दा ( ३१-४५ ), षष्ठे दैन्यरूपस्वनिन्दा ( ४६-५६ ), सप्तमे उपास्यनिष्ठा ( ५७-७९ ), अष्टमे लोकशिक्षा ( ८०-९९ ), नवमे चैतन्योत्कर्षवर्णना ( १००-१०९ ), दशमे चैतन्यस्यावतारमाहात्म्यम् ( ११०-१३० ), एकादशे गौररसोल्लासनृत्यादिवर्णनम् ( १३१-१३७ ), द्वादशे चैतन्यप्रचारितभक्ति-परिपाटीं कुत्राप्यदृष्ट्वा कवेः शोकः ( १३८-१४३ )।

काव्येऽस्मिन् चैतन्यमहाप्रभुः परमभगवद्रूपेण सर्वमानवानामुपास-नीयत्वेन च प्रतिष्ठापितः। व्रजेन्द्रनन्दनः कृष्णः स्वयमेव निजमाधुर्यसास्वा-दयितुं परेभ्यश्च निर्मलनिजप्रेमोन्मदमधुरपीयूषधारां प्रदातुं चैतन्याकृति

* Early History of the Vaisṇava faith and movement in Bengal ( 2nd ed Calcutta, 1961 ) p. 131.

** प्रबोधानन्दप्रणीता ग्रन्थाः—(१) श्रीचैतन्यचन्द्रामृतम्, (२) श्रीराधारस-सुधानिधिः, (३) वृन्दावनमहिमामृतम्, (४) सङ्गीतमाधवम्, (५) आश्चर्यरासप्रबन्धः, (६) श्रुतिस्तुतिव्याख्या, (७) नवद्वीपशतकम्, (८) गीतगोविन्दव्याख्या (९) काम-गायत्रीव्याख्या।

परिगृह्य नवद्वीपभूमौ आविर्भूतोऽभवदिति प्रथमश्लोकस्य प्रतिपाद्यो विषयः। आनन्दिना रघुनाथदासकृतचैतन्याष्टकस्य प्रथमश्लोकमुद्धृत्य चैतन्याविर्भावस्यैतद्धि कारणं समर्थितम्। तथा च—

"हरिर्गोष्ठे दृष्ट्वा मुकुरगतमात्मानमतुलं
स्वमाधुर्यं राधां प्रियतरसखीमाप्तुमभितः।
अहो गौड़े जातः प्रभुरपरगौरैकतनुभाक्
शचीसूनुः किं मे नयनशरणिं यास्यति पुनः॥" इति।

चैतन्यदेवस्यापारो हि महिमा। यद्यपि स स्वयमेव ईश्वरस्तथापि तस्य विशेषार्चनाया नावश्यिकत्वं, तस्यैतद्धि वैशिष्ट्यं यत् प्रेमभक्तिप्रचारार्थं स कदापि युक्तितर्कादीनाश्रित्य हरिभक्तिविमुखजनान् भक्तिमार्गे प्रवर्त्तयितुं प्रयत्नशीलो नाभवत्, परन्तु—

"दृष्टः स्पृष्टः कीर्त्तितः संस्मृतो वा,
दूरस्थैरप्यानतो वादृतो वा,
प्रेम्णः सारं दातुमीशो य एकः।" (श्लोकः ४)

अनेन यथाकथञ्चिद्दर्शनादिमात्रेण तस्य परमप्रेमप्रदातृत्वमभिहितम्। श्रीचैतन्यस्य पादपद्माश्रिता भक्तवर्य्याः 'ब्रह्मादींश्च हसन्ति नातिबहु मन्यन्ते महावैष्णवान्'। तेन चातिगूढ़ोज्ज्वला प्रेमभक्तिः कलौ प्रकाशिता, तस्मादेव स सर्वावताराणां श्रेष्ठः। (श्लोकः ७)। राधामाधवयोरेकीभूततनुरपि श्रीचैतन्यदेवो हरेकृष्णेति नाम्नां संख्यां विधातुं कटिस्थितडोरकैर्ग्रन्थीन् वघ्नन्नश्रुस्नातमुखो नीलाचलस्थजगन्नाथदेवं दिदृक्षुर्वत्सरान् बहून् नीतवान्। (श्लोकः १६)। वर्णनयाऽनया नीलाचले महाप्रभुः कविना प्रत्यक्षीकृत इति मन्यते।

चैतन्यभक्तमहिमाख्यविभागे चैतन्यपदाम्बुजाश्रिता भक्तजनाः सर्वगुणा-

श्रया इति प्रतिपादयता तेष्वनन्यसाधारणसद्गुणानामुल्लेखः कृतः। तथा च—

"तृणादपि सुनीचता सहजसौम्यमुग्धाकृतिः
सुधामधुरभाषिता विषयगन्धथूथूत्कृतिः।
हरिप्रणयविह्वला किमपि धीर नालम्बिता
भवन्ति किल सद्गुणा जगति गौरभाजाममी॥"

(श्लोकः २४)

गौराङ्गेऽर्पितमानसो जनः सर्वसाधनहीनोऽपि परमपुरुषार्थं लभते, स च परमभाग्यशीलः। कृष्णचैतन्योपासना येभ्यो न रोचते ते विपन्ना भवन्तीति प्रतिपादितं श्लोकेऽस्मिन्—

"अवतीर्णे गौरचन्द्रे विस्तीर्णे प्रेमसागरे।
ये न मज्जन्ति मज्जन्ति ते महानर्थसागरे॥"

(श्लोकः ३५)

गौरचरणे येषां रतिर्न विद्यते उज्ज्वलकुलादिविशिष्टा अपि तेऽतिनिकृष्टा इति कवेः सिद्धान्तः। समग्रं विश्वमिदं कृष्णचैतन्यप्रेमरससिन्धौ मग्नं परन्तु तत्स्पर्शोऽपि कवेर्नास्तीति कविना सप्रश्रयमुक्तम्—

"वञ्चितोऽस्मि वञ्चितोऽस्मि वञ्चितोऽस्मि न संशयः।
विश्वं गौररसे मग्नं स्पर्शोऽपि मम नाभवत्॥"

(श्लोकः ४६)

किन्तु प्रेमलक्षणाया भक्तेर्बीजं हि श्रीगौराङ्गचरणाविति निश्चयीकृत्य कवेः प्रतिज्ञा—

"पतन्ति यदि सिद्धयः करतले स्वयं दुर्ल्लभाः
स्वयञ्च यदि सेवकीभवितुमागताः स्युः सुराः।
किमन्यदिदमेव वा चतुर्भुजं स्याद् वपु-
स्तथापि मम नो मनाक् चलति गौरचन्द्रान्मनः॥"

(श्लोकः ६४)

अत्र श्रीगौराङ्गदेवं प्रति कवेर्निष्ठाप्रगाढ़ता सूचिता। गौरभक्तिं विना तस्य ख्यातिसिद्धिप्रभृतीनां किमपि काम्यं नास्ति। अयञ्च सर्वदेवश्रेष्ठो गौराङ्गः कन्दर्पादपि मनोहरो गङ्गाप्रवाहादपि पावनश्चन्द्रादपि शीतलोऽमृतादपि मधुरतरः कल्पवृक्षादपि दाता जनन्या अपि स्नेहशीलः। (श्लोकः ७२) नीलाचलशिखरावस्थानकाले जगन्नाथदेवस्य मुखारविन्दं द्रष्टुमागतस्य श्रीगौराङ्गस्यालौकिकानुभावविशिष्टा देहस्फूर्त्तिरनन्याऽजायत। तदुक्तं कविना—

"क्षणं क्षीणः पीनः क्षणमहह साश्रुः क्षणमथ
क्षणं स्मेरः शीतः क्षणमनलतप्तः क्षणमपि।
क्षणं धावन् स्तब्धः क्षणमधिकजल्पन् क्षणमहो
क्षणं मूको गौरः स्फुरतु मम देहो भगवतः॥"

(श्लोकः ७६)

चैतन्यदेवस्यैतद्धि माहात्म्यं यत् प्रेमभक्तिप्रदानविषये तस्य पात्रापात्रादिविचारः स्वपरेक्षण कालाकालप्रतीक्षणञ्च नासीत्। परन्तु पापीयानपि हीनजातिरपि दुःशीलोऽपि दुर्वासनायुक्तोऽपि तत्कृपयोद्धृतोऽभूत्। (श्लोकः ७८)। 'चैतन्योत्कर्षता'—विभागे रूपगुणमाधुर्यौदार्यादिभिश्चैतन्यस्यावतारोत्कर्षत्वं वर्णितम्। सौन्दर्याह्लादनाद्याधिक्यं वर्णयन् व्यतिरेकविशेषोक्त्यलङ्काराभ्यां तस्य सर्वोत्कर्षता निरूपिता यथा—

सौन्दर्य्ये कामकोटिः सकलजनसमाह्लादने चन्द्रकोटि-
र्वात्सल्ये मातृकोटिस्त्रिदशविटपिना कोटिरौदार्य्यसारे।
गाम्भीर्य्येऽम्भोधिकोटिर्मधुरिमणि सुधाक्षीरमाध्वीककोटि-
र्गौरो देवः स जीयात् प्रणयरसपदे दर्शिताश्चर्य्यकोटिः।"

(श्लोकः १०१)

क्वचित् प्रेमरसपरिपूर्णो नवद्वीपदीप्यत्प्रदीपोऽयं शचीनन्दनो राधिकाभावेन मग्नः सन् पाण्डुगण्डस्थलं नेत्रवारिणा सिञ्चन् दीर्घनिश्वासं मुहुर्मुहुर्मुञ्चन्नुच्चैरतिकरुणं क्रन्दंश्च 'हा कृष्ण हा कृष्ण' इति रवेण विरहार्त्तियुक्त आसीत्, क्वचिच्च राधाकृष्णमिलिततनुरपि स गोपालकैशोरलीलां प्रकटयामास। श्रीकृष्णस्य बाल्यपौगण्डकैशोरप्रभृतिलीलानामनुकरणैर्गौरचन्द्रः सर्वेषां विस्मयोद्रेकमकरोत्। तदुक्तम्—

"क्वचित् कृष्णावेशान्नटति बहुभङ्गीमभिनयन्
क्वचिद्राधाविष्टो हरिहरिहरीत्यार्त्तिरुदितः।
क्वचिद्रिङ्गन् बालः क्वचिदपि च गोपालचरितो
जगद्गौरो विस्मापयति बहुगम्भीरमहिमा॥" (श्लोकः १२८)

अद्भुतकृष्णप्रेमप्रचारकत्वं परममाधुर्य्यशीलराधिकास्वरूपज्ञापकत्वञ्च चैतन्यस्यैव महिमा यतस्तस्य प्राकट्यं विना प्रेमादीनां प्रकाशनाद्यसम्भवं स्यात्। (श्लोकः १३०)। चैतन्यशरीरे महाभावजनितानुभावोल्लासं दर्शयता कविनोक्तम्—

"क्षणं हसति रोदिति क्षणमथ क्षणं मूर्च्छति
क्षणं लुठति धावति क्षणमथ क्षणं नृत्यति।
क्षणं श्वसिति मुञ्चति क्षणमुदारहाहारुतिं
महाप्रणयसीधुना विहरतीह गौरो हरिः॥" (श्लोकः १३४)

एतदनन्तरं नीलाचलसमुद्रतीरे उपविष्टो वामपाणितले कपोलमर्पयन् रक्तवसनं दधानः श्रीराधिकाचिन्तापरायणो गौराङ्गदेवः सुनिपुणमालिखितः। (श्लोकः १३५)। ततो लवणजलधितटस्थपुष्पोद्याने तस्योल्लासनृत्यं वर्णितम्। (श्लोकः १३६)। वर्णनयाऽनयैतदनुमीयते यत् पुरुषोत्तमक्षेत्रे श्रीचैतन्यलीलाया दर्शनसौभाग्यं कवेर्बहुशोऽजायत।

चैतन्यमहाप्रभुणा प्रचारिता प्रेमभक्तिस्तस्यान्तर्धानात् परमेव क्षीणत्वं विकृतत्वञ्च प्राप्तेत्यर्थं 'शोचक'विभागे प्रबोधानन्देन दुःखनिवेदनं कृतम्। तत्रैकः श्लोकः—

"सैवेयं भुवि धन्यगौड़नगरी वेलापि सैवाम्बुधेः
सोऽयं श्रीपुरुषोत्तमो मधुपतेस्तान्येव नामानि तु।
नो कुत्रापि निरीक्ष्यते हरि हरि प्रेमोत्सवस्तादृशो
हा चैतन्य कृपानिधान तव किं वीक्षे पुनर्वैभवम्।।"

(श्लोकः १४०)

विभागेऽस्मिन् ग्रन्थकर्त्तुः शोकबाहुल्यं प्रमाणीकरोति यच्चैतन्यदेवस्य तिरोभावात् परमेव ग्रन्थोऽयं विरचितोऽभवत्।

श्रीचैतन्यमाहात्म्यसूचके काव्येऽस्मिन् श्रीकृष्णचैतन्ययोरभिन्नत्वं यद्यपि प्रतिपादितं कविना, तथापि श्रीकृष्णोपासनया गौरोपासना हि गरीयसीति ग्रन्थस्य सर्वत्रैव सुस्पष्टरूपेण घोषितम्। तथा च मुरारिभक्तमाक्षिपता गौरभजनस्य श्रेयस्त्वमुक्तम्—

"श्रवणमननसंकीर्त्त्यादिभक्त्या मुरारे-
र्यदि परमपुमर्थं साधयेत् कोऽपि भद्रम्।
मम तु परमपारप्रेमपीयूषसिन्धोः
किमपि रसरहस्यं गौरधाम्नो नमस्यम्।।" (श्लोकः ५८)

अन्यत्रापि (श्लोकाः ८२-८४) गौरार्चनायाः सर्वश्रेष्ठत्वं सुदृढ़ं प्रतिष्ठापितम्। अयमेव गौरपारम्यवादः। द्वात्रिंशदधिकशततमे श्लोके गौरनागरवरस्य ध्यानं वर्णितम्। एकचत्वारिंशदधिकशततमे श्लोके गौरचन्द्रः पूर्णावतारत्वेन कीर्त्तितो न तु मीनादिवदंशावतारत्वेन। नरहरि-शिवानन्दप्रभृतयोऽपि गोरभक्ता गौरपारम्यवादस्य समर्थकाः। श्रीचैतन्य एव सर्वेश्वराणां श्रेष्ठः सर्वोपास्यानां च प्रधान इति प्रबोधानन्दप्रतिपादितं मतं नवद्वीपवासिनां गौड़ीयवैष्णवानां बहूनामेवाभिप्रेतमासीत्। किन्तु कृष्णोपासका वृन्दावनवासिनो यद्यपि श्रीचैतन्यं देवतात्वेन स्वीकृतवन्त-स्तथापि श्रीकृष्णमेव परमोपास्यरूपेण कल्पयामासुः। तस्मादेव श्रीकृष्णादपि श्रेष्ठो गौराङ्गदेव इति बहुशः प्रतिपादितं यस्मिन् ग्रन्थे तच्चैतन्यचन्द्रामृत-काव्यं न तेषां रुचिकरमासीदिति हेतोर्वृन्दावनगोस्वामिनां ग्रन्थेष्वेतद्-ग्रन्थस्योल्लेखो नास्तीति मन्ये।

—०—

# आहारशुद्धौ सत्त्वशुद्धिः
# सत्त्वशुद्धौ ध्रुवा स्मृतिः

[ निबन्धकः—श्रीविश्वेश्वर काव्यव्याकरणस्मृतितीर्थः ]

शुद्धाहारस्य जनस्य मनसः शुद्धिर्भवति। स्वच्छदर्पणवत् निर्मले मनसि आत्मा प्रकाशते। आह्रियते इति आहारः। भोजनार्थं भोगार्थं वा यो विषय आह्रियते स विषय एव आहार इत्यर्थः। कर्णेन शब्द आह्रियते। त्वचा स्पर्श आह्रियते। चक्षुषा रूपमाह्रियते। जिह्वया रस आह्रियते। गन्धश्च नसा आह्रियते। एते शब्दस्पर्शरूपरसगन्धा विषयाः। एते विषया गुणनाम्नाभिधीयन्ते च। तद् यथा शब्दगुणम् आकाशम्। स्पर्शगुणो वायुः, रूपगुणं तेजः, रसगुणा आपः, गन्धगुणा च पृथ्वी। एते आकाशादि-पदार्थाः शुद्धपदार्थसम्बन्धात् शुद्धा अशुद्धपदार्थसम्बन्धाच्च अशुद्धा भवन्ति। तथाहि सूक्ष्माणि आकाशादिभूतानि शुद्धान्येव। अथ पञ्चीकरणेनैतानि स्थूलानि भूत्वा शुद्धपदार्थसंयोगात् शुद्धानि अशुद्धपदार्थ-संयोगादशुद्धानि भवन्ति। पृथिवी चन्दनादिसंसर्गात् शुद्धा, मलादिसंसर्गाद-शुद्धा। एवमेवान्यान्यपि भूतानि बोद्धव्यानि। पञ्चीकरणप्रकारो यथा—भागद्वयैकभाग आकाशस्य अष्टभागैकभागो वायोरष्टभागैकभागस्तेजसः, अष्टभागैकभागोऽपाम्, अष्टभागैकभागः पृथिव्याश्च। एवं स्थूलमाकाश-मुत्पद्यते। एवमेवान्यानि भूतानि बोद्धव्यानि।

शब्दाद्याहाराणां शुद्धौ मनः शुद्धं भवति। दृश्यते च उपासनाकाले धूपादिसुगन्धेन सुखासनोपवेशनेन सुरूपदर्शनेन वेदपाठादि-सुशब्देन गङ्गाजलाद्याचमनेन च मनः प्रसन्नं भवति। अहं शुद्धमना एवं भावोऽपि

जायते, किन्तु पुनस्तदैव दुर्गन्धादिना मनःप्रसादो न तिष्ठति चित्तैकाग्रता च कथमपि न भवति। एवं भोजनकाले सुखाद्यभोजनेन सुकथादि-श्रवणादिना च मनःप्रसादो भवति भुक्तद्रव्यञ्च स्वल्पेनैव कालेन परिपाकं याति, तदैव पुनः कुखाद्यग्रहणेन कुकथाश्रवणादिना च मनो विरक्तं भवति, एवमेवान्यस्मिन् कर्म्मणि बोद्धव्यम्। अयमाहारः कस्येति जिज्ञासायामवश्य-मेव वक्तव्यम्—अयमाहारो मनसो न तु जीवस्य इति। इन्द्रियसहायतया मनो विषयानाहरति जीवे तु भानम्।

यद्यपि रामः कार्य्यं करोतीति लौकिकं सत्यम्, वस्तुतस्तु रामस्य मनः कार्यं करोति। रामो जीवः। जीवपरमात्मनोरभेद इति वेदान्ते प्रतिज्ञायते। भूतेन्द्रियसंयुक्तं चैतन्यं जीवः। बुद्धिदर्पणे प्रतिविम्बितं चैतन्यं वा जीवः। यद्यपि परमात्मनः शुद्धबुद्धनित्यस्वभावस्य क्रिया नास्ति, तथापि सकामोपासकादीनां संसारिणां स सर्व्वकर्मा सर्व्वकामः सर्व्वगन्ध इत्यादि-विशेषणैर्विशेषितः क्रियावांश्च। जीवोपाधिकः स प्रयोज्य उपासको निरुपाधिकश्च स प्रयोजक उपास्यः। तावत् परमात्मनो जीवभावो यावद् बुद्धिः सक्रिया तिष्ठति। परमात्मैव संसारिरूपेणाप्युपदिश्यते। नहि परमात्मनोऽन्यो जीवः।

नवद्वारे पुरे देही हंसो लेलायते बहिः।
वशी सर्व्वस्य लोकस्य स्थावरस्य चरस्य च॥

इति श्वेताश्वतरः। ३।१८

स्थावरस्य चरस्य च सर्व्वलोकस्य वशी (प्रभुः) हंसः (अविद्यादि-हननकारी) परमात्मा देही (प्राप्तजीवभावः) सन् नवद्वारे पुरे बहिः (बाह्यविषयग्रहणार्थम्) लेलायते (सचेष्टो भवति)।

मनोबुद्धिचित्ताहङ्काररूपाश्चतस्रो मनोवृत्तयः। परमात्मा जीवभाव-मापन्नः संसारी सन् विषयानुपसेवते इत्युपदिश्यते। लोकोक्तिस्तु—जीवो

विषयानुपसेवते सुखायते दुःखायते च। वस्तुतस्तु विषयोपसेवा मनस एव। जीवे तस्या भानम्। तथाहि प्रज्ञो जीवो देहवानपि देहहीनः।

"अशरीरं वाव शरीरेष्वनवस्थं।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥"

अज्ञानावस्थायां स्वर्णकुण्डले लब्धे जीवः सुखायते नष्टे दुःखायते च। अत्र प्राप्तिबुद्धिः क्षतिबुद्धिश्च जीवस्य सुखदुःखकारणम। अज्ञाने तिरोहिते निष्कामः स एव स्वर्णकुण्डलं प्राप्यापि न सुखायते हारितस्वर्णकुण्डलोऽपि न दुःखायते च। एतेनैव बुध्यते बुद्धिर्यत्र सक्रिया तत्रैव सुखदुःखे। अतएव जीवोऽपि परमात्मेव सुखदुःखहीनः। बन्धमोक्षकारणस्य मनस एवाहारो न जीवस्य। आत्मा ह्रासवृद्धिहीनः। अप्राप्ताहारो देहः क्षीणतां याति प्राप्ताहारस्तु वर्द्धते, अयमाहारः सर्व्वेषां न समानः। सत्त्वरजस्तमःप्रधानानां जीवानाम् आहारा अपि यथाक्रमं सात्त्विका राजसास्तामसाश्च भवन्ति। तत्र सत्त्वप्रधानस्य आहारशुद्धिरपि यथा स्वल्पायासेन भवति, न तथा रजःप्रधानस्य तमःप्रधानस्य वा। तथाहि जीवस्य कर्मानुसारेण यथा जीव उत्तमप्रकृतिर्मध्यमप्रकृतिरधमप्रकृतिर्वा भवति, तथैव जन्मादीन्यपि उत्तमानि मध्यमान्यधमानि च भवन्ति। अत्र कैश्चिदुच्यते शुक्रार्त्तवस्थैर्विषयैर्विषेणेव विषक्रिमेरित्यादि। जीवस्य कर्मानुसारेण गर्भाधानकाले शुक्रार्त्तवस्थेन प्रबलेन वायुना जीव उत्तमप्रकृतिः प्रबलपित्तेन मध्यमप्रकृतिस्तथा प्रबलकफेनाधमप्रकृतिश्च भवति। भोग्यभोज्या आहारा अपि प्रकृत्या गुणेन च सम्बन्धिनो जीवस्य यथाक्रमं सात्त्विका राजसास्तामसाश्च भवन्ति, यथा सत्त्वप्रधानाय जनाय सात्त्विका आहारा एव रोचन्ते तथैव रजःप्रधानाय राजसास्तमःप्रधानाय तामसाश्च।

सत्त्वप्रधानाय—आयुःसत्त्वबलारोग्य-सुखप्रीति-विवर्द्धनाः
रस्याः स्निग्धास्तथा हृद्या आहाराः सात्त्विका मताः॥

रजःप्रधानाय—कट्वम्ललवणात्युष्ण-तीक्ष्णरुक्षविदाहिनो
दुःखशोकामयप्रदा आहारा मताः।

तमःप्रधानाय—यातयामं गतरसं पूति पर्य्यूषितञ्च उच्छिष्टममेध्यञ्च खाद्यम्। सात्त्विकाहारिणो जनस्य अल्पायासेन नित्यानित्यवस्तुसमूहा आहारा मताः। एवं वस्तुविवेकादय आयत्ता भवेयुर्मनसः शुद्धिश्च भवेत्। शुद्धे मनसि तत्त्वज्ञानोपदेशः सार्थको भवेत्।

## जिज्ञासा

पत्युर्वक्षःस्थले दत्त्वा पदद्वन्द्वं कथं कदा।
जननी कालिका जिह्वां दशनैरदशन्निजैः?
शिष्टाचारविरुद्धेन निन्दनीयेन कर्मणा।
कथं सा निन्दिता नाभूत्? पूज्याभूत् सततं जनैः?

# ललन्तिकाः

[ निबन्धकः—डाः वीरेन्द्रकुमार भट्टाचार्यः, काव्यकोविदः ]

पुण्यार्थिनो वयं बंगवासिनो गुरुकृपालिप्सव—
स्तस्याशिषं विना तीर्यते कथं जगति दुःखार्णवः ।
धृता तत्करेण त्रिदिवस्य कुंचिका
कृता तद्वरेण क्षितिरिष्टमंचिका ;
अस्माभिराप्यते तत्कृपार्चिषा परमतृप्तेर्लवः ॥ १ ॥

ज्ञातमस्माभिर्जृम्भणतत्त्वं गृहगोधिकायाश्चेंगितं
हस्तरेखाभ्यो दृष्टमदृष्टं किमु काकलादाकर्णितम् ।
राशिचक्रं न मन्यते कौमारक्रीडनं
मारणोच्चाटनादि न स्तोकेनास्फालनम् ;
प्राच्यसूरीणां प्रेक्ष्य हि शक्तिं जगदद्य नूनं विस्मितम् ॥ २ ॥

वह्निपुच्छयानं समारुह्य यान्ति मार्किणा ग्रहान्तरं
तत् किमत्र चित्रं पुरा भारतैर्हि सृष्टमद्भुतान्तरम् ।
दाशरथिश्रितं राजराजपुष्पकं
नारदवाहनं दारुयन्त्रघोटकं
शस्त्रमग्निगर्भं च ते शब्दभेदि निर्ममुः खभान्तरम् ॥ ३ ॥

# मेघदूतपञ्चकम्*

[ निबन्धक—श्रीरवीन्द्रकुमार सिद्धान्तशास्त्री पञ्चतीर्थः ]

आषाढ़स्य प्रथमदिवसे मन्मथोद्भिन्नचेता
दृष्ट्वा मेघं गगनविवरे कालिदासस्य यक्षः।
स्मृत्वा जायां विरहविधुरां मूढ़वान्निर्व्विचारो
दौत्ये कार्य्ये सहृदयमिव क्रान्तबुद्धिर्न्ययुङ्क्त ॥ १ ॥

अन्ये त्वाहु "र्न हि न हि तथा, वारिदस्तेन दृष्टः
शृङ्गस्योर्द्ध्वे व्यथितमनसा राजराजेन तूर्णम्।
आषाढ़स्य प्रशमदिवसे वात्यया नीयमानो
यस्मिन् दौत्यं द्रुतगतिवशात् स्थापयामास कामी" ॥ २ ॥

शापोत्सर्गो भवति नितरां दुःखदुःखाय लोके
तस्माज्जाता सुकविरचना स्यात् सदानन्दहेतुः।
प्राणध्वंसे विदितमहिमा तीव्रहालाहलोऽयं
व्याधिग्रस्तैरुदरनिहितो याति नित्यं सुधात्वम् ॥ ३ ॥

कृत्वा पापं धनदपतिना दण्डितो राजराजो
हित्वा पत्नीं गिरिशिखरगः प्रेमवृद्धिं विलेभे।
पार्श्वस्था चेद्‌ भवति भुवने प्रेयसी दृष्टदोषा
स्थित्वा दूरे सुचिरसमयं सैव सर्व्वेश्वरी स्यात् ॥ ४ ॥

सुकविवचनसंस्थो दिव्यभावं प्रयातो
विरहिधनदयूनश्चित्तविप्लावकोऽसौ।
विगतनिखिलदोषः प्रेमरूपो रसात्मा
जयतु जयतु नित्यं स्वादितः साधुवृन्दैः ॥ ५ ॥

---

* १३८० बङ्गाब्दीय-सौराषाढ़स्य प्रथमदिवसे संस्कृतसाहित्यपरिषदायोजिते मेघदूतोत्सवे पठितम्।

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्

| Vol. LVI<br>Nos. 7-8 | १८९५ शकीययोः कार्त्तिकमार्गशीर्षयोः, १३८० वङ्गाब्दीययोः ५६ तम-वर्षस्य ७म—८म-संख्ये | November<br>& Dec.<br>1973 |
|---|---|---|

## कालीपदतर्काचार्यस्मृतिः

## आचार्य्यवर्य्य-महाप्रयाणे

## परिदेवनम्

[ निबन्धकः—अन्तेवास्यधमः श्रीरामधनशास्त्री ]

मात.[illegible]ालनं तवाननमिदं संदृश्यते भारति,
पूर्णं नेत्रयुगं कथञ्च समभूदुष्णाश्रुभिः साम्प्रतम् ।
किं ते जातमिहातिवैशसमुरस्ताड़ं कथं क्रन्दसि
दुर्दैवेन विड़म्बिताहमिति मां स्वप्नेऽवदन्मातृका ॥१॥

गीर्वाणवाणीरसपानपुष्टं
यस्यास्यमासीद् विदुषामभीष्टम् ।
सोऽयं विपश्चिद्गगनाद् गतोऽस्तं
चन्द्रश्चिरात् सर्वजगत्तमोहा ॥२॥

तर्काचार्य्यवरः सदर्थचतुरः सश्रीकविद्याधर
आसीद् यो महितः समस्तविदुषां विद्याविधौतान्तरः ।
कालाकालविचारणापटुरसौ कालः स्वयं निर्घृणो
लोकान्मर्त्तगतादमुं समनयल्लोकान्तरं स्वार्जितम् ॥३॥

हाहाकारः सर्वदेशानवाप्तः
सर्वो लोकः शोकसिन्धौ निमग्नः ।
देशे देशे चाश्रु वर्षन्ति सर्वे
नष्टं रत्नं भारतं वेत्थमुक्त्वा ॥४॥

नष्टः स्वापश्चक्षुरुन्मील्य यावद्
दृष्टं विश्वं नीरवं शोकविद्धम् ।
आस्यं हास्यैर्वर्जित मे तदाभूत्
काले तस्मिन् संविमूढोऽवदञ्च ।।५।।

यस्य स्नेहरसान् निपीय नियतं पुष्टिं गतो हे गुरो,
विद्यालाभविधावपारकरुणां लब्ध्वा कृतार्थश्च ते ।
स त्वं मां परिवञ्च्य तूर्णमगमो लोकान्तरं पावनं
हा हा मे हृदयं विदीर्णमथवा नित्या गतिरीदृशी ।।६।।

सदाचारपूतः स्वधर्मप्रतिष्ठः
सदा सत्यवादी सदा शास्त्रनिष्ठः ।
सदालापपुष्टः प्रियालोकतुष्टः
कदाचिज्जगत्यां त्वदन्यो न दृष्टः ।।७।।

ऋषेस्तुल्यमूल्यो भुवि त्वममूल्यः
सदा शास्त्रवाक्यं विना नैव वाक्यम् ।
पवित्रे तवास्ये पदं व्याकरोद् यत्
कदाचिज्जगत्यां त्वदन्यो न दृष्टः ।।८।।

त्वमासोर्वरेण्यः शरण्यो जनाना-
मलङ्कारभूतो विपश्चित्तमानाम् ।
तथापीह नीचः सुशिक्षादिजुष्टः
कदाचिज्जगत्यां त्वदन्यो न दृष्टः ।।९।।

अमित्रस्तवासीज् जगत्यां न कोऽपि
समस्तं जगत्तेऽभवन्मित्रमेव ।
समस्नेहधाराविधाने वरिष्ठः
कदाचिज्जगत्यां त्वदन्यो न दृष्टः ।।१०।।

सांख्ये त्वं कपिलायितः पुनरभून्न्याये स्वयं गोतमो
योगे योग्यतमः पतञ्जलिरभूः को वात्र ते सन्निभः ।
वेदान्तोपनिषच्चयेषु नितरां शङ्काहरः शङ्करः
काव्ये कोमलतां गतः पुनरिह त्वं कालिदासायितः ।।११।।

पीयूषाकररूपतामधिगता त्वल्लेखनीसन्तति-
र्लोकान् शास्त्ररसं प्रभूतमिह यत् सम्यक्तयापाययत् ।
त्वच्छोकाम्बुधिसंनिमज्जनपरास्त्वत्कीर्त्तिभूता अमू-
र्लेखन्यः सततं तवैव विरहात् क्रन्दन्ति, ता लोकय ॥१२॥
पीत्वा स्वर्गसुधारसं सुरगणैः सार्धं सदा सङ्गतो
हित्वा प्रेष्ठजनान् तवातिवशगान् स्वर्गे कथं तिष्ठसि ?
मन्ये त्वां परिवेष्ट्य देवनिवहाः स्तोत्रादिभिस्तावकै-
श्चित्तादात्मजनान् दविष्ठसरणिं संनीतवन्तो ध्रुवम् ॥१३॥
त्वमिह सततमस्थाः पण्डितैर्वन्द्यमानः
सुरगुरुरिव देवैर्वन्दितः पूजितश्च ।
कथय कथमिदानीं वर्त्तसे स्वर्गलोके
सहसुखमसुखं वा दैवतैर्वन्दितो वा ॥१४॥
प्रतिदिनमतियातं न्यायवेदादिशिक्षा-
वितरणविधिनान्तेवासितां यस्य पूर्वम् ।
कथय कथमिदानीं स्वर्गलोकं गतस्य
तव दिनमतियायात् शिष्यवर्गैर्विना वा ॥१५॥
अपि वितरसि विद्याः स्वर्गलोके स्थितस्त्व
कति तव ननु शिष्यास्तत्र जाताः सुयोग्याः ।
जगति यति तवासन् शिष्यकाः सिद्धिमन्तो
न हि खलु परलोके ते तथा सन्ति मन्ये ॥१६॥
यशःसौरभन्ते चतुर्दिक्षु गच्छत्
स्वदेशं विदेशं चकारोज्ज्वलं यत् ।
पिता तेऽतिधन्यः सुधन्या च माता
कुलं कीर्तिमत्ते कुलस्थास्तथैव ॥१७॥
पूज्ये सपर्य्या विहिता यदि स्यात्
तदैव पूजा सफलत्वमेति ।
बुद्ध्वानया भारतराष्ट्रकर्त्ता
पूजां प्रशस्तां भवतश्चकार ॥१८॥

इत्थं त्वयाप्ताः कति वा सपर्य्या
नाम्नापि तासां कथनं सुदुष्करम् ।
यतोऽसि विद्वत्कुलचन्द्रकस्त्वं
तस्मात्तवेयं विपुला प्रशस्तिः ॥१९॥
स्वदेशे विदेशे तवासंख्यशिष्याः
सुशिक्षां गृहीत्वा प्रसिद्धिं गता हि ।
वयं धन्यधन्यास्तवैव प्रसादाद्
यतः प्राप्तवन्तः सुविद्यासु शिक्षाम् ॥२०॥
प्रदेयं किमास्ते ददामीह किं ते
विना भक्तिमत्तां धनं मेऽस्ति किं वा ।
गुरो तद् गृहीत्वा कुरुष्वाशिषञ्च
तवैवाङ्घ्रियुग्मे मतिर्मे सदास्ताम् ॥२१॥

—०—

पण्डित-प्रवर-स्वर्गत-डः कालीपद तर्काचार्य्यमहोदयचरणे

## प्रार्थनम्

[ प्रार्थयिता—अध्यापकः श्रीदीपक घोषः ]

प्रशान्तरत्नाकर-नाटयकारो
महीमहिष्ठो निखिलाभिपूज्यः ।
प्रशान्तरत्नाकर-नायकस्य
स्वर्गेऽपि गृह्णातु विनीत-पूजाम् ॥
शृणोतु च प्रार्थनमेतदेकं
प्रशान्तरत्नाकर-नायकस्य ।
सदाऽस्थिरोद्दीपकचित्तमेतु
रत्नाकरस्येव चिरं प्रशान्तिम् ॥

## महामहोपाध्याय-कालीपदतर्काचार्य्यस्य महाप्रयाणे

# श्रद्धार्घ्यम्

[ श्रीसुरेन्द्रमोहन चक्रवर्त्तिनः काव्यपुराणतीर्थस्य ]

हे वरेण्य कवे ! यत्र देवीभक्तो रमाकान्तः शिवसेवापरो हरकुमारः कथकप्रवरो महिमचन्द्रशिरोमणिश्च जन्म स्वीकृतवन्तः, तत्र नैयायिकश्रेष्ठ-हरिदास-तर्कतीर्थस्य ज्येष्ठपुत्ररूपेण जन्म परिगृह्य त्वम् अस्मत्कुलस्य, बङ्गदेशस्य किं बहुना भारतवर्षस्य च मुखमुज्ज्वलमकार्षीः। त्वदीयगौरवेण गौरववन्तोऽपि वयं विद्यया तव पदाङ्कमनुसर्त्तुमक्षमा विषादमेव परमनुभवामः।

संस्कृतभाषाया या समुन्नतिस्त्वया साधिता तयाद्य सभारतं सर्वं जगदेव सुतराम् उपकृतमित्यत्र नास्ति वचनावसरः। तवाहं समदेशीयः समग्रामीयः समवंशीयः किं बहुना समगृहीयोऽपीति स्मरन् सुतरां हृष्यामि।

जीवने कृतकृत्यस्त्वं सुपुत्रन्यस्तसर्वोत्तरभारः स्वकाले एव परलोकं प्रस्थितवानिति यद्यपि शोकावसरः स्वल्प एव, तथापि स्नेहशीलेन शुभाकाङ्क्षिणा आबाल्यसुहृदा त्वादृशेन पुंसा विरहितः शोकमसीममेव अनुभवामः। तथापि संस्तभ्य शोकाश्रु भगवन्तं तव पारत्रिकशान्तिं प्रार्थये।

—0—

# तर्काचार्य्य-जीवनालेख्यम्

[ निबन्धकः—अध्यापकः श्रीध्यानेश नारायण चक्रवर्ति-शास्त्रि-वाचस्पतिः एम्-ए ]

प्रतिभाप्रोद्भासित-दिङ्मण्डलानां विविधविद्याविद्योतितबुद्धीनां संस्कृतसदसि सारस्वतमूर्धन्यानां महामहोपाध्याय-डः कालीपद तर्काचार्याणां जीवनालेख्यम् उत्तरपुरुषाणां कृते आदर्शस्थलमुद्दीपन-

स्थलं चेति श्रद्धया आलोचनीयम्। वर्तमाने काले सुरभारती-भावगङ्गया भगीरथस्वरूपोऽयं तर्काचार्यमहोदयश्चिरमेव वन्दनीयः। बङ्गप्रदेशस्य पूर्वप्रान्ते कीटालीपाड़ामण्डले ईशवीये १८८८ अब्दे धनरिक्ते विद्या-वित्ते वशेऽयं महात्मा आविर्बभूव। तस्य जनको हरिदासतर्कतीर्थोऽप्यासीन्नैयायिकधुरन्धरो जननी सीतासुन्दरी देवी चासीत् सीतेव मनस्विनी रमणी। दार्शनिककुलललामभूतानां मधुसूदनसरस्वतीपादानां वंशे जातोऽयं महात्मा प्रदीपात् प्रवर्तितो दीप इव मे प्रतिभाति। परम्परागतविद्याधारा शैशव एव तस्य चेतसि स्थानं लब्धवती। जनक-जनन्योः शास्त्रनिष्ठा तथा शास्त्रचर्चा धर्मचर्या च कैशोरे एव तस्मिन् सार्थकतां गताः। पितुः शास्त्र-व्याख्यानेन आकृष्टस्य किशोरस्य शास्त्रानुवर्तने धर्माचरणे च मति-रजायत बाल्यादेव। प्रथमत आङ्गलविद्यालयं प्रविश्य कतिचिद्-वर्षाणि यावत् वार्षिकपरीक्षासु प्रथमं स्थानं संलभ्यापि वैदेशिकविद्यायां स तृप्तिं नालभत। सुरभारतीमन्दाकिन्याः कलध्वनिस्तस्य श्रवण-कुहरं प्रविश्य तं चञ्चलमकरोत्। संस्कृतशिक्षायाश्चिरन्तनी धारा या खलु चतुष्पाठीषु प्रवाहितासीत्, तां प्रति तस्य सुतीव्रमाकर्षणं दृष्ट्वा जनकस्तस्य तं चतुष्पाठीमेव प्रेरयामास। आयति काले यः खलु महामहोपाध्यायपदवीमलंकरिष्यति, तस्य सारस्वतसाधनायाः शुभारम्भः अधुनैव यथार्थे पथि प्रारभत। आङ्गलशिक्षायाः समुज्ज्वलं भविष्यत्, भोगसमृद्धजीवनम्, समाजे राष्ट्रे च प्रति-ष्ठादिकं तं संस्कृतमार्गाद् विचालितुं नाशक्नोत्। परिपूते भागीरथीतटे मूलाजोड़पत्तने संस्कृतमहाविद्यालये सारस्वतानां मण्डले स खलु सर्वेषु विषयेषु मूर्धन्यः सञ्जातः। विविधविद्या-विद्योतितबुद्धेस्तस्य छात्रावस्थायामेव काव्यप्रतिभा समुन्मेषिता जाता। आशुकविरूपेण छात्रसंसदि स तदैव ख्यातिमापन्नः। दार्शनिकी प्रज्ञा साहित्यिकी प्रतिभा च तस्मिन् तदैव संमील्य युक्त-वेणीत्वं गता। काव्योपाधिपरीक्षायां स हि प्रथमस्थानमधिकृत्य सर्वेषामानन्दं वर्धयामास। नवनवोन्मेषप्रतिभाया अधिकारी कालीपद-

श्छात्रावस्थायामेव पौराणिकनलराजवृत्तान्तमवलम्ब्य अभिनवं नाटकमेकं विरच्य रसिकान् सहृदयान् तोषयामास ; तस्य सतीर्थाः सर्वे तदैव तत्र नाटकमिदं सानन्दमभिनीतवन्तः। पठनकाल एव प्रायः प्रचलितासु सर्वासु संस्कृतपत्रिकासु प्रकाशितास्तस्य ललित-रसमयकाव्यनिबन्धास्तं साहित्यसंसदि गौरवासने प्रतिष्ठापयामासुः। काव्यकानने कुसुमावचयं समाप्य महामहोपाध्यायशिवचन्द्र-सार्वभौमपादानां चरणतले निषण्णः सन् स खलु सर्वशास्त्राणां प्रदीपं सर्वकर्मणामुपायं न्यायशास्त्रं पठितुमारेभे। "न खलु कश्चिद-विषयो धीमतामिति" कालिदासवचनस्य सार्थकतां प्रतिपद्यमानः स यथाकालं न्यायशास्त्रस्योपाधिपरीक्षायां प्रथमविभागे प्रथम-स्थानमधिकृत्य समुत्तीर्णः स्वर्णपदकं लब्धवान्। व्याकरणोपाधि-परीक्षायाञ्च तस्य यशः अक्षुण्णमेवासीत्। अतस्तर्काचार्य इत्युपाधिविमण्डितः सन् विदग्धगोष्ठीषु सुरगुरुरिव स विरेजे। रचनायां भाषणे च तस्यानुपमं नैपुण्यं सदैव स्मरणीयम्। सभासु तस्य उदात्तकण्ठात् निःसृता गङ्गाधारावदविछिन्ना प्रसन्नगम्भीरा वाग्धारा सर्वान् श्रोतृजनान् विमुग्धान् कृतवती। विंशशतके निखिले विश्वे संस्कृतभाषणे आसीत् स खलु अनन्य-साधारणो वाग्मी। तस्य भाषणे परिलक्षितस्तावत् लालित्येन साकं गाम्भीर्यस्य शुभसंयोगः। तस्य मेघमन्द्रः कण्ठः कदापि न विस्मर्यते। ध्वनिविवर्धकं यन्त्रं तिरस्कृत्य तस्य कण्ठध्वनिर्दूर-दूरान्तरं यावत् प्रतिध्वनति स्म। रसवती सरस्वती तस्य जिह्वायां ननर्त। तस्याशुकवित्वमपि उल्लेखनीयम्। प्राक्-प्रस्तुतिं विनैव सदैव यं कमपि विषयमवलम्ब्य भाषणदाने तस्यानन्यसाधारणी शक्तिरस्माभिरद्यापि स्मर्यते। तर्काचार्य-महोदयं विना संस्कृतविषयिणी कापि सभा पश्चिमबङ्गे अस्माभि-श्चिन्तयितुमपि न शक्यते।

निखिले विश्वे संस्कृतचर्चाया अन्यतमं तावत् प्रधानं केन्द्रं खलु कलिकाता-संस्कृत-साहित्य-परिषत्। अस्याः परिषदो

जन्मकालादारभ्य संघटकानामन्यतमरूपेण तर्कचार्यमहोदयः प्रथमतः परिषदि एव अध्यापनामारभ्य छात्रसंसदि कीर्त्तिं लब्धवान् । परिषत्-पत्रिका बहूनि वर्षाणि यावत् तस्यैव सम्पादनेन प्रकाशिता सती विदग्धान् वाचकांस्तोषयामास । तेनैव महात्मना सम्पादितेयं पत्रिका प्राच्यविद्याविषयकपत्रिकारूपेण आन्तर्जातिकख्यातिमापन्ना । जीवनान्तं यावदसौ मनस्वी परिषत्-सभापतिपदमलंचकार । परिषदो गवेषणाविभागस्यापि परि-चालने तस्य नेतृत्वमस्माभिः स्मर्यते । तेन विरहिता परिषदद्य दैन्यं गता । परिषदः सर्वेषु विभागेषु तस्य कर्मशक्तेश्चिह्नं सदैव संलक्ष्यते । हन्त, परिषदो वार्षिकोत्सवेषु तस्य कम्बुकण्ठं नातः परं श्रोष्याम इति विचिन्त्य दूयतेऽस्मद्हृदयम् । वार्धक्ये पीड़ाग्रस्ते देहेऽपि परिषत्कर्मसु तस्य नासीदुत्साहस्य अभावः । किमधिकं तस्य प्राणभूतासीदियं संस्कृत-साहित्य-परिषत् ।

परिषदि अध्यापनेन गच्छत्सु कतिचिद्वर्षेषु तस्य पाठनप्रसिद्धि-र्देशदिक्षु प्रसारिता जाता । अतः कलिकाता-राजकीय-संस्कृत-महाविद्यालये न्यायशास्त्रस्याध्यापकपदालंकरणाय पण्डितप्रकाण्डोऽयं समाहूतः । विश्वस्य विभिन्नप्रान्तेभ्यो ज्ञानार्थिनः संस्कृतमहा-विद्यालयं समागत्य कुलपतिकल्पस्यास्य पण्डितमूर्द्धन्यस्य चरणतले निषण्णाः सन्तो विद्यां लेभिरे । संस्कृतमहाविद्यालयस्य आचार्य-मालायां स मध्यमणिरिव विरराज । मार्किणदेशस्य हार्भार्डं विश्वविद्यालयस्य प्राच्यविद्याविभागाध्यक्षः सुप्रसिद्धो नैयायिको डः ईङ्गल्स् दीर्घं पन्थानमतिक्रम्य कलिकातामागत्य तर्काचार्य-महोदयस्य समीपे पुंखानुपुंखरूपेण न्यायशास्त्रमधीतवान् । परमहर्षेणाधिगतविद्यः सन् स्वदेशं प्रतीच्यं प्रतिगम्य न्यायशास्त्र-मवलम्ब्य विशालं ग्रन्थमेकं स महात्मा रचितवान् । ग्रन्थे तस्मिन् भूमिकायां डः ईङ्गल्स् यल्लिखितवांस्तदेवास्माभिः स्मर्यते—"तर्काचार्यः खलु विशालो ज्ञानोदधिः । समग्रजीवनं तस्य चरणतले निषण्णेन मया यदि पाठाभ्यासः कर्त्तुं शक्येत, तदाऽहं

सुखी अभविष्यम् । 'कतिवर्षैः स्वल्पं यत्किञ्चित्तस्मादाहृतं मया, तदेव ग्रन्थेऽस्मिन् प्रकाश्यते । तत्सविधे ऋणं मे अपरिशोध्यम् ।" इङ्गराज-शासिते भारते श्रेष्ठाः पण्डितवर्याः 'महामहोपाध्याय' इत्युपाधिना सर्वकारेणाभिनन्दिता जाता । तर्काचार्यमहोदयोऽपि पण्डितवरिष्ठरूपेण महामहोपाध्याय इत्युपाधिना सर्वकारेण भूषितोऽभवत् । श्रीशृङ्गेरीमठाधीशः श्रीश्रीजगद्गुरुशङ्कराचार्यस्तं 'तर्कालङ्कार' इत्युपाधिना सुवर्णपदकेन च भूषितवान् । वाराणसी-भारत-धर्म-महामण्डलकर्तृपक्षीयैः 'विद्यावारिधी'त्युपाधिना विभूषितो जातस्तर्काचार्यमहोदयः । संस्कृत-साहित्य-समाजात् 'महाकवी'त्युपाधिमपि स लेभे । स्वाधीनभारतस्य महामान्यो राष्ट्रपति-महोदयोऽपि सम्मानपत्रदानेन त्रिसहस्रमुद्रा-परिमित-वार्षिकवृत्त्यनुदानेन च तं सम्मानितं कृतवान् । वर्धमानविश्वविद्यालयतः सम्मानात्मक-डि-लिट्-इत्युपाधिना स खलु विभूषितो जातः । वाराणसेयहिन्दुविश्वविद्यालयेन, वाराणसेयसंस्कृतविश्व-विद्यालयेन, एशियाटिक-सोसाइटीति प्राच्यविद्यागवेषणा-संस्थया, हुगली-संस्कृतपरिषदा, कलिकातासंस्कृतसाहित्यपरिषदा, अखिल-भारत-प्राच्यविद्यासम्मेलनेन च विशेषानुष्ठानद्वारेणैव संवर्धितस्तर्काचार्यमहोदयः सारस्वतसदसि मूर्धन्यीभूतः सञ्जातः ।

कलिकाताकाशवाणीतस्तद्रचितनाटकानां सफलाभिनयो बहुशः सम्प्रचारितः । इदानीन्तने काले प्राचीनभारतीयशास्त्राणां प्रचारे अवतारकल्प-महापुरुषेण श्रीश्री सीतारामदास-ओङ्कारनाथमहाभागेन यः खलु प्रकल्पः परिचाल्यते, तत्र 'सनातन-शास्त्रम्' इति ग्रन्थ-पत्रिकायाः प्रधानसम्पादकपदे वृतस्तर्काचार्यमहोदयः शास्त्रधारा-प्रवाहणे नव-भगीरथरूपेणास्माभिर्वन्द्यते । 'आर्यशास्त्रस्य', 'प्रणव-पारिजातस्य' च सम्पादने प्रधानः पुरुषः खल्वासीत् स च विद्वद्वरिष्ठः ।

न केवलं तस्य रसनायां देवी सरस्वती ननर्त, अपि तु तस्य लेखनीमुखेऽपि देवी भारती नवनवभूमिकामाश्रित्य लीलां कृतवती ।

भूरिशो दर्शनग्रन्थास्तेन विरचिताः। तेषां केचित्तु—(१) जाति-वाधकविचारः, (२) न्यायपरिभाषा, (३) प्रवचनत्रयी, (४) मुक्तिदीपिका, (५) मुक्तिलक्ष्मीः, (६) रत्नलक्ष्मीः, (७) भाष्यप्रभा, (८) सारप्रभा, (९) सारदीपिका, (१०) सुप्रभा, (११) सूक्तिदीपिका।

काव्ये कोमलधीस्तर्काचार्यः साहित्यसदसि सम्राड़िव विरराज। खण्डकाव्य-महाकाव्य-गीतिकाव्य-दृश्यकाव्यरचनायाम् अप्रतिद्वन्द्वी स हि रसिकान् सुतरां तोषयति स्म। संस्कृतकाव्ये अभिनवच्छन्दःप्रवर्तने स हि पथिकृत्। कविसार्वभौमस्य रवीन्द्रनाथस्य कविताया नवीन-च्छन्दसा 'गीताञ्जलिप्रतिच्छाया' इति नाम्ना अनवद्य-संस्कृतभाषायामनुवादसाहित्यं स समृद्धं कृतवान्। रम्यवाणी-चक्रवर्तिनस्तस्य साहित्यग्रन्थानां नामानि उल्लिख्यन्ते—

(१) काव्यचिन्ता, (२) स्यमन्तकोद्धारः, (३) नल-दमयन्तीम्, (४) प्रशान्तरत्नाकरम्, (६) मानवकगौरवम्, (७) सत्यानुभावम्, (८) योगिभक्तचरितम्, (९) महा-नाटकटीका, (१०) विष्णुप्रभा, (११) गीताप्रतिच्छाया, (१२) श्रीश्रीचण्डीप्रतिच्छाया, (१२) आलोकतिमिरवैरम्, (१४) गीताञ्जलिः, (१५) मन्द्राक्रान्तावृत्तम्। कलिकाता-राजकीयसंस्कृतमहाविद्यालये आङ्गलविभागे आचार्यवर्यस्यास्य चरणतले उपनिषण्णः सन्नहं काव्यादर्शं पठितवान्। तस्य पाठन-नैपुण्येन अभिनवं सौन्दर्यमस्माकं मनोलोके समुद्भासितं जातम्। संस्कृताभिनयेऽपि तेनैव महात्मना वयं शिक्षिताः। संस्कृते भाषण-प्रदानमपि तच्छकाशादेव अहं शिक्षितवान्। तस्य भाषणं विना संस्कृतमहाविद्यालये कापि सभा आसीत्तदा अचला। तस्य सुगभीरं पाण्डित्यम्, असीमं प्रेम, महती शिष्यकल्याणैषणा, सुमधुरं चारित्रं प्राचीनवेदविद्याभूयिष्ठान् आचार्य्यानेव स्मारयति। कदापि तस्मिन् कोपः क्षोभो विषादश्च न दृष्टाः। गीतोक्त-स्थितप्रज्ञ-योगिवत् स संसारे विचचार। वयसो ज्ञानस्य च वार्धक्येन साकं

धर्मस्य च वार्धक्यं तस्मिन् परिलक्षितम् । श्रीमद्भगवद्गीतायां यद्भगवता श्रीकृष्णेन वर्णितम्—

"दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥" इति

मूर्तविग्रहो मुनिः खल्वासीदसौ महात्मा । अध्यात्मसाधनार्थमेव अवतारपुरुषेण श्रीश्रीसीतारामदास-ओङ्कारनाथमहोदयेन सह तस्य महती प्रीतिर्जाता । अध्यात्मगगनेऽपि मुक्तपक्षो विहङ्ग इव स सुदूरम् उदडयत् । अधन्यस्य मम सारस्वतजीवनविकाशेऽस्य आचार्यवर्यस्य समुत्साहः, प्रेरणा, सहायता च सदैव श्रद्धया स्मर्यन्ते । तस्य दिव्यप्रेम्णा अभिषिक्तोऽहं धन्यो जातः । शताधिकासु संस्कृतसभासु मयैव स महात्मा नीतः । हुगलीसंस्कृतपरिषदि समनुष्ठिते पश्चिमबङ्गसंस्कृतमहासम्मेलने मम पितृदेव—श्रीयुक्त विश्वेश्वर विद्याभूषणरचितं मानपत्रं तमुद्दिस्य अहमेव वाचितवान् । तस्य 'स्यमन्तकोद्धार' व्यायोगे तस्यैव आशिषा अहं श्रीकृष्णस्य भूमिकायाम् अभिनयं कृत्वा साफल्यं लब्धवान् । स एवासीदस्माकमालोकस्तम्भः । ईशवीय १९७२ तमाब्दस्य जुलाईमासीयसप्तविंशे दिवसे रात्रौ अष्टमघटिकायाअसौ महात्मा संसारलीलां समाप्य दिवं गतः । तस्यादर्शः सर्वानस्मान् बुद्ध्या शुभया संयुनक्तु ।

तर्काचार्यो महाप्राज्ञो बृहस्पतिसमो गुरुः ।
दीप्यतां मानसे नित्यं दिव्यधामगतः सुधीः ॥

—०—

## ॥ पातु नः स्वर्गलोकात् ॥

[ निबन्धकः—श्रीइन्द्रमोहन चक्रवर्त्ती ]

वाणी यस्य प्रकृतिमधुरा सावलीला सुरम्या,
नानाविद्याजलधितरणे यश्च नित्यं समर्थः ।
सुष्ठु स्नातः प्रतिदिनमहो ! देवभाषासमुद्रे,
प्रौढ़ः प्राज्ञः सकलविषये तीक्ष्णबुद्धिप्रदीप्तः ॥
लब्ध्वा चेष्टं विमलयशसः शृङ्गमारुह्य तुङ्गं
बन्धून् सर्वान् प्रकृतिजगुणैरात्मवन्मन्यते स्म ।
सोऽयं कालीपद उरुनटस्तर्कशास्त्रे प्रवीण
आशीर्वाण्या परमशुभया पातु नः स्वर्गलोकात् ॥

—०—

## परमपूज्यपाद-तर्काचार्यश्रीचरणयोः प्रसूनाञ्जलिः

[ निबन्धकः—श्रीदीननाथ त्रिपाठी नवतीर्थः, महाचार्यः ]

भो भो विद्वन्मूर्धन्याः संस्कृतरसिकाः शास्त्रसाराः ! श्रुतमेव निश्चिततया भवद्भिरस्माकं संस्कृतप्राणप्रतिमा भारतगौरवदिनमणयः सर्वशास्त्रपारंगताः सुप्रथितमहिमानो महामहोपाध्यायतर्काचार्यादिविरुदलाञ्छिताः कालीपदाभिधानाः अन्वर्थनामानः पण्डितचूड़ामणयोऽस्ताचलशिखरावलम्बिनः सम्प्रति आसन्निति । यद्यपि ते खलु स्वसाधनप्रकर्षयोग्यमूर्ध्वलोकं दिव्यधाम समारूढ़ास्तथापि आधिभौतिकपञ्चभूतमयशरीरेणेदानीमस्मदिन्द्रियागोचरतया अस्माकं शोच्या इव प्रतिभान्ति । न खलवधुना तन्मूर्तिः स्थूला कैलासगुरुहास्यविर्मण्डिता प्रसन्नवदना दिव्यकान्तिः सर्वाश्वासभूता उपलभ्यते इत्यतीव दुर्दैवमस्माभिरनुभूयते इत्यत्र नास्ति विचिकित्सावसरः । येषां जन्मनैव गीर्वाणवाणी सर्वतःसमुल्लसन्ती आत्मानं

श्लाघयन्ती सुतजन्मना जननीवानन्दितासीत् सहसा तददर्शनेनाधुना मूर्च्छासम्मूढ़ा अविद्यमानेव जाता। यानाश्रित्य विशेषतो बङ्गप्रान्ते बहुविधाः संस्कृतपरिषदः संजाता मुखरिता लोकहितानि विदधति स्म, तदन्तर्धाने ताः खल्विदानीं दिशि दिशि शोकोच्छ्वासं श्वसन्ति। क एते महात्मानः कं देशं किं कुलं किं वा गोत्रं सार्थकयन्ति स्म तत्राकाङ्क्षा स्वावसरं लभत इति कथञ्चिदुच्यते। काञ्चनमय- पुरीव नानाशस्यरत्नप्रसूतिः पूर्वबङ्गान्तर्भूता बहुलभूदेवजनुषा पुण्य-प्रचयप्रकर्षगरिमान्विता अस्ति काचित् स्थली सुविख्याता फरिद-पुराभिधाना। तस्यां शीर्षण्या असंख्यशास्त्रपारङ्गतविद्वज्जन-जननी कोटालिपाड़ापरगणाख्या सकलपृथ्वीतलललामभूता विराजते- ऽमरपुरी निन्दन्तीव। तत्र द्वितीयशङ्कराचार्यपादा जगद्विख्याता अशेषविद्वद्विजयिनो यतिपतयोऽद्वैतसिद्धयद्वैतरत्नरक्षणवेदान्त-कल्पलतिकासिद्धान्तविन्दुभक्तिरसायनसंक्षेपशारीरटीका-गीतागूढ़ार्थ-दीपिकामहिम्नस्तोत्रटीकादिग्रन्थरत्ननिबन्धारो यत् कुलमलङ्कृतवन्त-स्तस्मिन्नेव परमपावनान्वये महामहोपाध्यायतर्काचार्या आविर्भूताः कवित्वशक्त्या सहैव। परमपुण्यमुहूर्ते सर्वतो मङ्गलमये लग्ने जाता एते महाभागा जगदशुभं निवारयितुकामा इव सर्वजनानन्दकराः संवृत्ताः। कश्यपगोत्रविशिष्टे वंशे सम्भूतत्वादेते काश्यपकवय इति आयत्यां विश्रुताः। श्रुताध्ययनब्रह्मवर्चःसम्पन्नानां विशुद्धानां वैदिकानां पण्डिवर्याणां पुत्रत्वेन वृता एते महाभागा यथाकालमुप-नीता यथाविधि साहित्यव्याकरणशास्त्राभ्यासेन शब्दशास्त्र-पारङ्गता बाल्यत एव कवितानिर्माणसंस्कृतभाषणतद्रचनादिषु अतिकौशलमभजन्त।

ततो विधातृनिर्देशवशमापन्ना इव मूलाजोड़संस्कृतमहा-विद्यालये महानैयायिकशिवचन्द्रसार्वभौमेभ्योऽधीत्य विधिवन्न्याय-शास्त्रं तार्किशिरोमणयः संवृत्तास्तर्काचार्याख्यां लब्धवन्तः। अध्ययनावसानेऽपि अन्तराल इव द्यावापृथिव्योः पीतशास्त्र-सारैः सारमञ्जरीसारार्थदर्शिनीसांख्यसारदीपन्यादयोऽसंख्याताश्छात्र-

पण्डितानामुभयेषां परमोपकारकारका ग्रन्थराशयो बालबोधनार्थी अनुवादनवोदयाद्याः पुस्तिका अनायासमिष्टसन्दर्शिनो विरचिता एभिर्महात्मभिरिति नाविदितं विपश्चिदपश्चिमानाम्। ततः प्रभृति सुरभारतीविलासिनीसंक्रीड़नानन्दसन्दोहप्रसूतिसन्ततयो नाना-परिषत्प्रतिष्ठाननिषद्याद्या एषामेव महात्मनां करकलितसंस्पर्शा-रामजुष्टा विशेषतो बङ्गजनन्यङ्कगता नवाङ्कुरोद्गमपरिणति-परम्पराविहितपल्लविता दिशि दिशि समजनिषतासंख्याताः। मौर्यवश्यनृपतिशासनावसरे सकलभारतीयाल्पराज्यानि सम्राड् धर्माशोकमहाराजचरणाधीनानीवैषां नेतृत्वाधीनाः प्रायशः सर्वाः संस्कृतपरिषद एतज्जीवातुसमुपजीवनेन।

अपि च सस्कृतभाषामयनाटकानि विविधानि प्रणीय तदभिनया-नुष्ठानोपस्थापनेन सर्वथा सुरभारतीमुदजीवयन्निवैते महापुरुषाः। व्याकरणप्रथमपरीक्षोपस्थित्युत्तरकालम् अस्माभिर्बङ्गभाषातः संस्कृतभाषायानुवादप्रणयनकाले अनुवादोपयोगिनो यावन्तो ग्रन्थाः परिदृष्टास्तेषु अनुवादनवोदयनामा ग्रन्थो यथा दुर्मेधसामस्काकमुप-कारमभजत न तथा अनेकग्रन्था अपि उपाकुर्वन्नित्यत्र नातिशयोक्तिः काचित्। तदारभ्यैषां महात्मानां नाम श्रुतं परन्तु साक्षाद्दर्शनं न प्रतिपन्नम्। विना पुण्यप्रचयं को वा सतां दर्शनमुपैति इति सञ्चिन्त्य कालमनयम्। कतिपयवर्षानन्तरं कलिकातामुपागतोऽपि सहसा दर्शनमेषां न प्राप्तवान्। न हि कश्चिद् विधिमतिक्रामति कालं वा वञ्चयतीति। अथ पुण्यतिथावुपस्थिते कदाचिदवसरं प्राप्य कलिकाताराजकीयसंस्कृतमहाविद्यालयमुपस्थाय साम्प्रतिक-ग्रन्थागारविद्यार्थिपठनस्थानत्वेन परिणतं प्राक्तनप्राच्यविद्याध्ययना-ध्यापनाधिष्ठानं गृहं शनैः शनैरुपसृत्यान्तः प्रविश्य स्वाधिष्ठितासनो-पविष्टबृहस्पतिकल्पैर्बुधाग्रणीभिरध्यापनक्रियानिष्ठैः समासादित-देवमन्दिरमिवादर्शम्— महाभागा हरेन्द्रनाथस्मृतितीर्थमहोदया भूपेन्द्रनाथस्मृतितीर्थमहोदयाश्च धर्मशास्त्रम् अध्यापयन्ति स्म। चारुकृष्णदर्शनाचार्यमहाशया वेदान्तशास्त्रं महामहोपाध्यायहाराण-

शास्त्रिमहोदयाः पाणिनिव्याकरणं देवानन्दनाथवेदाचार्या वेदान् पूज्यचरणाः श्रीतारानाथन्यायतर्कतीर्थमहोदया महामहोपाध्यायतर्काचार्यमहोदयाश्चान्वीक्षिकीमध्यापयामासुरिति। परन्तु तदामीषा कस्यचिदपि नामोपाध्यादिकं न व्यज्ञासिषम्। पश्चादव तज्ज्ञातम्। सत्स्वपि चैतेषु विद्वत्तमेषु दृष्टिरेकत्राकृष्यत। बहुच्छात्रपरिवेष्टितो मथुरानाथतर्कवागीश इव कुन्दावदात इव शरच्छशिरश्मिधौताकाश इवं प्रसन्नहास्यच्छटाविच्छुरितगृहान्तःप्रान्तकैलासपुरावस्थितगिरिश इव ज्योतिष्मान् अङ्गकान्त्या विद्यामन्दिरं सर्वतः प्रदीपयन् निष्कोशितप्रतिशब्दार्थगूढ़भावः सरलया भाषया तर्कशास्त्राणि व्याचक्षाणः शिष्यजनगणमनांसि हरति। दर्शनेन सहसा वितर्कः समुदपद्यत। किं मुनिगणसंशोभितनैमिषारण्यस्थः शौनको वा मरीच्यादिपरिवेष्टितो ब्रह्मलोकगतश्चतुराननो वा प्रमथवृन्दसंस्तुतो वृषासनारूढ़ः पशुपतिर्वा अमरवृन्दशोभितो बृहस्पतिर्वेति। अज्ञातपरिचयोऽपि पूर्वज्ञात इव व्यजिज्ञपन्नूनमयं प्रख्यातनामा तर्काचार्यसंज्ञित इति। किञ्चिद् बिभ्यदिव पादमूलमुपसर्पन्नस्य प्रणिपातेन सविनयं चरणान्तिके तन्निर्देशेनोपाविशम्। अथ कुशलप्रश्नादिना सर्वं मम विज्ञाय तत्रभवन्तो गमनकारणमुपलभमानाः सादरं सर्वथाभिलषित-शास्त्राध्यापनेन तमोऽन्धकारं निरास्यन्। कारणविशेषनिबन्धनो दैवाधीनो वा पूज्यपादश्रीतारासारवेदान्ततीर्थ-श्रीचरणाधीनतया तन्नामाङ्कितपरीक्षावेदनोऽपि स्वशिष्यनिर्विशेषम् अपत्यनिर्विशेषं चातिस्नेहेन सर्वथा पक्षतातत्पत्रिकादिग्रन्थान् अध्यापितस्तैरहम्। अथैकदा दूरदेशागतान् विदग्धजनान् काव्यरसपिपासूनपि प्रसङ्गत आन्वीक्षिक्या स्तर्ककर्कशावरणान्तर्वर्तिमधुररसश्रवणोल्लसितमानसान् कियत्या प्रबोधनकौशलशक्त्या तर्कशास्त्राणि व्याख्यातवन्त एते महात्मानस्तद्वर्णयितुं मादृशानां मूढ़ानां वार्ता अतिदूरे एव तार्किकाणां त्वपि तदानीं तद्वृत्तं विस्मयमादधाति स्मेति नातिरञ्जितमिवोच्यते। कालीघट्टान्तिके भवानीपुराख्या स्थली बहुविद्वज्जनाध्युषिता भागीरथी-

तटाधिश्रिता नानादेवायतनपङ्‌क्तिवितता महार्हसौधावलीविभूषिता समस्ति। तत्र श्रीमद्विवेकानन्दस्वामिप्रतिष्ठापितवेलुड़श्रीरामकृष्णमठाधीनो गदाधराख्यः पुण्य आश्रमो वरीवर्त्ति। कतिचिद् वर्षाणि तत्राध्यक्षत्वेन श्रीमद्‌बोधात्मानन्द-स्वामिपादा ध्याननिष्ठा यतिवर्या वेदान्तविज्ञाननिपुणाः संस्कृतरसिका निवसन्ति स्म। तेषां नियन्त्रणेन मधुरव्यवहारेण पण्डितानां छात्राणां च शास्त्रालोचनसौकर्यप्रदानेन देवाराधनजपध्यानकीर्तनभागवतशास्त्रव्याख्यानानुष्ठानानुष्ठापनेन च स आश्रम ब्रह्मलोकायते स्म। तैश्चान्तरान्तरा प्रायशो विशिष्टान् पण्डितान् साधून् तपस्विनश्चासंख्यसंस्कृतभाषणशास्त्रव्याख्यानकीर्तनादिद्वारा भक्तजना आनन्दिताः। एकदा तत्रत्यच्छात्राणामुत्साहवर्धनार्थं संस्कृतभाषणपटुत्वसाधनार्थं च वटुकनाथभट्टाचार्यान् महामहोपाध्यायविरुदभाजः कालीपदतर्काचार्यान् अन्यांश्च कांश्चन विशिष्टान् पण्डितान् समासादितवन्तः। महती सभा तस्मिन् दिवसेऽभूत्। बहवो भक्ताः श्रोतृपुरुषाः साधवः साधारणजनाश्च तत्रागतवन्तः। सभाप्रारम्भे पूज्यपादाः श्रीतारासारवेदान्ततीर्थमहोदयाः 'ॐनारायणं पद्मभवं वशिष्ठमित्यादिभिर्वेदान्तसम्प्रदायाचार्यगुणावलीसूचकैर्मधुरकण्ठेन मङ्गलाचरणं कृतवन्तः। केचित् छात्रा यथाशक्ति स्वस्वसंस्कृतभाषया भाषणं लिखितपाठादिकं च वाचयन्ति स्म। अध्यक्षमहोदयैरपि स्वया संस्कृतभाषया अतीव चित्ताकर्षकं वचनजातं व्याह्रियत। वटुकनाथभट्टाचार्यस्तु स्वसंस्कृतभाषणात् प्राक् छात्राणां दोषान् प्रख्यापयामास। अथ खलु अवशेषे एकं महद् भाषणमशेषार्थयुतं नानारत्नविमण्डितं मेघगम्भीरनादं श्रुतिमधुरं साक्षात् सरस्वतीवचनमिव कर्णेषु सर्वेषां मधुरवर्षि सहसा अश्रूयत। श्रुत्वा तां वाचं श्रोतृणामस्माकं मनसि वितर्कोऽजायत। किं साक्षात् सुरगुरुरिन्द्रसभायां भारतीं व्याहरति, किंवा पद्मयोनिः स्वधाम्नि श्रुतीरुदीरयति, आहोस्विद् भरद्वाजो मुनिपुङ्गवो वेदानभ्यस्यति, अथवा गिरिगुरुर्विश्वत्राणायाभयं प्राणिभ्यो

वितरति इति। मधुरया आकृत्या सहास्यवदनेन अश्रुतपूर्वेण वचनेन च सर्वेषां परमानन्दसन्दोहमास्वादयन्तो गुरुत्वं प्रमाणीचक्रुः। एतेषा संस्कृतभाषणं शब्दसम्भारेण उच्चारणप्रकारेण वह्वर्थ-लघुशब्दसम्पत्त्या मधुरगम्भीरनादेन सर्वजनग्राह्यार्थेन पृथिवीतलेऽ-द्वितीयमासीदित्यत्र विद्वांस एव प्रमाणम्। एतेषां संस्कृतवाङ्मय-भाषणश्रवणात् परमन्येषां संस्कृतभाषणं काकवाशितमिव मन्यन्ते लोका इतीयं नातिशयोक्तिः। आस्तां तावत् संस्कृतभाषणम्, अथ शास्त्रार्थविचारविषये यदि आलोच्यते तर्हि किं दृश्यते। बङ्गदेशे यत्र यत्र यदा यदा शास्त्रविचारो यस्मिन् यस्मिन् शास्त्रे समभवत् तत्र तदा सर्वत्र विचारकार्ये कः खलु मध्यस्थत्वेन व्रियते स्म। नेद कस्याप्यज्ञात यत् महामहोपाध्यायं तर्काचार्यमपहाय एकोऽपि शास्त्रविचारः सम्यङ् न निरवाह्यत बङ्गभूमौ। यदि कदाचित् केनापि कारणेनैषामनुपस्थितिरभवत् कस्मिंश्चिद्विचार-स्थले तर्हि तत्र विचारस्य विपर्ययः सञ्जात इति लक्ष्यतेऽ-स्माभिः। यथा एकदा कलिकातासंस्कृतमहाविद्यालये अलङ्कार-शास्त्रीयविचारसभायां पूर्वपक्षित्वेनाबधविहारित्रिपाठिना सह उत्तरपक्षित्वेन नृत्यगोपालपञ्चतीर्थमहोदयस्य विचारकार्यं सर्वथा विपर्यस्तमासीदिति सर्वेषां प्रत्यक्षमभूत्। सर्वशास्त्रेषु अव्याहत-प्रतिभानत्वेनैषां—शास्त्रविचारेषु माध्यस्थ्यकार्यं सुष्ठु सम्पादित-मासीत्। न्यायशास्त्रे प्रतिभाया महत्या एषां प्रमाणं शृङ्गगिरि-मठाधिपतिशङ्कराचार्यपादानां बङ्गदेशपदार्पणकाले वालिगञ्जस्थ-शङ्करपीठक्षेत्रे तदाचार्यपादसमासादितपण्डितसभायां सामान्य-निरुक्त्याख्यग्रन्थावलम्बनेन पूर्वपक्षोत्तरपक्षाभ्याम् आचार्यपादानां विस्मापनं परितोषणञ्च। न खलु शृङ्गगिरिमठाधीशानां शङ्कराचार्याणां न्यायशास्त्रज्ञानं न्यूनमल्पं वास्तीति बोद्धव्यं येन तत्परितोषणमकिञ्चित्करं स्यात्। न्यायशास्त्रे अतिगम्भीरज्ञानं परिदृष्टं पण्डितवर्यैराचार्यपादानाम्। दक्षिणकर्णाटकक्षेत्रस्थोड्-पिस्थलान्तर्गतश्रीपेजावरमठमध्वाचार्याणां श्रीविश्वेशतीर्थस्वामि-

पादानां संस्कृतमहाविद्यालयसमागमे या महती शास्त्रसभा संवृत्ता तत्र महामहोपाध्यायानां संस्कृतभाषणादिना आचार्यपादास्तत्-परिकराश्च परं सन्तोषं गता आसन् । किं बहुना नैयायिकधुरन्धराणां हरिरामशुक्लमहोदयानां नैयायिकप्रवरैः श्रीमद्भिराशुतोष-न्यायाचार्यमहोदयैः सह न्यायशास्त्रविचारेऽपि एते खलु महाभागा एतत्सतीर्था ख्यातनामानश्च श्रीयुततारानाथन्यायतर्कतीर्थमहा-भागाश्च मध्यस्था आसन्निति । इदानीमेतेषां सतीर्थाः पूज्यचरणाः श्रीमत्तारानाथन्यायतर्कतीर्था नैयायिकचूड़ामणयः अपरे च श्रीयुत-नृत्यगोपालपञ्चतीर्थमहाभागा आलङ्कारिकशिरोमणयः श्रीयुत-राजेन्द्रनाथतर्कतीर्थमहोदया नैयायिकधुरन्धरा बङ्गदेशजनानामतीत-पुण्यफलतया स्थूलशरीरेणासन्निति । तथापि सर्वशास्त्रविचार-काले मध्यस्थस्याभावः सम्प्रति संवृत्तः । पश्चिमबङ्गीयलोकानां तथा तच्छासकवर्गाणां संस्कृतपराङ्मुखतां दृष्ट्वेव पूज्यपादा महा-महोपाध्यायाः स्थूलदेहं परित्यज्यामरलोकं स्वयोग्यवासस्थानं गता इति । न केवलमेते महाभागाः संस्कृतशास्त्राभिज्ञा अपि तु "अधीतिबोधाचरणप्रचारणै"रिति न्यायेन यथाशास्त्रमनुष्ठातारः प्रचारकर्तारस्तथा बोधवन्त आसन्नित्यत्र न विप्रतिपत्तिरस्ति । तथाहि शास्त्रप्रचारार्थं यथा भाषणादिकं कृतवन्तस्तथा बहून् ग्रन्थान् विरचितवन्तः । अध्यापनं च सर्वं जीवनं व्याप्य प्रायशः सर्वेषु शास्त्रेषु कृतवन्तः । यद्यपि आन्वीक्षिक्यां विशेषतो दीर्घ-कालमध्यापनां छात्राणां गवेषणायां शिक्षणं च विदधुस्तथापि स्वेन प्रतिष्ठापितायां संस्कृतसाहित्यपरिषदि प्रथमे वयसि साहित्या-लङ्कारव्याकरणन्याययोगपुराणस्मृतिसांख्यवेदान्तशास्त्रेषु बहुभ्यो विद्यार्थिभ्यो विद्यां प्रयच्छन्ति स्म । तेषां विद्यार्थिनां बहवोऽधुना कृतविद्या नानाशास्त्रेषु अध्यापकपदमलङ्कुर्वन्ति । युरोपा-मेरिकादिप्रतीच्यदेशीया अपि बहवश्छात्रा एभ्यो विद्यां गृहीत्वा तत्तद्देशेषु प्रसिद्धेषु महाविद्यालयेषु भिन्नेषु प्रतिष्ठानेषु लब्धकीर्तयोऽ-ध्यापका गवेषकाः कार्यान्तरपरिचालका अध्यक्षाश्च जाताः ।

तेषां बहूनां नामानि पृथिव्यां प्रथितानि सन्ति । पूर्वमेवोक्तमेतेषां जन्म मधुसूदनसरस्वतीपादानां वशे । न केवलमेतद्वंशीया जन्मनैव प्रथिता अपि तु साधकत्वेन प्रख्याताः । एतद्वंशजाताः खलु बहवो जापका ध्याननिष्ठा देवताराधनपरायणाः क्रियानिष्ठाश्च । तर्काचार्यमहोदयाश्च विशेषतः कुलपरम्परागतलब्धसाधना महापुरुषसङ्ग-प्राप्ततत्त्वबोधाश्चासन्निति समधिगम्यते । भगवच्छ्रीश्रीसीताराम-दासोंकारनाथानां करुणाकटाक्षमेतेषामुपरि विशेषतो वृष्टम् । येन तत्प्रवर्तितायाः प्रणवपारिजताख्यमासिकसंस्कृतपत्रिकाया मूल-सम्पादकत्वेन वृता एते सादरमाजीवनं तथा शास्त्रान्तरप्रचार-कार्येषु आर्यग्रन्थानुवादेष्वपि एषां नाम एतदाध्यक्ष्येणानुवादप्रचार-कार्यं च प्रावर्ततेति । ये चैभिर्ग्रन्था निबन्धाश्च विरचितास्तेषां गणनां कर्त्तुमशक्यमित्यतः प्राधान्येन कतीनाञ्चिन्नामानि प्रदर्श्यन्ते । सारमञ्जर्या व्याख्यानरूपा टीका । एषा च छात्राणां तथा पण्डितानां परमापयोगिनी विचारबाहुल्येन च विबुधानामादरणीया । 'अनुवादनवोदयः—सत्स्वपि बहुषु अनुवादशिक्षणग्रन्थेषु अस्य तुलना नास्ति । अस्मिन् ग्रन्थे बङ्गभाषायाः सस्कृतभाषयानुवाद-पद्धतिः गद्येषु पद्येषु च प्रदर्शिताः । प्रचलितशब्दानां प्रतिशब्दा लिङ्गनिर्देशादिना च बहवः सन्निविष्टाः । पत्रलिखनरीतिः, संस्कृतश्लोकरचनापद्धतिः, निबन्धरचनापद्धतिः, अन्ये च बहवो विषयाः सन्निवेशिताः । येन च छात्राणां महोपकारः साध्यते । विज्ञानभिक्षुकृतस्य सांख्यसारस्य सरला सारगर्भा टीका । प्रशस्तपादभाष्यसूक्तिमञ्जरी । अत्र प्रशस्तपादभाष्यस्य स्वरचिता टीका, बङ्गानुवादः, विशदव्याख्या, जगदीशविरचिता भाष्यसूक्तिश्च निवेशिताः । अस्य ग्रन्थस्य भूमिकाया वैशेषिक-दर्शनस्य तात्पर्यं विशेषत्वं च विस्तरेण प्रतिपादितम्, येन विदुषामपि अनेके पदार्था ग्रहणीयाः सन्ति । कलिकातासंस्कृत-महाविद्यालयतो हरिरामतर्कवागीशकृतमुक्तिवादस्य विस्तृता टीका प्रकाशिता । तत्र न्यायमतानुसारेण मुक्तिस्वरूपस्य तत्साधना-

देश्च परिचयो विशदतया लभ्यते । संस्कृतसाहित्यपरिषदः सत्यानुभावं नाम महाकाव्यं प्रकाशितम् । तत्र सत्यनारायणदेव-माहात्म्यं रसालङ्कारादियुक्तैर्वाक्यैरुपन्यस्तम् । साहित्यालङ्कारा-भिज्ञैः सम्यग् ज्ञायते । अस्मादृशानां मूढानां तत्र प्रवेशो नास्ति । तत एव परिषदः प्रशान्तरत्नाकरं नाम नाटकम् । अन्यानि चानेकानि नाटकानि प्रकाशितानि । प्रणवपारिजातपत्रिकायां 'मानवक-गौरवं' नाम नाटकं प्रकाशितम् । संस्कृतमहाविद्यालयतो न्याय-शास्त्रीयपरिभाषा बङ्गभाषामयी सरलातिविस्तृता च प्रकाशिता । अन्ये बहवो ग्रन्था अप्रकाशिता आसन् । निबन्धाश्च असंख्याताः असंख्यातासु पत्रिकासु प्रकाशिताः । कस्तेषां गणनां कर्तुं शक्नोति । जैनन्यायेऽपि एषां गभीरा व्युत्पत्तिरासीत्तथा बौद्ध-न्याये च । एवं विद्यायां महार्णवा इवासन् यथा तथा गुणेषु अपि महसागरा अभूवन् । एवमनन्तगुणा लुब्धवन्तः इमान् आश्रितवन्तः । सुखितेषु मैत्रीं दुःखितेषु करुणाम् उन्नतेषु मुदितां भावयन्तः सर्वेषां जनानां समादरभाज आसन्नित्यत्र न कोऽपि संदेहः । आ बाल्यात् आ च स्थूलशरीरपरित्यागादयं महात्मा कस्यापि कथञ्चिदपि दोषकीर्तनं न कृतवान् । एतद्विषयेऽयं महात्मा सर्वेषामादर्श-स्थानीयोऽभवदिति । परन्तु अन्येषां गुणलेशं दृष्ट्वा शतधा प्रशंसां चक्रुरेते महाभागाः । परस्य दोष बुद्ध्वापि कदापि न निन्दावचन-मभ्यदधुः । अशेषसद्गुणालङ्कृतानामपि अभिमानलेश एषां कदाचिदपि नादृश्यत । राष्ट्रियसंस्कृत-महाविद्यालयेऽध्यापनस्य प्रथमभागे एवैषां विद्यावैभवं दृष्ट्वा तदानीन्तनसर्वकारा एतान् महामहोपाध्यायविरुदा अलङ्कृतवन्तः । भारतस्य स्वाधीनतालाभानन्तरं राष्ट्रपतिसम्मानेन भारतराष्ट्रपतयोऽप्येनान् भूषितानकार्षुः । हाओड़ा संस्कृतसाहित्यसमाजसभ्यैरुत्तरकालमेते महाकवीत्युपाधिना पूजयाञ्चक्रे ।

एते च महाभागाः संस्कृतसाहित्यपरिषदः प्रतिष्ठापयि-तृष्वन्यतमा आसन् । न केवलं प्रतिष्ठापयितारोऽपि तु प्रथमतः

अस्यां परिषदि अध्यापनकार्येण पत्रिकासम्पादनाकार्येण च जीवनान्तम् इमा परिषद पवित्रां चक्रुः। परिणते वयसि इयं परिषत् एतेषां केनचित् सम्मानेन तथाध्यक्षपदप्रदानेन च कथञ्चित् पूजयामास। एतेषामदर्शनेन इय संस्कृत-साहित्य-परिषद् राष्ट्रियसंस्कृत-महाविद्यालयश्च विशेषतो हानिमगमताम्। यद्यपि अखिलं भारतं हानिमापदेतदभावेन तथापि, पश्चिमबङ्गस्य बहुधा असौकर्यं सञ्जातमिदानीम्। किं कुर्मोऽस्माकमेव दौर्भाग्यमेतदिति निश्चित्य एतेषां चरणौ भूयोभूयः प्रणमामि इति।

---

## नैयायिक-शिरोमणिर्महामहोपाध्याय-कालीपदतर्काचार्य्यः

[ निबन्धकः—डः श्रीगोपिकामोहन भट्टाचार्यः ]

"काव्येऽपि कोमलधियो वयमेव नान्ये
तर्केऽपि कर्कशधियो वयमेव नान्ये ।"

मन्ये दिवं गते तर्काचार्यमहोदये उक्तिरियमर्थलेशशून्या वागडम्बर एव । अष्टाविंशतिवर्षेभ्यः प्राक् कलिकातास्थसंस्कृत-महाविद्यालयप्राच्यविभागे ऋषिकल्पोऽयमाचार्यप्रवरो मे दृष्टि-पथमायातः । न्यायाम्भोजपतङ्गैरन्तेवासिभिः परिवृतो गहनातिगहन-शास्त्रसागरमन्थनपरायणः कोऽयमाचार्यवर्यः, यस्य जलदगम्भीर-स्वरेण समुत्सुका सद्यः प्रविष्टाः प्रथमकक्ष्यायामध्ययननिरता वयं तस्य भाषणश्रवणार्थं साग्रहं प्रतीक्षमाणा अभूम । वार्षिक-महोत्सवे पूर्णोऽभूत् स मनोरथः । शान्तमूर्त्तिरयमाचार्याणां शिरोमणिर्भारतया वरपुत्र इव शोभमानः अविरत-दैवीवाग्धाराभिः श्रोतृवर्गाणां मनांसि आप्लावयन् मनसि मे अनास्वादितपूर्वमानन्द-सन्दोहमजनयत् । नासीदक्षरडम्बरः, न वा समासबाहुल्यम्, विचित्रधारया प्रवहमाना'अलकानन्दा इव निसर्गकवेरस्यातिसरला सुमधुरा वागतीव ह्लादिनी आसीत् । अद्यापि स्मर्यते—एकदा कलिकातास्थ-'इउनिभार्सिटि इन्स्टिटिउट्'इत्याख्यभवने विवेकानन्द-स्मारक-महोत्सवे श्रुतं मया तस्य जलदमन्द्रभाषणम् । देवभाषाया निसर्ग-सौन्दर्यं तदैव मया सम्यगनुभूतम् ।

कालवशेन स्वर्लोकं प्रस्थितोऽद्य स आचार्यप्रवरः । रविरस्त-मितः । संस्कृतपरिषत् पितृहीना जाता । विद्वत्संसत्-शिरोमणिः कालेन गृहीतः । आनन्दलोकमाह्लादयन् सानन्दं विचरति तर्काचार्य-महोदयः ।

कोटालिपाड़ावास्तव्य-नैयायिकप्रवर-हरिदासतर्कतीर्थ भट्टाचार्यात्मजः काव्यव्याकरणतर्कतीर्थ-विद्यावारिधि-प्रभृतिविरुदैर्भूषितो गौतमावतारनिभः कालीपदतर्काचार्यमहोदयो भट्टपल्लीय-महामहोपाध्याय-शिवचन्द्र-सार्वभौम-भट्टाचार्यसविधे न्यायशास्त्रे प्रावीण्यमवाप। शिवैकनिष्ठवंशे समुद्भूतोऽयम्। पुरन्दरस्तस्य पूर्वपुरुषः। वंशेऽस्मिन् श्रीनाथचूड़ामणिः प्रादुर्बभूव। वशपरम्परया न्यायशास्त्रे अधिगतवेदितव्योऽयं विद्वद्वरः आदौ 'जातिबाधकविचारो' नाम निबन्धमालां विरचय्य नैयायिकसंसदि लब्धकीर्त्तिर्बभूव। सा संस्कृत-साहित्य-परिषत्-पत्रिकायां सुदीर्घकालं प्राकाश्यं नीता।

अनन्तरञ्च १३३१ तमबङ्गाब्दे गदाधरकृतनवमुक्तिवादः शिवरामकृतटीकया सह संस्कृतसाहित्यपरिषद्ग्रन्थमालायां प्रकाशितस्तर्काचार्यमहोदयेन मूलटीकयोः प्रतिपाद्यविषयाणा भावार्थनिरूपणप्रधाना मुक्तिदीपिकानाम्नी टीका संयोजिता, बङ्गभाषामयं 'तात्पर्यविवरणञ्च सन्निवेशितम्। महती काचित् भूमिका अनेन सन्निवेशिता, यत्रानेनानितरसाधारणं दर्शनशास्त्रनैपुण्यमाविष्कृतम्। महामहोपाध्यायफणिभूषणतर्कवागीशेनोक्तं "मुक्तिवादमुपाश्रित्य नवे वयसि या कृतिः। तर्काचार्यस्य विदुषस्तस्य सा कीर्त्तिरक्षया।" भूमिकायां चार्वाक-बौद्ध-जैन-मीमांसा-सांख्य-वेदान्तादिसम्मत-मुक्ति-स्वरूपं सरलया गिरा प्रतिपाद्य अन्ते गदाधरोक्तमुक्तेः स्वरूपमुपन्यस्तम्। तत्रापि प्रतिपादितमनेन यद् गदाधरकृतमुक्तिवादे प्रायेण सर्वत्र गङ्गेशोपाध्यायकृतानुमानग्रन्थीय-मुक्तिप्रकरणस्यानुकरणम्। तर्काचार्यमते सामान्यनिरुक्ति-प्रभृतिग्रन्थेषु गदाधरस्य यादृशः प्रतिभाप्रकर्षः सम्भावयितुं शक्यते, न तादृशो नवमुक्तिवादग्रन्थीयविषयेण। मुक्तिदीपिकाटीकायां तेनादौ गदाधरपङ्क्तिमनुसृत्य व्याख्यातम्, पश्चात् शिवराम टीकाया अतिसंक्षिप्तत्वात् तस्या अपि निष्कर्षः प्रदत्तः।

ग्रन्थस्यास्य भूमिका संस्कृतमहाविद्यालयस्याध्यक्षचरेण डः आदित्यनाथ-मुखोपाध्यायेन रचिता। न केवलं तत्त्वोपन्यासे

तर्काचार्यमहोदयस्य वैदुष्यम्, अपि तु गदाधररहस्यसंप्रकाशने तस्य नवनवोन्मेषशालिनी प्रतिभा सम्भावयितु शक्यते। ग्रन्थसम्पादनेऽपि परं निष्णातेन अनेन सुदुर्लभानि आदर्शपुस्तकानि संगृह्य यथार्थपाठ-निर्धारणे सुतरामायास आस्थितः। सर्वत्रैव पाठान्तराणि पादटीकायां संयोजितानि।

तर्काचार्य-महोदयस्य दर्शनशास्त्रीया अपरा कृतिः सूक्तिदीपिका। जगदीश-तर्कालंकारस्य प्रशस्तपादभाष्यटीका सूक्तिनाम्नी, तदुपरि सूक्तिदीपिकानाम्नी विवृतिं विन्यस्य बङ्गभाषामयं भाषातात्पर्यञ्च सन्निवेश्यानेन सम्पादिता। सा चेयं सादरं संस्कृतसाहित्यपरिषद्ग्रन्थमालायाञ्च १३३२ बङ्गाब्दे प्रकाशिता। सम्पादनविधौ तस्य दाक्ष्यमत्रापि सुव्यक्तमेव। भूमिकायां प्रशस्तपादभाष्यस्य वैशिष्ट्यमनेन सुष्ठु प्रपञ्चितम्। जगदीशतर्कालंकारः काव्यप्रकाशटीकाकृज्जगदीशतर्कपञ्चाननतो भिन्न एवेति अनेन प्रतिपादितम्। किरणावली-न्यायकन्दली-प्रभृतिमनुसृत्यैव जगदीशेन सूक्तिर्विरचितेत्युपपादितम्। पाठभेदा यथायथं सन्निवेशिताः, प्रशस्तपादभाष्यं प्रकरणभेदेन विनिर्दिष्टं यथास्थानं तदवलम्बनसूत्राणि च विन्यस्तानीति रीत्या सम्पादनस्य समुत्कर्षसाधने सुतरां यत्न आहितः। सूक्तिदीपिका नव्यन्यायशैलीमनुसृत्य विरचिता। वैशेषिक-पदार्थानां लक्षणान्यपि नव्यन्यायसरणिमादर्शीकृत्योपन्यस्तानि। तत्र वर्धमानोपाध्यायकृत-किरणावलीप्रकाशोऽनेन पदे पदे स्वात्ममतसमर्थनाय समुल्लिखितः।

अनेन कणाद-तर्कवागीशकृतं भाषारत्नमपि सम्पादितम्। तत्र रत्नलक्ष्मीनाम्नी टीका संयोजिता। सम्पादनविधौ त्रीणि हस्तलिखितपुस्तकानि अनेन लब्धानि। पादटीकायां पाठान्तराणि विनियोजितानि। य एव पाठः समीचीनतया अवधारितः स एव मूलपाठरूपेण सन्निवेशितः। रत्नलक्ष्मीनाम्नी टीका स्वपत्न्याः स्मृतिहेतवे रचिता। देवभाषामयीयं टीका अतिसरला सुगमा

विद्यार्थिनां बोधसौकर्याय सुतरामुपकारिणी। संस्कृतसाहित्यपरिषद्-ग्रन्थमालायां २० संख्यकरूपेणेयं १९३६ ईशवीयाब्दे प्राकाश्यं नीता। भूमिकायां न्यायवैशेषिकदर्शनतत्त्वानां विमर्शः, भाषारत्नग्रन्थस्य वैशिष्ट्यञ्चालोचितम्। विशेषतश्च नव्यन्यायपारिभाषिक-शब्दानामाशयाः सरलसुरगिरा अनेन प्रतिपादिताः, येन प्रथमपाठार्थिनां तत्त्वावगमे महदुपक्रियते। तत्र अभावीय-प्रतियोगित्वम्, सांसर्गिक-प्रतियोगित्वम्, तत्तदनुयोगित्वम्, अवच्छेदकत्वम्, पर्याप्तिसम्बन्धः, इत्यादीनां पारिभाषिकशब्दानां प्रयोगा भूयसा दृश्यन्ते, तेषां विशेषज्ञानमन्तरेण नव्यन्यायशास्त्रं सर्वथा दुरवबोधमेव इति मत्वा अनेन तत्तत्पदार्थानां विचारः सन्निवेशितः। पश्चात् संस्कृत-महाविद्यालयस्य 'आओयार हेरिटेज' गवेषणपत्रेऽपि अनेन बङ्ग-भाषया सविस्तरं पारिभाषिकपदार्थानां विवरणमुपन्यस्तम्। नव्यन्यायस्य प्रकरणग्रन्था नोपलभ्यते इति तर्काचार्यमहोदयस्येद विवरणं विजिगीषूणां सुखबोधाय परं कल्पते। मन्ये एतद-वलम्ब्यैव प्रतीच्यदेशीयपण्डितवर्यैः डः ईङ्गलस् महोदयैः स्वकृत-'मेटिरियालस् फर दि ष्टाडि अव नव्यन्यायलजिक'-ग्रन्थे पारि-भाषिकशब्दानां विमर्शः संयोजितः। डः ईङ्गलस्महोदयः तर्का-चार्यमहोदयसविधे एव नव्यन्यायशास्त्रमधीतवान् इति तेनैव संस्कृताङ्गलभाषामये ग्रन्थे सश्रद्धमङ्गीकृतम्, कृतवेदिता च विज्ञापिता इति विदितवेदितव्यानां सुविदितमेव।

आसोद् यथैव तर्काचार्यमहोदयस्य शास्त्रेषु प्रतिभा, तथैव ग्रन्थनिर्माणे अध्यापनादौ च समुत्कर्षः। अध्यापनया विद्यार्थिनां ज्ञानान्धकारविद्रावणे, ज्ञानालोकेन तेषां हृदयकन्दरस्य सुनिर्मलत्व-सम्पादने, विप्रतिपत्तिनिरसने अनितरसाधारणी आसीत् तस्य प्रतिभा इति बङ्गभारते विद्याप्रणयिनः कस्य न विदितम्?

न केवलं न्यायशास्त्रे सांख्ययोगादिप्रस्थानेऽपि स्वतन्त्रोऽयं विज्ञानभिक्षुकृत-सांख्यसारग्रन्थस्य सारप्रभाख्यां टीकां विनिर्ममे। बङ्गभाषामयानुवादेनेयं १९३० ईशरीयाब्दे प्रकाशिता, सांख्य-

कारिका-गौड़पादभाष्यस्य बहुषु स्थलेषु दुरवबोधतया 'भाष्यप्रभाख्य'-टीकामपि विनिर्माय कारिकाया वङ्गभाषायामनुवादेन च समलंकृत्य अनेन सांख्यकारिका सम्पादिता प्रकाशिता च। पातञ्जल-योग-सूत्रस्य मणिप्रभाविवृत्याः 'प्रभाप्रकाश'नाम्नी टीप्पनी विस्तृत-वङ्गानुवादसमेतं प्रकाशितानेन। प्राधान्येन विद्यार्थिना सुख-बोधाय एव रचितं टीकारत्नत्रयम्।

श्रीधरकृत-न्यायकन्दलीग्रन्थस्य बङ्गानुवाद-विवृतिरनेन प्रारब्धा। दुरवबोधोऽयं ग्रन्थ इति एतस्य तात्पर्य-विश्लेषणे समधिकः प्रयासः अनेन आहितः। अद्यापि नेयं प्राकाश्यं नीता। अस्याः प्रकाशनविधौ 'संस्कृतसाहित्यपरिषत्'पारिषदवर्गैरचिरं यत्न आधेय.।

संस्कृतसाहित्यपरिषदा केन्द्रीयशिक्षामन्त्रणालयस्यार्थानुकूल्येन सटीकतत्त्वचिन्तामणिग्रन्थस्य सम्पादनं प्रारब्धम्। सम्पादक-समित्याः सभापतिपदमलमकरोत् तर्काचार्यमहोदयः। एतद्ग्रन्थाना सम्पादनकर्मणि तथा यथार्थपाठनिर्धारणे तस्योपदेशस्य परमुपयोगो यदानुभूयते तस्मिन्नेव काले स पाञ्चभौतिकं शरीरं विहाय परलोकं प्रस्थितः।

---

## स्मृति-कुसुम-मालिका

[ निबन्धकः—डः श्रीसिद्धेश्वर चट्टोपाध्यायः ]

उक्तं साटोपं केना प बगीयेनैकदा,—

"काव्येऽपि कोमलधियो वयमेव नान्ये
तर्केऽपि कर्कशधियो वयमेव नान्ये ।
दृश्येऽपि सयतधियो वयमेव नान्ये
तन्त्रेऽपि यन्त्रितधियो वयमेव नान्ये ।।"

यानेवाश्रित्येयमुक्तिर्गता सार्थकता-
मस्मिन्नपि युगे, लोकान्तरं प्रयातेषु
कालीपद-तर्काचार्य-वर्येषु, वंगदेश-
गौरवाणां तेषा धारा सुचिरं विलुप्ता ।

महामहोपाध्यायाना काश्यपकवीनां
कालीपद-तर्काचार्यमहोदयानां हि
वैदग्ध्यं, कवित्वं वापि समालम्ब्य नाहं
विधातुं वागाड़म्बरमस्म्यत्र प्रवृत्तः ।
सर्वं तत् पारे वर्तते भाषाज्ञानस्य मे ।
रच्यते केवलमत्र तुच्छैका मालिका
स्मृति-कुसुमानाम् ।

मनो मे विलङ्घ्य वाधां
त्रिंशतो वर्षाणां याति सुदूरमतीतम् ।
घट्टमतीत्यानेकं मे जीवन-तरणी
कील-बन्धमासादिता कलिकातां प्राप्य,

प्रवेशश्च मे संस्कृत-महाविद्यालये
संघटितो निस्तारिणी-छात्रावास-प्रेम्णा,
तृतीय-वार्षिकश्रेण्याम् ।

इतः पूर्वमेव
दर्शनमहमलभे राजशाही-पुर्यां
कदापि तर्काचार्याणा देवकान्तिमताम् ।
श्रुतञ्च भाषण तेषां सरसमपि तु
सारगर्भम् ।

साम्मानिक-श्रेण्यामेक एव
तदाहमासमध्येता, निविडश्चाभवद्
गुरु-शिष्ययोः सम्पर्कः । वर्षद्वयं व्याप्य
भाषा-परिच्छेदं तथा साहित्य-दर्पणं
मामेव पाठयामासुस्तर्काचार्यपादाः ।
नाहं जाने कियद्विद्या तेभ्यो लब्धा मया,
तृप्तिस्तु समासादिता काप्यपूर्वा, स्मृति-
र्यस्या अधुनाप्युज्ज्वला मे मनोमन्दिरे ।

अहमहमिकयैव मनस्यायाति मे
क्लान्त-जीवनापराह्ने, तेषा दिवसानां
संहतिः कथानाम् । वर्जनोयं किं वा ततः
कथनीयञ्च किमिति विचार-विमूढ़-
मतिर्यदायाति तदेव कथयाम्यत्र ;
यद्यपराधः, क्षन्तव्यःस मे सहृदयैः ।

अथ नासादिता वृत्तिर्मासद्वयं ततो
वाधिकं कालं संस्कृत-विभागीयैश्छात्रैः,
कस्याप्यौदासीन्यं भवेत्तत्र तु कारणम् ।

छात्रास्तु विशुष्काननाः खाद्याभावेनैव,
अध्यापकचरास्तेषां दुर्मनायमानाः,
चिन्ताक्लिष्टास्तर्काचार्याः, गतिरित्थं जाता।
समुद्भावितश्चोपायः ; एकदा तु सर्वे
चतुष्पाठी-विभागीयाश्छात्रा, घोषयन्तः
प्रतिवादं छात्रावासान्नायाता पठितुं
विद्यालयम् । तत्राप्यासीन्मौनाख्य-सम्मति-
स्तर्काचार्य-चरणानाम् । अतिभृशं तदा
प्रज्वलितोऽभूदध्यक्ष-पादस्य हि क्रोधः,
छात्रैर्वृत्तिस्त्वासादिता नातिचिरेणैव ।
विदितमेव दिवसैः कतिपयैरेव
तत्र-भवनाध्यक्षेण, कस्य वा छात्रस्य
मन्त्रणया घटितोऽयं विक्षोभश्छात्राणा-
मिति, यदचिन्त्यं तत्र महाविद्यालये ।
विताड्योऽयं दुष्ट इत्यध्यक्ष-मनं
यैरेवासी द्विरोधितम्, तर्काचार्य पाद-
स्तेषामेकः । छात्र-प्रीति-स्तेषां बहुख्याता,
धन्योऽहं निपीय तस्याः प्रीतेः सुधारसम् ।

सह विद्यार्थिभि-श्चतुष्पाठी-विभागीयैः,
प्रबन्ध-रचना-रीतिः संस्कृत-भाषया,
तेषामेव प्रयत्नेन किञ्चिन्मयाभ्यस्ता ।

महा-विद्यालये तस्मि-न्नाट्यानुष्ठाने च
तदा, तर्काचार्य-पादा आसन्नाट्याचार्याः ।
संस्कृत-नाट्येऽपि प्राथमिकः पाठो
मया लब्धस्तर्काचार्य-पादानां यत्नेन ।

कृतित्वं किमपि यदि तत्र मयार्जितम्, तच्च सर्वं तेषामेव। संस्कृत-साहित्य-परिषदि तैरेवाहं समानीतः, येयमासीत्तदापरिचिता सेयमधुना मे जाता जननी-स्वरूपा ; समालम्ब्य च यां जीवनगतिरामूलं मे परिवर्तिता। परिषन्माध्यस्थनैव वञ्चितः कदापि नाहं तर्काचार्य-स्नेह-सान्निध्यतः। ततो लोकान्तरञ्च गतेषु संस्कृत-जननी-वर-पुत्रेषु, जातेय संस्कृत-साहित्य-परिषत् पितृ-विहीना। दुहितेव प्रिया तेषामियमासीत् परिषत्।

कथा-प्रसङ्गेन कदाचिन्मया कथितम्, संस्कृत-भाषया रूपक-रचनायान्तु परिग्रहणीया रीतिराधुनिको ; भावे, वस्तु-विन्यासे वा प्राचीना रीतिर्नाधुना चित्तमाकर्षति नवोनानामिति। प्राचोनाः खल्वेते, अर्थं क वा ग्रहीष्यन्ति मम वाक्यस्येति चिन्ता सलज्जमेवाकरोन्माम्। विचिन्त्य च क्षणं यदुक्तं तैस्तेन त्वहं सञ्जातो विस्मय-विमूढः। अवश्यमेव करणीयमेतत्, मयापि चिन्तितमिदमित्युक्त्वा सहासं मामेव पुनर्निरीक्ष्य, मधुरस्वरेण सस्नेहमादिष्टवन्तो मे गुरुचरणाः, कथं वत्स त्वया वा न लिख्यते रूपकं नवीन-रीत्येति। तैरित्थं प्रोत्साहितोऽह

व्यरचयञ्च रूपकम् । आदेशेन तेषां
तदभिनीतञ्च । प्रधान-प्रेक्षक-पदं
कृत्वा समलङ्कृतं ते प्रशंसा-वचनै-
र्वर्धयामासु-र्नटानां सर्वेषामानन्दम्,
धन्यञ्च कृतवन्तो माम् ।

पल्लवितेनालम् ।

प्रोत्साहनेनैव तेषां दत्तं मनो मया
नियोजयितुं संस्कृतं वंगीयरीत्या च
रचनायाम् । आदिष्टस्तै-रमित्राक्षरेण
छन्दसा चापि लिखितुं संस्कृतभाषया
प्रवृत्तोऽहं चञ्चल-मतिः । नाहं जाने, रीते-
र स्या उपयोगस्तत्र घटते वा न वा ।
का वा तत्र विचारणा ? आदेशो गुरूणाम्,
विचार्यतां परीक्ष्येति । सैवात्र परीक्षा,
तत्र फलमपि त्वियमस्तु समर्पिता
चरण-सरोजे स्मृति-कुसुम-मालिका
तेषामेव तर्काचार्य-महाभागानाम् ।

——0——

परलोकगतस्य महामनीषिणो महामहोपाध्यायस्य
कालीपदतर्काचार्य्यस्य स्मरण—

## पुष्पाञ्जलिः*

[ निबन्धकः—श्रीनृत्यगोपाल पञ्चतीर्थः ]

कालीपदस्य चिरसेवनलब्धशक्तिः
कालीपदाश्रितशिवे नियतातिभक्तिः ।
काऽऽली पदस्य घनमन्द्रमधुस्वरोक्तिः ।
कालीपद ! स्मृतिपरा तव वाक्प्रयुक्तिः ।। १
के मा रुदन्ति न भवद्विरहातिसृष्ट्या
के काः सृजन्ति शिखिनो घनवाष्पदृष्ट्या ।
केकायमानवचसोऽपि च शोकसङ्गात्
के कायमानमजहुर्न शरीरभङ्गात् ।। २
वाग्मित्वं सदसि वचोविभङ्गजातम्
स्वामित्वं सुरवचसां यथेष्टभातम् ।
भूमित्वं दिशि यशसां विचारसूत्रम्
ऊर्मित्वं स्वरमधुर-सुधोदभूतम् ।।
नीतिर्भो जनहितवृत्तये सदास्ते
रीतिः सा विनयभृता महस्विभूतेः ।
कीर्त्तिः सा विजयजनिश्च शास्त्रवित्ते
लुप्तिर्नो विषयवशेन शान्तचित्ते ।। ४
कुलपते ! क्व गतोऽसि विहाय वित्-
कुलमिदं प्रियदर्शन ! दृष्टिहृत् ।
कुलगृहं न गिरः स्मृतिमागतं
कुलपितं न कदापि च सम्भृतम् ।।

---

* लेखोऽयं प्रणवपारिजातपत्रिकायां प्राक् प्रकाशितः ।

गभीरबुद्धिर्भवदाश्रिता वा-
गभीरशुद्धिस्तव तत्र नो वा ।
गभीरता तर्कविधौ सदाऽर्वा
गभीरता ज्ञाननिधेस्तु सर्वा ॥६॥
अहो वयं खेदभरेण भुग्ना
अहोभिरेतैः शुचि सन्निमग्नाः ।
अहोमसाध्ये क्व गतिस्तवेय-
महोवत प्राप्नुम नो सखायम् ॥७॥
विधौ प्रतीपे सवितुर्न वृत्तं
विधौ विधित्सावरिणा न कृत्यम् ।
विधौ प्रणीतेऽघबलन्त्वनित्यं
विधौतपापाः ! श्रयतेह सत्यम् ॥८॥
कविता ललिता क्व वर्त्ततां
कविताऽऽरोपवती च शोभताम् ।
अविता नहि चेत् प्रभूयता-
मविता तस्य कवेर्निरूप्यताम् ॥९॥
सभा सभाजिता त्वया सभाजिता सभाजिता ।
सभावबन्धकाव्यकृत् स भाजनं सभाजने ॥१०॥

तिग्मांशुस्तीक्ष्णतेजास्तुहिनतनुरुचिश्चन्द्रमा भूमिपुत्रो,
माङ्गल्ये विज्ञतायां बुध इति समितौ गोष्पतिर्गीःप्रपञ्चे ।
न्याये काव्ये च काव्यो वचसि मृदुगतिस्त्वं शनिस्त्वं हि राहु-
र्वादिग्रासेऽसि केतुर्यशसि बहुविदां निग्रहो विग्रही त्वम् ॥११॥
इन्द्रस्त्वं विबुधाधिपोऽसि दहनो वैदग्ध्यसारे गुणे
साक्षाद्वादिकृतान्तमूर्त्तिरनघस्त्वं नैर्ऋतः पापिनाम् ।
वायुस्त्वं नु सदा गतौ परहितोत्साही प्रचेताः पुनः
सोमः सौम्यवपुः शिवः श्रितजने स्रष्टास्यनन्तो धिया ॥१२॥

—0—

## महामहोपाध्यायपादानां
## कालीपदतर्काचार्यमहोदयानां महाप्रयाणे शोकार्घ्यम्*

[ निबन्धकः—श्रीकालीपद वेदतीर्थः ]

येषां गुरूणां चरणारविन्दाद्
रेणून् गृहीत्वा जगति प्रसिद्धाः ।
जाता बुधा हन्त दिवं गतास्ते
विहाय सर्वान् सहसा बुधाग्र्याः ॥१॥

मन्दाक्रान्ता निखिलवसुधा संस्कृतस्येन्द्रपातान्
मूकात्र स्यात् प्रकृतिमुखरा भारती दुःखभारात् ।
बङ्गेष्वासीद् बुधकुलपतिर्भास्वरो रत्नदीप-
स्तर्काचार्योऽमरपुरमितो भारतञ्चान्धकारम् ॥२॥

नभसि किरणदानात् क्षीयमाणे शशाङ्के
प्रतिपदि विगतायां कृष्णपक्षे प्रदोषे ।
सुरगुरुसमविज्ञः स्वर्गतो रुद्रसंख्ये
सुरगुरुदिवसे चास्तं गतः सूरिसूर्यः ॥३॥

धन्यास्ते स्वयमेव सन्ति भुवने स्थास्यन्ति नूनं चिरं
सन्देहो न तथाप्नुवन्त्यमरतां तेषां हि सत्कीर्त्तयः ।
तासामत्र वयं सुरक्षणविधौ योग्या भवामो न चेत्
तेषां स्थास्यति रक्षिता ह्यमरता गीर्वाणवाण्या भुवि ॥४॥

सर्वेषु शास्त्रेषु सुपण्डिता ये
सुकीर्त्तिभिश्चापि जनेषु धन्याः ।
गीर्वाणवाणी विदधातु तेषां
चिरामरत्वञ्च चिरं प्रशान्तिम् ॥५॥

---

* 'प्रणवपारिजात'पत्रिकाया प्राक् प्रकाशितमिदम् ।

अध्यापनायामपि वाग्मितायां
ग्रन्थादिकानाञ्च सुलेखकत्वे ।
त एव तेषामुपमास्थलानि
न दृश्यते काप्युपमेह लोके ॥६॥
अमायिकत्वेन सुमिष्टवाचा
लोकानुरञ्जिव्यवहारतश्च ।
त्यक्त्वापि देहं चिरजीविनस्ते
तेषां यशःश्रीरपि दीप्यमाना ॥७॥
तेषां वियोगादपि शोकमग्न-
स्तथापि जाने तत एव शान्तिः ।
कीर्तेर्न मृत्युः प्रकरोति हानि-
न्तेषां प्रतिष्ठा मलिना च न स्यात् ॥८॥
स्वर्लोके साम्प्रतं यो वसति विधिवशात् कालिदासोपमस्तु
धन्यः कालीपदोऽसौ सरससुरगिरा शोभनैर्वेदवादैः ।
नत्वा कालीपदं तद् वसतु चिरसुखं मास्तु कश्चिद् विषाद-
स्तस्मात्तस्याशिषा नो स्वगुणकृतिविधाविष्टसिद्धिं ददातु ॥९॥
तर्काचार्यः कविषु सुयशा नाटके दीप्तकीर्त्ति-
र्न्याये यस्य प्रथितमहिमा क्षीयते नैव काले ।
वाग्मिश्रेष्ठो मितमधुरवाग् वैरिताशून्यवृत्ति-
श्चाचार्यं तं प्रणतिनिचयं ज्ञापयामः सभक्ति ॥१०॥
श्रीपादौ श्रीगुरूणां चपलमतिरहं भक्तिनम्रो विवन्दे
नाहं जानामि पूजां वचसि न च पुनः पूतमन्त्राः स्फुरन्ति ।
मन्त्रैः पूतं हि तैर्मे भवति जड़मनः केवलं तद्बलेन
सश्रद्धं स्तौमि भूयः सहजलनयनस्तान् गुरूणां गरिष्ठान् ॥११॥
उद्दिश्य तेषां स्थलपद्मतुल्यं
पादद्वयं यातु मम प्रणामः ।
तेषां स्मृतेश्चारणमेव नित्यं
कायेन वाचा मनसा करोमि ॥१२॥

भोः पुण्यवन्तो गुरवो गुरूणां
कालप्रवाहादधुना भवन्तः ।
मर्त्तं परित्यज्य गता द्युलोकं
जीवामि यावन्न तु विस्मरामि ।।१३।।

अमराः कवयः सर्वे तस्मात् स्युश्चिरजीविनः ।
महाकवीति विख्यातास्तर्काचार्यमहोदयाः ।।१४।।
भवद्भिर्दत्तमन्त्रोऽत्र भवद्भ्यश्च प्रयोज्यते ।
गङ्गोदकेन वै सम्यग् गङ्गायाः पूजनं यथा ।।१५।।
भवतां प्रीतये यद् वा क्रियते स्मृतितर्पणम् ।
तद् गृहीत्वानुगृह्णन्तु भवतां दीनसेवकम् ।।१६।।

——0——

## शोकप्रकाशः

[ प्रकाशिका—श्रीजयश्री चट्टोपाध्याया ]

मुहूर्तशोकेन महाजीवनस्य महिमा नैव निर्णेतुं शक्यते । तथापि गुणानुरोधात् किञ्चिद् वच्मि चापलाय प्रणोदिता । गताश्चिराय अस्माकमाचार्या महामहोपाध्यायाः डक्टर कालीपद-तर्काचार्यमहोदयाः, परं कीर्त्तिरेषां महात्मनां निःसङ्गा शोचते, इति विस्मयः सुधियाम् ।

"सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम्।" परं तत्र भवन्त आचार्यपादा यथासन् कान्तिमन्तस्तथैव तेषु बहूनामपि गुणानाममितपदसञ्चारः श्रूयते । पदलालित्यमवगाहमानं काव्यं स्वभावकीनां महामहोपाध्यायानां सामाजिकेभ्यः सततं स्वदते, वैदग्ध्यञ्च विदग्धान् मादयति । नाटेष्वपि कलागुरुत्वेनाभिनन्दितानां तत्रभवतां प्रतिभा अनवगीतेति सश्रद्धं स्मर्यते

इदानीन्तनैरभिनयनिपुणैर्नटैः। भाषणचातुर्यमेषां सहृदयानां हृदयमुन्मादयति स्म। किं बहुना, सुरभारतीनामयमपि अलङ्कारो बलावलेपात् कालेन हृत इति विमृश्य स्त्रीबुद्धिरियमाकुला तूष्णीं बहु मन्यते।

—०—

[तर्काचार्यरचितानि कतिचित् सुमधुरगीतानि,
संकलयिता—तदीयानुज श्रीकार्त्तिक चन्द्र चक्रवर्त्ती]

## वाणी-वन्दना-गीतम्

१। श्वेताम्भोजनिवासिनी तनुभृतां विज्ञानसन्दायिनी
वीणालापविलासिनी सुरनराराध्या जगन्मोहिनी।
नानाशास्त्रमयी दयामणिखनिर्दीने दयावर्षिणी
सा वाणी कुशलाय वो विजयतां व्यामोहविध्वंसिनी ॥१॥
विद्वन्मानसचारिणी सुचतुरा सङ्गीतविस्तारिणी
लीलापद्मविहारिणी हरिहरब्रह्मार्चनाभागिनी।
नानाशास्त्रमयी दयामणिखनिर्दीने दयावर्षिणी
सा वाणी कुशलाय वो विजयतां व्यामोहविध्वंसिनी ॥२॥
नानाशास्त्रमयी वाणी ज्ञानविज्ञानदायिनी।
या शुभ्रकमलासीना वीणातालविलासिनी ॥
मधुरा मधुरालापा विबुधानन्दकारिणी।
श्वेताम्बरधरा देवी या हंसकुलनन्दिनी ॥३॥

करुणामयि हे मातः कुरुष्व करुणा मयि ।
त्वत्पादपद्मसेवेयमुपजीवति भूतये ।।४।।

२। संस्कृत-साहित्य-परिषदः प्रथमवार्षिकमहोत्सवे सुगीतमुद्बोधन-सङ्गीतम्—

( १३२४ बङ्गाब्दीयाश्विनस्य २६ शदिवसे )

सुविमलशतदलशोभितचरणे जागरिता भव भारतवर्षे,
कुरु सति भगवति करुणावर्षं रोपय भारतमतुले हर्षे ।
प्रतिजनमनुदिनमन्धतमिस्रं वृणुते वरतनु तनु कुरु दुःखम्,
कुरु करुणामयि शुभकरुणा मयि जड़तां नाशय दर्शय लक्ष्यम् ।।
स्मर सति भगवति गतयुगवार्त्तामार्त्तिं परिहर वितर ज्ञानम्,
सुतगणमगणनदुःखनिमग्नं लम्भय भारति निजपदयानम् ।
व्यासपराशरकविकुलभास्करपोषितदेहा त्वमसि सुनन्दे,
कथमथ हे सति मलिना चिरमति जागरिता भव कृपया मन्दे ।।
अयि सति भगवति नाशय मोहं जागरिता भव भारतवर्षे
प्रतिजनमनुदिनमुपहर मानं रोपय भारतमतुले हर्षे ।।

३। संस्कृत-साहित्य-परिषदश्चतुर्थवार्षिकमहोत्सवे गीतमुद्बोधन-सङ्गीतम्—

( १३२७ बङ्गाब्दीयवैशाखस्य २७ शदिवसे )

हे मुनिकुलधर ! जड़तां परिहर चिरकृतमनुसर पुण्यविधानम्,
क्व तव तपस्या मधुरवयस्या क्व वत विराजति वैदिकगानम् ।
क्व नु विधिबोधितभावविशोधितविविधविधीनां मधुरविधानम्,
पुनरपि दीपय लुप्तसुकृतिचयमापय भारतमनुगुणमानम् ।।
सुरकरुणामनु लम्भय भुवि ननु नय निजमोहनिशामवसानम्,
अधिकुरु सवनं बहुबिधिगहनं विरचय निर्म्मलपुण्यवितानम् ।
भारतहितकरकृतिचयमनुचर शुभकरपथमनु कुरु पददानम्,
पुनरपि दीपय पूर्व्वचरितचयमापय भारतमनुगुणमानम् ।।

४ । संस्कृत-साहित्य-परिषदस्त्रयोविंशवार्षिकोत्सवे गीतमुद्बोधन-सङ्गीतम्—

हे नर परिहर नरविद्वेषं शान्तिं लम्भय भुवि निजदेशम्,
प्राचीतरुणारुणरुचिरुचिरा विगता रजनी दुस्तरतिमिरा ।
जागृहि निद्रां शातय सुचिरादुपचर भारतभाग्यविशेषम् ।
स्वार्थविधाने त्यज लघुबुद्धिं परहितचिन्तां कुरु भज शुद्धिम् ।
स्वजनसमाजं प्रापय वृद्धिं नाशय भारतवसुधाक्लेशम् ।।
कियदिदमायुः कियदपि कृत्यं सफलं साधय समयं नित्यम् ।
अभयं वेदय विदितं सत्यं कृत्ये निगमय सुकृतविशेषम् ।
भज हृदिभाव सरलमुदारं पूतं भुवने कुरु कृतिसारम् ।।
वृणु निजकण्ठे मङ्गलहारं क्षणमपि विस्मर नहि परमेशं
पूर्व्वपुरुषचयोचितमाचारं लसदवधानं कारं कारं
सततं कुरु गुरुयशसि विहारं तोषय तपसा निजहृदयेशम् ।।

५ । प्रतिमानाटकस्य तृतीयाङ्के तापसगीतम् —

जयति जयति रघुकुलपतिरानतनरतारणम् ।
काननमनु चरणरेणुमनुधारय पावनम् ।।
काननमिदमतिदुर्मदराक्षसपदभीषणम् ।
कृपया तव ननु माधव पुण्यमयतपोवनम् ।।

६ । तत्रैवापरतापसगीतम्—

संसारं बहुदुःखदं ननु सखे ! क्षेमाय यत्नं कुरु
स्मृत्वा भाविजनिं जनस्य किमहो नायाति भीतिः परा ।।
कालो याति जलप्रवाहतुलया स्थाता कियज्जीवनं
काले नास्तमिते भजस्व भगवत्पादं चिरं भक्तितः ।।
तद्रूपं स्मर नित्यमेव हृदये तन्नाम संकीर्त्तय
तद्गेहं परिमार्ज्जय प्रतिपलं तत्पूजनं साधय ।
तत्प्रीत्यै चिनु पुष्पपत्रवलयं निर्माहि माल्यं परं
काले नास्तमिते भजस्व भगवत्पादं चिर भक्तितः ।।

७। रुक्मिणीहरणस्य चतुर्थाङ्के मिलनसङ्गीतम्—

नवप्रणयियुगलमिलने
रिपुपरिभवगौरवरविदीप्तनिखिलभुवने
प्रीतिरचितकुसुममाला मोदतरलहृदयावाला
वयमिह तां दातुमनसा नवदम्पतिसदने
धर सादरमयि नरवर.धर हे सति ललने ॥

८। उत्तररामचरिते तमसया कुन्दमालायां तापस्या च गीयमानं गीतम्—

सीता सुमलिनवेशा,
पाण्डुकपोला, व्यपगतलीला, सुमलिनमानसदेशा ॥
नयननलिनजलधारासङ्कुलविरहितमधुरविकाशा
करुणारसाकुलमपि मृगखगकुलमातनुते चलकेशा ॥
रविकरतापितकिशलयसम्मितदेहं सपदि दधाना
विदलति हृदयं प्रतिपदमदयं दूरमितस्मितलेशा ॥
तटिनीसलिलादियमतिविमला करुणरसानां मूर्त्ति-
र्विरहव्यथया तुलिता प्रभया प्रसरति लुप्तविलासा ॥

९। उत्तररामचरिते नवीनं नान्दीगीतम्—

धवलसरोवरसलिलविकस्वरधवलसरोरुहवासा,
विधुधवलाम्बरशोभिकलेवरसुषमाधवलसुहासा ।
का सति भगवति भवती सम्प्रति वितरति मुदमतिभासा,
प्राचेतसमुनिनुतपदजलजनिरुपकृतधीरविशेषा ॥
गुणगणगणना नहि तव तुलना सालङ्कृतिपदवेशा
रीतिमधुररचितरससङ्गीतिनृत्यगमधुरकुञ्चितकेशा ।
का सति भगवति भवती सम्प्रति वितरति मुदमतिभासा
देहि कृपामयि ! मयि करुणामयि ! भातु ममामलभाषा ॥

१० । उत्तररामचरिते तापसगीतम्—

जयति जयति रघुकुलपतिराननतनरतारणं
काननमनुचरणरेणुमनुधारय पावनम् ।।
काननमिदमतिदुर्मदराक्षसपदभीषणं
कृपया तव ननु माधव पुण्यमयतपोवनम् ।।
विगतभीतितापसततिरवति देव सेवनं
होमानलधूमशवलगगनं नवशोभनम् ।।
एष शूद्रतापस इह यातु पूतकेतनं
काननमनु चरणरेणुमनुधारय पावनम् ।।

११ । उत्तररामचरिते वासन्त्या गीयमानं गीतम्—

स्वागतमिह तापसि ! तव पूतमजनि काननं
पूतचरितसङ्गतिरति पुण्यचरितसाधनम् ।।
स्निग्धतरुणतरुसञ्चयमाश्रयलयमार्त्तिनम्
कुसुमगन्धमधुरमन्दमेहि मन्दसमीरणम् ।।
मलयानिलचञ्चलजलसरसीं भज कोमलां
मधुपपुञ्जमधुरगुञ्जमनुपालय मादनम् ।।
किमधिकमथ काननगतमखिलं निजवाञ्छितं
नियतं भज जलसरसिजपत्रपुष्पशोभनम् ।।

निरुक्तरूपाणि विना तर्काचार्य्यरचितेषु नाटकेषु बहूनि सुमधुराणि गीतानि निबद्धानि, तानि तत्र तत्रैव द्रष्टव्यानि ।

—0—

कविगुरो रवीन्द्रनाथस्य

# "वृष्टि पड़े टापुर टुपुर"

इति कविता—किशोरवयसि तर्काचार्येणानूदिता संस्कृतभाषया

[ संग्राहकः—श्रीकातिकचन्द्र चक्रवर्ती ]

स्तिमितप्रायं दिवसज्योतिरस्तप्रायस्तपनो भाति,
सितकरलुब्धं जलधरजातं व्याप्याकाशं परितो मिलितम् ।
मेघस्योपरि मेघो निचितो वर्णस्योपरि वर्णो मिलितः,
अधिसुरमन्दिरमास्तां ध्वनिते घण्टाकांस्ये ठन् ठन् रणिते ।।
प्रसरति वृष्टिः किल परपारे तरुशाखाद्या न स्पष्टा रे
तत्र तु पारे शतमाणिक्यं ज्वलति पयोधरशीर्षे लसितम् ।
वर्षणजलमयमरुता मत्ते शैशवगानं विलसति चित्ते
वृष्टिर्निपतति टाप्टुप्कारं भवति तदाम्बूच्छ्वसिताकारम् ।।

गगनव्यापी जलदविलासः क्व नु वा तदवधिरुदितोद्भासो
देशे देशे क्रीड़ां कुरुते तत्र न कश्चिद् वाधां तनुते ।
कतिसंख्यकनवपुष्पोद्यानं वृष्टया सिक्त्वा कुरुते यानं
नूतनखेलां प्रतिपलमयते भावनया क्व नु तत्प्राप्त्युचिते ।
मेघक्रीड़ां दृष्टोन्मत्ते कति वा क्रीड़ा जाग्रति चित्ते
कतिगृहकोणेष्वनुसृतसुप्तिः कातदिवसानां तस्करलुप्तिः ।
तत्समकालं चित्तनिधानं शैशवबेलासमुचितगानं
वृष्टिर्निपतति टाप्टुप्कारं भवति नदाम्बूच्छ्वसिताकारम् ।।

आलोकितगृहमन्तरुदेति स्मितमपि मातुर्मनसि विभाति
जलधरगर्ज्जितकम्पितहृदयं मनसि तथा मे विन्दत्युदयम् ।

एकत्रालयशय्याप्रान्ते शिशुरतिशान्तः सुप्तिं भुङ्क्ते
मातरि तस्य हि गणनावाह्यं दुर्ललितस्य चरितमसह्यम् ।
भवनस्यान्तर्धावद्बालः प्रकटितबहुविधदुःसहशीलो
बहिरभिगर्जति तावन् मेघः समुदितकम्पः सृष्टेरोधः ।
मातृमुखादाकर्णितपूर्व्वा सममुदयति हृदि गीतिरपूर्व्वा
वृष्टिर्निपतति टाप्टुप्कारं भवति नदाम्बूच्छ्वसिताकारम् ।।

राज्ञयोर्दुःखमयीसुखमय्योः स्मृतिमेति कथावैषमय्यो-
व्यथितं मनसः कङ्कावत्याः स्मृतिमेति तथाभिमानवत्याः ।
स्मृतिमेति गतो गृहकोणौकः प्रदीपसृष्टस्तिमितालोक-
श्चतसृषु दिक्षु च कुड्याधेया मनसि प्रचरत्यसितच्छाया ।
झुव् झुव् झुविति च वृष्टिध्वातो केवलमुदयति बहिरुत्तानो
दस्युप्रकृतिर्बालोऽवहितः शृणोति कथिकां तूष्णीम्भूतः ।
तेन समं स्मृतिमेति सम नं मेघसमावृतवासरगानं
वृष्टिर्निपतति टुप् टाप्कारं भवति नदाम्बूच्छ्वसिताकारम् ।।

पूर्व्वं वर्षणमजनि कदा वा क्व जलोच्छ्वासः स समुदितो वा
शिवठाकुरपरिणयकथिका वा कस्य चिरस्य नु परिचितभावा ।
तस्मिन्नपि किमु वासर इत्थं जलधरनिकरश्चकार कृत्यम्
वाञ्चिकचपला मध्ये मध्ये मिलिताकाशे मेघाविद्धे ।
कन्यात्रितयोद्वाहं कृत्वा किं फलमलभत सोऽन्ते गत्वा
वेद्मि न कस्या नद्याः पारे वेद्मि न कस्मिन् देशाधारे ।
कस्य शिशोरभि निद्राधानं को नु जनः प्रागायाद् गानं
वृष्टिर्निपतति टुप्टाप्कारं भवति नदाम्बूच्छ्वसिताकारम् ।।

——0——

# महामहोपाध्याय-प्रयाणे विलापपञ्चकम्

[ विलापकः—श्रीवटुकनाथ भट्टाचार्यः ]

वैदग्ध्यं सुरभारतीप्रविततं नित्यं यदा क्षीयते
ब्रह्मण्यस्य समादरः प्रविरलो लोके तथा लक्ष्यते ।
एतद्दुर्दिनलक्षणं निविड़यन् लोकान्तरे संश्रयो
नूनं तर्कशिरोमणेर्मथयति स्वान्तं न कस्याधुना ।।१।।

काव्ये यस्य कृतिर्निसर्गसुभगा चेतो हरत्यञ्जसा
तर्के कर्कशधीर्विचारनिपुणा निर्भर्त्स्य वाचालताम् ।
नानाशास्त्ररहस्यकूटविशदाकारे मनीषोज्ज्वला
रेजेऽसौ सुमनास्तिरोहिततनुः सोऽद्येति शोच्यं परम् ।।२।।

आचार्य्यैर्बहुमानितैः प्रतियुगं विद्याप्रकर्षार्जितः
श्रेष्ठोपाधिरसौ वृतोऽत्रभवता साकं स शून्याश्रयः ।
श्रद्धा शाश्वतसंस्कृतावपचितोपाध्यायवर्य्यैः समं
दौःस्थ्यस्यास्य निराकृतिर्भवति चेत् स्वर्गेऽपि
तच्चिन्त्यताम् ।।३।।

'देहे भूतविकारिणि प्रविलयं याते निकेतादतो
यावद् विश्वजनाः स्मरन्ति पुरुषं कीर्त्योज्ज्वलं श्रद्धया ।
तावन्मानवसङ्घगौरवसुधीर्द्धामामृतत्वं भजेत्
पुण्यैरर्जितदिव्यधामनि तथा चित्ते गुणग्राहिणाम् ।।४।।

सौहार्द्यं निजजन्मभूनिवसतां संस्मृत्य भावस्थिरं
लोके भास्वरनन्दने स्वकृतिभिर्लब्धे समुच्चेऽधुना
भारत्या वरपुत्र ! भारतभुवां श्रेयस्करं प्रार्थ्यतां
यत्तद् विश्वविधातुरन्तिकचरः स्वीयैर्वचोवैभवैः ।।५।।

—0—

# पत्रदूतम्

[ निबन्धकः—प्रतापवन्द्योपाध्यायः ]

स्वस्ति । वैकुण्ठलोकनिवासिनो देवभूयं गतान् प्रातःस्मरणीय-मनीषिणः काश्यकवीन् कालीपदतर्काचार्यमहाभागान् मर्तलोकस्य प्राच्यमहीखण्डस्य एशियामहादेशस्य ऋषिकुलपरम्परापूतरजसो भारतवर्षस्य पश्चिमबङ्गराष्ट्रस्य राजधान्याः कलिकातानगरीतस्तनयोपमः प्रतापः १७८०-बङ्गसंवत्सरीयसौराश्विनमासस्य सप्तविंशे दिवसेऽवनीतलनिहितशिरसा प्रणम्य सम्पूजयति । इति लोकान्तरं प्रस्थितानामत्रभवतां कति दिनान्यतिक्रान्तानि शोकपाथोनिधौ निमग्नेष्वस्मासु, हा ! कति चातिक्रंस्यन्त इति चिन्तयतामपि तीव्रतरीभवति नः शोकाभिघातः । न जाने किमासीदभिप्रेतं यमराजस्यास्माल्लोकतोऽकाण्डेऽत्रभवन्तमपनयतः । अपि नाम सम्प्रति परितृप्तास्तत्र भगवद्विष्णुप्रमुखा दिवौकसः समुद्रमन्थनोत्थमिवापरं रत्नं भवन्तमात्मगोष्ठीगतमुपलभ्य ? अस्तु वा तथा । किन्तु सर्वर्द्धिविमण्डिते स्वर्लोकेऽवतिष्ठमानस्यापि मर्तलोकस्य विशेषेणास्मद्देशस्य चरमदशाविपर्ययमवलोक्य किं न हृदयं ते विदीर्यतेतमाम् ? अग्नीयमानेषु द्रव्यमूल्येषु बुभुक्षवो नरा अन्नं देह्यन्नं देहीति रवैर्विलोकयन्ति शून्या दिशः । किमधिकेन—शिशुखाद्यैरपि हट्टतः पवनायितं पश्यत्येव शासकवर्गः । सर्वमेतत् प्राधान्येन कृष्णहट्टविलासिनामेव लीलेत्यतो दुःखतरं नु किम् ? तथाहि—धनिनो जायन्ते धनितरा दरिद्राश्च दरिद्रतरा इत्यदृष्टचरमिदं दुर्भिक्षम् । यदि पाश्चात्यमनीषिभिः कार्ल्-मार्क्स्-महाभागैः कदाचिद् भवतां साक्षात्कारो जायते तर्हि ते सान्त्वनीया भवद्भिः—न हीदृग् धनवण्टनव्यवस्था तैः कदापि स्वप्नेऽपि चिन्तिताभूत् ।

अधुना बहव एव दृश्यन्ते साम्यवादिनो ये साम्यं परिहाय केवलं नाम्नैव तथा ( 'वाद'शब्दस्य हि बङ्गभाषायां 'वर्जनम'र्थः )—ते स्वपेटिकापूरणे यत्नवन्तः। मानवाः परस्परेष्वविश्वास-भाजः। सर्वेषामेव दुर्नीतिग्रस्ततया। सर्वत्र दुर्नीतिः कथञ्चित् सहनीया भवत्यन्यत्र शिक्षाविभागतो विचारविभागतश्च। परन्त्वेतद् द्वयमिदानीं समधिकतमं दुष्टम्। अध्ययनं तपस्त्वेन मन्यमान-श्छात्रः सम्प्रति शशविषाणकल्पः। न वोपलभ्यते तादृशोऽध्यापको यस्याध्यापनं व्रतं न तु जीविकोपायमात्रम्। अध्यापनगवेषण-कार्यापेक्षयाध्यापकानामर्थोपार्जन एव समधिकतरासक्तिः परिलक्ष्यते। कथमन्यथा तुङ्गस्थानीया अपि स्वसामर्थ्यमतिक्रम्य वृत्तिबाहुल्य-परिग्रहस्य मदेन धावन्ति? प्रायशोऽध्यापकानां छात्रैरपरैश्चा-ध्यापकैः सम्बन्धः शिक्षादानं ज्ञानचर्चां च विदूरीकृत्य दलीयराज-नीतिमेव समाश्रयते। न जाने क्वान्यत्र विद्यायतनानीत्थं राजनीते रङ्गभूमिरूपेण परिणतानीति।

तिष्ठत्विहान्या कथा। यस्याः संस्कृतभाषायाः सेवार्थमिह लोके भवद्भिर्जीवनमुत्सर्गीकृतं दृश्यतां साधुना कथमवहेलितानुदिन-मुत्सार्यत एव। सर्वसाधारण्येन शिक्षाया अवनतिकालेऽधुना चतुष्पाठीषु विश्वविद्यालयानां संस्कृतश्रेणीषु च कतिनश्छात्रा नाध्ययनार्थं प्रवेशं भजन्ते। फलञ्चास्य व्यक्तमेव—सम्प्रदाय-विलुप्तिः। भवादृशेषूज्ज्वलदीपेष्वेकैकशो निर्वापितेषु नूनमध्यापना-वृत्तिर्गाढध्वान्तकवलितैव स्यात्। भवादृग्ब्राह्मणपण्डितोऽपि कथावशेषं गतः, अर्थलोभेन ब्राह्मणत्वस्य ग्रस्तत्वात्। 'तदो गण्डस्स उवरि पिण्डओ संवुत्तो'। विदितमेतन्नूनं दिव्यचक्षुषात्र-भवता—पश्चिमबङ्गमध्यशिक्षापर्षत्कर्तृपक्षो विद्यालयानां नूतने माध्यमिकपाठ्यक्रमे संस्कृतं कस्मिन्नासनेऽवस्थापयतीति। एतावन्तं कालमुच्चमाध्यमिक-पाठ्यक्रमे कलाशाखागतानां छात्राणां कृते संस्कृतप्रभृतीनां 'क्लासिकाल्'-वाङ्मयानामन्यतममावश्यकपाठ्यतया निर्द्धारितमासीत्। इदानीं तु मिलितशाखे पाठ्यक्रमे 'क्लासिकाल्'-

भाषागोष्ठ्या सह हिन्दीप्रभृतीनां मातृभाषेतरप्रादेशिकभाषाणां तथाऽङ्गलेतरेषां वैदेशिकभाषाणामन्यतमा वैकल्पिकतयानुविधीयते । अहो सुविवेकः ! संस्कृतं तावदाभिर्भाषाभिः समानमानार्हं भारतीयच्छात्रेषु !! न जाने प्राचीनवर्तमानभारतयोरैक्यग्रन्थेः 'क्लासिकाल्'भाषासाहित्यविशेषस्याध्ययनं विना कथं माध्यमिकी शिक्षा सम्पूर्णा भवेत् । किं नेदं सर्वत्रानुसृताया हिन्दीपोषणनीते व्याजमात्रम् ? न केवलं संस्कृतमपि तु शर्मण्यप्रभृतय इयुरोपीय-भाषा अपि विहाय गड्डलिकाप्रवाहेणातत्त्वनिर्णयक्षमाश्छात्राः, प्रायो व्यावहारिकलाभैकदृष्टिभिरभिभावकैः प्रणोदिताः, हिन्दीमेव पठेयुः । भाषाविशेषज्ञसमितिरेतादृशीमेव व्यवस्थां कृतवती । लब्धप्रतिष्ठास्त्वविचारणीयाः । आदौ श्रुतमासीत्—नवमदशम-श्रेण्योरेनादृश्यां व्यवस्थायां सत्यामपि सप्तमाष्टमश्रेण्योः पूर्ववत् 'क्लासिकाल्'भाषागोष्ठ्येवावश्यकपाठ्यगोष्ठ्यां स्थास्यतीति । तथा सति सप्तमाष्टमश्रेण्योरधीतसंस्कृताश्छात्रा नवमश्रेण्यामपि संस्कृत-मेवाध्येष्यन्ते इति प्रत्याशा सञ्जातासीत् । परन्त्वपूर्वेयं बञ्चना पश्चात् प्रकटिताभूत् । इदानीं हि श्रुतमस्माभिः सप्तमश्रेण्यामपि नवमश्रेणीवत् 'क्लासिकाल्'भाषागोष्ठी वैकल्पिकीव विहिता । न ह्यमाकं हिन्दीभाषां प्रति विद्वेषलेशोऽपि विद्यते । प्रत्युत जातीय-भाषाणामन्यतमतया ( अस्तु वा राष्ट्रभाषातया ) तत्र प्रीतिमन्तो वयम् । किन्तु यदि कापि प्रादेशिकी भाषा भारतीयकृष्टेराधार-भूतस्य संस्कृतस्योत्सारणे साधनतया प्रयुज्यते तर्हि किं यथार्थतो जातीयतावादिनस्तत् सोढुं क्षमाः ? किं जनन्या निधने भगिनी नियोज्यते विवेकिभिः ? न केवलं भारतीयकृष्टेः परिचयलाभार्थ-मपि तु सर्वासां प्रादेशिकभाषाणां समृद्धिसम्पादनार्थमपि संस्कृता-ध्ययनमावश्यकम् । संस्कृतस्य भाषान्तरसमृद्धिसाधकत्वं शब्द-सम्पदा प्राधान्येन भङ्गीवैचित्र्येण चांशतः । एवमर्थसम्पदा संस्कृत-साहित्याक्षरसमृद्धिसाधकत्वमपि स्पष्टमेव । तत्र न हि तावद् हिन्दी व्यतिक्रमं भजते । सर्वमेतदपह्नुवानाः केचन विपश्चि-

द्वरेण्या वदन्ति—संस्कृतं नाम मृतभाषेति किमस्याध्ययनेन च्छात्राणामिति। प्रादुर्भूतास्वपि प्रादेशिकभाषास्वधुनापि बहुभिर्भाष्यमाणस्य भाषान्तरपुष्टिसाधकस्य च संस्कृतस्य कथं मृतत्वमिति न जानीमहे। जीवितमपि ये मृतमाहुर्जानन्तु ते—मनुष्ये गोत्वमारोपयन् यथा स्वयमेव गोपदवाच्यो नैयायिकस्य गङ्गेशोपाध्यायस्य युक्त्या

किं गवि गोत्वं किमगवि गोत्वं
यदि गवि गोत्वं मयि न हि तत्त्वम्।
अगवि च गोत्वं यदि भवदिष्टं
भवति भवत्यपि सम्प्रति गोत्वम्॥

इत्येवंरूपया, तथोपयुक्तं सत्यमनुभवन्तोऽपि किञ्चात्रभवता ग्रथितवस्तूनां नाटकरत्नानां सुधियां समक्षं मञ्चेषु साफल्यमण्डितमुपस्थापनं जानन्तोऽप्येवंवादिनः स्वयमेव जीवन्मृता इति। अथ संस्कृतं कठिनमिति वदन्तो जानन्तु—न हि हिन्दीभाषा सरलतरा। तस्या लिङ्गादिविषयकं काठिन्यं कस्याविदितम्? न चाङ्गलभाषापि सरलायते छात्रेभ्यः। कथमन्यथेदानीं स्नातकपरीक्षोत्तीर्णा अपि बह्वश्छात्रा भाषयानया पङ्क्तिमप्येकां शुद्धां न लेखितुमर्हन्ति? तथापि नास्या वर्जनमिष्यतेऽस्माभिः।

एकतः संस्कृतमुत्सार्यतेऽपरतश्च रक्षापूर्णिमादिवसः संस्कृतदिवसरूपेणानुपाल्यते निखिले भारते वर्षे। Hypocrisy यद्वा बकव्रतं नाम किमन्यद् वस्तु न जानीमहे। नूनं भारतवर्षतो विताडितं संस्कृतमचिरेणैव कालेन विदेशलक्ष्मीमालिङ्गिष्यति। एतमेव विषयमुपजीव्यास्मदग्रजप्रतिमेन भवत्प्रसादधन्येन सचेतसा विदूषासिद्धेश्वरनटराजेन प्रणीतं ननाविताडनं नामाभिनवं रूपकमचिरेण कालेनास्माभिरभिनेतुमिष्यते। अधुनैव भारतीयविद्याया बहुषु विभागेषु वैदेशिकपण्डिता एकाग्रगण्याः। परन्त्वेतद्देशीयाः केचिन्महात्मानस्तेषु परभूमिविबुधेषु सुतरां विद्वेषवन्तः। किमेतद्दीनम्मन्यताया मनस्तात्त्विकप्रकाशमात्रमपरा वा कापि जघन्या

मानसिकी वृत्तिरिति न जानीमहे। ये नाम वैदेशिका भवादृशा-नृषिप्रतिममानवानां पादोपान्तमागत्य, तथा कर्तुमशक्नुवन्तो वा दूरतो भवादृशानाचार्यान् संस्मृत्यास्मदीयशास्त्राणि परम निष्ठया-कलिवन्तस्तेषामवमाननं कृतघ्नतां मन्यमाना वयं तान् सभक्तिक नौमः।

चरमनैराश्यमध्येऽपि त्वाशायाः क्षीणां ज्योतिर्लेखामुपलभामहे। संस्कृतस्य यथोचितासनोद्धारार्थं संस्कृतं तथा संस्कृती रक्ष्यतामिति संग्रामसमितिः (Save Sanskrit and Culture Action Committee) काचन कलिकाताविश्वविद्यालयस्य सुरवाणीविभागं भवदीयैहिकप्राणस्वरूपामिमां संस्कृतसाहित्यपरिषदं च केन्द्रीकृत्य समग्रे पश्चिमे बङ्गेऽपेक्षितं कार्यं विदधाति। मध्यशिक्षापर्षत्कर्तृ-पक्षेण तथा पश्चिमबङ्गसर्वकारेण सहास्याः सत्यसंग्रामोऽधुनापि प्रचलति। यद्यपि बहवः संस्कृतसेविनोऽत्रोदासीनाः केचिद्वा विद्वेषभाजस्तथापि ये नाम स्वार्थपराङ्मुखाः संस्कृतसेवाव्रतिनो रिक्तहस्ताः कर्मिणः—विशेषतो वयसा नवीना अत्रोत्साहवन्तस्ते लोकान्तरतो देवभूयं गतानां भवतां शुभाशिषो लभन्तां यथास्मिन् संग्रामे सत्यस्य जयो भवेत्।

वक्तव्येष्वपरेष्वपि कृतं भूरिपरिजल्पितेन। मध्यप्राच्ये महता युद्धेनैतद्भूखण्डस्य शान्तिर्व्याहन्यते। एकमिस्रायेल्बालचन्द्रं दिशि दिश्यारवराहवो ग्रसितुमुद्यताः। धर्मयुद्धं नाम कुरुक्षेत्रे बभूव। इदं त्वपूर्वं महम्मदीयधर्मबन्धनं यस्य फलमधुनानुभूयतेतमाम्। आल्ला विचारयतु! वयं तु जातोद्वेगा युद्धावसानं प्रतीक्षामहे।

नूनं स्वर्गधाम्नि प्रातःस्मरणीयास्तत्रभवन्तः क्षितीशचन्द्र-चट्टोपाध्यायाः, यतीन्द्रविमलचतुर्धुरीणाः, दुर्गामोहनभट्टाचार्याः, शिवप्रसादभट्टाचार्याः, भूतनाथसप्ततीर्थाः, अनन्ततर्कतीर्थाः, हरिदाससिद्धान्तवागीशाः, चिन्ताहरणचक्रवर्तिनः, अपरे चास्मद्-गुरवो गुरुस्थानीयाश्च मनीषिणोऽत्रभवतां सहासनभाजस्तृप्यन्ति। तेभ्यः समेभ्योऽस्मदीयाः सभक्तिकप्रणामाञ्जलयो वाच्याः।

आनन्दयितृ पत्तोत्तरं शुभाशीर्वाहकं प्रतीक्षे। अघटनीयमद्यापि घटत इत्यनुश्रूयते। अतः प्रतीक्षा मे कदाचित् फलप्रसूर्भवितुमर्हति। अन्ततः स्वप्ने भवतु। भवदाशिषा कर्मणि नस्तथा प्रवृत्तिरस्तु यथा देहावसितौ भवद्भिः पुनः साक्षात्कारो लभ्येत। साधनोचितधाम्नि भवतां शाश्वती शान्तिं प्रार्थयामह इति शम्।

—o—

## प्रार्थनम्

[ निबन्धकः—श्रीदुर्गानाथभट्टाचार्य्यः काव्यपुराणतीर्थः ]

सुविदितमेव सर्वेषां विदुषां यत्, महामहोपाध्यायपदलाञ्छनकालीपदतर्काचार्य्यमहोदयाः परित्यज्यास्मान् साधनोचितं धाम गतवन्तः। एतेषां महाप्रयाणेन नहि केवलं बङ्गदेशो नवा निखिलं भारतवर्षं परं समग्रः पण्डितसमाजः काव्यरसिका नव्यन्यायरसिकाश्च सुमहतीं क्षतिमध्यगच्छन्। १२८८ बङ्गाब्दे अधुनातनबांलादेशे फरिद्पुरमण्डलान्तर्गते कोटालीपाड़ान्तःस्थिते उनशियाग्रामे तर्काचार्य्यमहोदयानां जन्म। एते खलु बाल्ये वयसि भुवनचन्द्रविद्यालङ्कारमहोदयस्य सविधे कलापव्याकरणमधीत्योपाधिपरीक्षायां प्रथमस्थानभाजो बभूवुः। ततस्ते २४ परगणास्थ'मूलाजोड़संस्कृतमहाविद्यालये' साहित्यशास्त्रीयोपाधिपरीक्षायां प्रथमस्थानमधिकृत्य समुत्तीर्णौ महामहोपाध्यायानां शिवचन्द्रसार्वभौममहोदयानामन्तेवासिनः सन्तो नव्यन्यायमधीत्य ससम्मानं तीर्थपरीक्षां प्रदाय च प्रथमं स्थानमासादयन्तः प्रथमस्थानाधिकारिणः कृते निर्दिष्टं केयूराख्यं

स्वर्णपदकं लब्धवन्तः। छात्रावस्थायामेव देवभाषामधिकृत्य वाक्यालापेन ते महाभागाः सर्वान् छात्रान् तर्कालापैः परिभूय पण्डितानां मनोरञ्जनं कुर्वन्ति स्म। "तर्काचार्य्य" इत्युपाधिस्तु दुर्गाचरण-सार्वभौम-चतुष्पाठीस्थितच्छात्रैस्तर्काचार्य्य-वर्य्येण सम्मुखविचारे तर्कयुद्धे च परिभूतैः 'भवन्तं विचारमल्लं दृष्ट्वा अस्माभिः "तर्काचार्य्य" इति उपाधिना भवानद्यारभ्य अलं क्रियते इत्युक्त्वा प्रदत्तः। इदं वृत्तं तु मया—काशीमबाजारस्थितमणीन्द्र-चन्द्रनन्दिमहोदयस्य पुरोहितात् श्यामाशङ्करविद्यारत्नमहोदयात् श्रुतम्। चन्द्रो यथा शनैः शनैःवृद्धिं गतः पूर्णो भवति, तथा तर्काचार्य्यमहोदयाः कलिकाता-संस्कृत-साहित्यपरिषदि छात्राणामध्ययने रताः क्रमशः पूर्णतां लेभिरे। अथैते कलिकाताराष्ट्रिय-संस्कृतमहाविद्यालयाध्यक्षाणाम् आदित्यनाथमुखोपाध्याय-महोदयानामनुरोधेन तत्रैव महाविद्यालये न्यायशास्त्राध्यापनाय गतवन्तः। ततः क्रमशो भाग्यलक्ष्मीसकाशात् प्रेरणां लब्ध्वा स्वयं चानलसैः स्वकीयमधुरालापेन, विलक्षणेन पाठनकौशलेन च छात्रेभ्यः सततं विद्यादानं कृतम्। देवभाषायां भाषणदानेऽपि ते सुमहतीं ख्यातिं लेभिरे। गद्यपद्यात्मककाव्यविरचने तेषामतीव पाण्डित्यमासीत्। येन असाधारणपाण्डित्यमालोक्य तदानीन्तनभारतसर्वकारेण "महामहोपाध्याय" विरुदं प्रदाय यथोचितसम्माननमेभ्यः प्रदर्शितम्। परवर्त्तिनि काले, वर्द्धमानविश्वविद्यालयाधिकारिभिस्तेभ्यः डि, लिट्, इत्युपाधिः प्रदत्तः। नाटके, प्राचीनकलायामभिनयकलायाञ्च तेषां गभीरं ज्ञानमासीत्। एकदाभिनयक्षेत्रे नटरूपिणं तं दृष्ट्वा सर्वे मुग्धा अभवन्। प्राक् पञ्चवर्षेभ्यो वाराणसेयसंस्कृतविश्वविद्यालये प्राचीन-न्यायनव्यन्याययोः, प्रभावमवलम्ब्य तुलनामूलके भाषणदाने तेषामासीद् गाम्भीर्यपूर्णा सुयुक्तिपूर्णा च वचनशैली। तैर्हि अगणितेभ्योऽदृष्ट-पूर्वेभ्यः पुस्तकेभ्यो नवीनं मतं प्राचीनं मतं च प्रदर्शितम्। नूतनतया नवीनप्राचीनयोर्मतभेदश्च उक्तः। यदाकर्ण्य साधारणा बहवो विद्वांसस्तदानीं तत्तन्मतेष्वनभिज्ञास्तर्काचार्य्यमहाभागानामुपरि

विद्वेषेण प्रथमतो बहुधा कटूक्ति कृतवन्तः। परं विश्वनाथकृपया तर्काचार्य्यमतपरिपोषकैः पण्डितराज-राजेश्वर-शास्त्रिमहोदयैस्तान् सर्वान् पण्डितान् वाक्यवाणेन विद्ध्वा तर्काचार्य्यमहाभागानां युक्तिपूर्ण-वाक्यस्यैव समर्थनं कृतम्। एतेन शिरोमणिनेव मिथिलाजयोऽपि तर्काचार्य्यवर्य्यै. सूच्यते। आ चन्द्रनाथात् कुमारिकापर्य्यन्तं गद्य-पद्यमयकाव्ये, भाषणे, न्यायशास्त्रे न्यायेतरदर्शनशास्त्रेषु च तेषां पाण्डित्यं हिमालयशिखरवत् समुन्नतिं लेभे। सस्कृतसाहित्यपरिषत् तेषां हृदयमिवासीत्। रात्रिन्दिवं केन प्रकारेण कुत्र गमनेन वा परिषद. समुन्नतिर्भवेदिति चिन्ता तेषां हृदयमध्यारूढ़ासीत्। प्रागन्तरान्तरा परिषदमासाद्य नानाशास्त्रालोचनां नानाग्रन्थालोचनां नानामतालोचना विनापि पण्डितानामपरेषामभिनेतृणां मनोहरम-भिनयजातं निरीक्षितवन्त एते तर्काचार्य्यवर्य्याः। तादृशी सभा नेदानीं दृश्यते, अहो दुर्द्दैव अस्माकम्। परिषदुपकारार्थमेते बहूनां दुर्लभग्रन्थाना सम्पादनां कृतवन्तः। एतेषां पाण्डित्यं दृष्ट्वा, सर्वकार-पक्षतो महामान्यराष्ट्रपतिमहोदयैः राष्ट्रियसम्मानना कृता परवर्त्तिनि काले। मन्ये तदिदं सम्माननं तुच्छमेव। न पुन-स्तज्ज्ञानसदृशम्। दुःखमेतदेव, पुनर्न तेषां मधुरां वाचं शृणोमि स्म। एते खलु विद्वत्तमा नश्चिरं स्मरणीया एव। नमो नम एतेषां चरणकमलेभ्यः। भगवतः सकाशे कालीपदतर्काचार्य्य-महोदयानाममरात्मा चिराय शान्तिं लभतामित्येव नः प्रार्थना।

—0—

# महाकविर्महामहोपाध्यायः डक्टर कालीपदतर्काचार्य्यः

डि लिट.

( जन्म—१८८८ खीष्टाब्दे मृत्युः—१९७२ खीष्टाब्दे )

[ निबन्धकः—श्रीरामकृष्ण चक्रवर्ती, एम. ए, विद्याभूषणः ]

हा कष्टम् ! प्राच्य-गगन-प्रदीप्त-भास्करो वाणी-वरपुत्रः सुकमनीयाकृतिर्वाग्मिप्रवरः अभिनेतृ-प्रमुखः स्वधर्मनिष्ठो नानाशास्त्र-पारङ्गमः स्वभावकविरजातशत्रुस्तर्काचार्यः सहसैव दिवं प्रस्थितः। नासीत्तस्मिन् महाकवौ नैयायिकजनसुलभा कर्कशता, न वा पण्डित-धुरन्धरसहजोऽहङ्कारः। महामानवे तस्मिन् कर्त्तव्यनिष्ठा, सारल्यम् औदार्य्यं चरित्रमाधुर्य्यममायिकत्वञ्च छात्रैरध्यापकैः धनिभिर्दरिद्रैश्च सर्वैरेव प्रत्यक्षीकृतम्। न केनापि कल्पितं यद् दिक्पालोऽसौ सहसैव अस्मान् विहाय परलोकं यास्यतीति महद् दुःखकारणं सर्वेषाम्। पण्डित-परिषदि अपूर्वा तस्य प्रतिभा आसीत् सर्वेषामेव गर्वस्थानम्, तस्याभावे न केवलं बङ्गदेशस्य भारतवर्षस्यैव या क्षतिः सञ्जाता सा तु अपूरणीया एव।

महात्मासौ अविभक्तबङ्गदेशस्य फरिदपुर-मण्डलान्तर्गत-कोटालीपाड़ेति-प्रसिद्धविषयस्य पण्डितभूयिष्ठे ऊनशीयाग्रामे १२९६ बङ्गाब्दे काश्यपगोत्रोत्पन्नस्य अद्वैतसिद्धि-प्रणेतुर्मधुसूदन-सरस्वतीपूतवंशे समुत्पन्नः प्राथमिकशिक्षाव्यापृतो बाल्याव-स्थायामेव प्रतिभया बुद्धिप्राखर्य्येण च सर्वेषामादरभाजनमभूत्। स्वखुल्लतात-कृष्णदास-चक्रवर्ति-महोदय एव प्रथमतस्तं कलाप-व्याकरणस्य सन्धिवृत्तिं पाठयामास। ततः पित्रा सह कलिकाता-नगरीमागत्य आङ्गल-विद्यालय-प्रविष्टस्य परीक्षासु प्रथमस्थान-मधिकृतवतोऽपि तस्य चतुष्पाठीतः काव्य-व्याकरणादि-संस्कृत-भाषामयशास्त्राध्ययनेच्छा प्रबला सञ्जातेति ज्ञात्वा तत्पित्रा

सानन्दं तदेशानुमोदितम् । वागवाजार-पल्लीस्थाध्यापकप्रवर-वैयाकरण-केशरिभुवनमोहन विद्यारत्न एव त कलाप-व्याकरण-मध्यापितवान् । ततो मूलाजोड़-संस्कृत-महाविद्यालये स काव्य न्यायञ्च अधीतवान् । छात्रावस्थायामेव तस्यापूर्व-कवित्वशक्ते-र्विकाशः संस्कृत-भाषा-भाषण-पटुता च सतीर्थ्यानामीर्ष्यास्थानम् अध्यापकानां तथा भट्टपल्लीस्थपण्डितजनानामानन्दस्थानमभवत्, काव्योपाधि-परीक्षायां तथा नव्यन्यायोपाधि-परीक्षायां च प्रथमस्थान-मधिकृतवनस्तस्य ख्यातिस्तु नुतरां वृद्धिप्राप्ताऽभवत् । छात्रा-वस्थायां ज्ञातिभ्राता प्रतिवेशी स एव सर्वेषामस्माकम् आदर्शस्थान-मभूत् । अध्ययनावस्थाया स्वमित्रेण स्वग्रामवासिना यामिनीकान्त चतुर्धुरीणेन सह सरस्वती-पूजावसरे लिखितं कञ्चन श्लोक पठित्वा ग्रामान्तरस्थेन गौतमोपाधिकेन स्वभावकविना पञ्चाननेन यामिनीकान्त-पित्रे ईशानचन्द्राय श्लोकमुखेन लिखित-मासीत्—

कोटालीपाड़-विद्वद्-गगन-दिनकरे रामनाथे गतेऽस्ते
चन्द्रो यश्चन्द्रकान्तः स बहुधनघनैश्छादितो दूरसंस्थः ।
तस्मिन् निःसूर्यचन्द्रे ख इति मम मतिर्यामिनीकान्त इन्दु-
श्चायं कालीपदाख्यः कविरविरभवद् भ्रातरीशानचन्द्र !॥ इति ।

[ रामनाथस्तु पश्चिमपाड़ास्थो महामहोपाध्याय-रामनाथ-सिद्धान्त-पञ्चाननः, चन्द्रकान्तश्च डहरपाड़ास्थश्चन्द्रकान्त-न्यायालङ्कारः ]

भविष्यति च काले सत्यमेवासौ महामहोपाध्यायः डक्टर कालीपदतर्काचार्य्यो न केवलं कोटालीपाड़ाया बङ्गदेशस्य वा, भारतवर्षस्यैव गौरवरविरासीत् ।

सर्वत्रैवासौ अद्वितीय आसीत्,—छात्रेषु सर्वोत्तमः, अध्यापकेषु अनन्यसाधारणः, ग्रन्थकारेषु साहित्ये वा दर्शने वा टीकादि-सम्पादने वा अतुलनीयः, श्लोक-रचनायामपि द्रुततायां रमणीयतायां सरलतायां भाव-माधुर्ये च अनुपमः—एतादृशस्य तस्य सम्माननापि

सर्वैरेव कृतेति महदानन्दनिदानं सर्वेषाम् । १६४१ खीष्टाब्दे तदानीन्तनाङ्गल-सर्वकारेण 'महामहोपाध्याय' इत्युपाधिना भूषितोऽसौ १९६१ खीष्टाब्दे स्वाधीन-भारतीयसर्वकारात् सहस्रत्रय-रूप्यक-परिमितां वार्षिकीं वृत्तिं १९७२ खीष्टाब्दे च सम्माननार्थं वर्द्धमान-विश्वविद्यालयात् डि॰ लिट॰ इत्युपाधिं लब्धवान् । शृङ्गेरी-मठात्, संस्कृत-समाजात्, काशीधर्ममहामण्डलात्, संस्कृत-महासम्मेलनात्, कलिकाता-विश्वविद्यालयात्, विश्वभारती-विश्वविद्यालयात्, काशी-हिन्दु-विश्वविद्यालयाच्च स बहुधा सम्मानितोऽभवत् ।

संस्कृत-साहित्य-परिषदि एव तस्य अध्यापकजीवनारम्भः । तदनन्तरं कलकतास्थ-राजकीयसंस्कृतमहाविद्यालये प्रथमतः प्राच्य-विद्या-विभागीय-प्रधानरूपेण नियुक्तोऽसौ तत्रैव आमरणं गवेषणा-विभागे परिचालकाध्यापकरूपेण स्वकर्त्तव्यं यथायथं सम्पादयामास । संस्कृत-साहित्य-परिषदस्तु स प्राणस्वरूप एवासीत्, तस्याः सभापति-पदमलङ्कुर्वाणस्यास्य परलोकप्राप्तौ महद्दुःखकारणं सर्वेषाम् ।

'ग्रन्थी भवति पण्डितः' इति सूक्तिस्तु सुविदिता एव, संस्कृत-भाषाध्यापकानामनेकेषामेव नानाग्रन्थदर्शनसौभाग्यं न जायते, निर्दिष्ट-कतिपय-ग्रन्थेष्वेव तेषां विद्वत्ता सीमाबद्धा तिष्ठति । संस्कृत-साहित्य-परिषदध्यापकस्य तर्काचार्यस्य तु यदैव येन ग्रन्थेन प्रयोजनमभूत् परिषद्विपुल-ग्रन्थालयात् तदैव तत्प्राप्तेः सौकर्य्य-मासीत्, तर्काचार्य-महोदयेन अन्तेवासिभिः सह परिषद्गृहमेवाधि-तिष्ठता तदा नानाशास्त्रविषयका बहवो ग्रन्थाः स्वयमेवालोचिताः, अध्ययनाध्यापनैकव्रतस्य तस्य तत्कालीन-श्रम-फलेनैव सर्वेष्वेव दर्शनेषु, संस्कृत-शास्त्रस्य विविधप्रस्थानेषु च अपूर्वं पाण्डित्य-मजायत ।

क्रीड़ादिना समयक्षेपस्तु तस्य स्वभावविरुद्ध आसीत्, परिणतेऽपि वयसि ग्रन्थ-रचनायां विविध-ग्रन्थ-पठन-पाठनादिषु कार्य्येषु च स सर्वदा व्यापृत आसीदिति तु प्रत्यक्षीकृतमेव बहुभिः । वार्द्धक्येन

दृष्टिशक्तिहानिः क्रमशो वर्द्धते इत्याकलय्य तेन बहुश उक्तं "पुस्तकादि-पठना-समर्थो यदा भविष्यामि तदा जीवनधारणमतीव कष्टकरं भविष्यति"। भगवता किं तदर्थमेव सहसासौ तत्सकाश नीतः ?

## अभिनयजीवनम्

बङ्गभाषामयेषु संस्कृत-भाषामयेषु वा नाटकेषु सममेवाभिनय-निपुणस्तर्काचार्या द्वादशवर्षवयस्क एव प्रथमं 'द्रौपदीर वस्त्रहरण' इत्याख्यबङ्गभाषामय-नाटके उत्तराया भूमिकामभिनीय अभिनय-नैपुण्येन उनशीया-ग्राम-निवासिनां तथा कोटालीपाड़ास्थ-विभिन्न-ग्राम-निवासिनां सर्वेषाम् आनन्दस्थानमभवत्, ततः स्वग्राम एव बङ्गभाषामय-'हरिराज'-नाटके हरिराज-भूमिकां 'रिजिया' नाटके च 'रिजिया' भूमिकां, 'देवलादेवी'-नाटके खिजिर-खाँ-भूमिकां, तथा 'बङ्गे वर्गी' नाटके 'भास्कर-पण्डित' भूमिकां संस्कृत-भाषामय-'वेणी-संहारम्' इत्याख्य-नाटके भीमसेनस्य भूमिकामभिनीय श्रेष्ठाभिनेतुर्गौरवमर्जितवान्। अतिरमणीयं रूपं, स्वरे माधुर्य्यं गाम्भीर्यञ्च, भावप्रकाशे अनन्यसुलभा दक्षता अभिनेतुर्यद्यत् अपेक्षितं तत् सर्वं तस्मिन् सुलभमेवासीत्, तदभिनीतासु भूमिकासु कुत्रापि त्रुटीलेशोऽपि सदस्यैर्न प्राप्तेति महदाश्चर्यमासीदभिनय-रसिकानाम्, तस्य अभिनयनैपुण्यमवलोक्य सर्वे सहृदया जना विस्मिता विमुग्धा अश्रु-परिप्लुताश्चाभवन्।

कलिकाताया, वाराणस्यां, पाटलीपुत्रे, कानपुरे, काशिमवाजारे, मूलाजोड़े, चन्दननगरे वा संस्कृत-नाटकादिषु तस्याभिनयदर्शने येषां सौभाग्यमासीत् त एव नितरां विमुग्धा अभूवन्। 'मृच्छकटिकम्' इति रूपके चारुदत्तः, मुद्राराक्षसे चाणक्यः, राक्षसः, चन्दनदासश्च, चण्ड-कौशिके हरिश्चन्द्रः, अभिज्ञान-शाकुन्तले दुष्यन्तः, वेणीसंहारे युधिष्ठिरः, भीमश्च, मध्यमव्यायोगे भीमः, नल-दमयन्तीये नलः, उत्तर-राम-चरिते रामः, प्रशान्त-रत्नाकरे रत्नाकरः, इत्येवं बहुषु

रूपकेषु नायकादिभूमिकामभिनीय स विदग्धजन-प्रख्यातोऽनन्य-साधारणाभिनेतृरूपेणापि सुविदितोऽभवत् ।

प्रवेशात् पूर्वं नेपथ्ये वेणीसंहारे "लाक्षागृहानल-विषान्न-सभा-प्रवेशै" रित्यादि मध्यमव्यायोगे च "भोः कस्यायं स्वरः ? खगशत-विरुते विरौति तारम्" इत्यादि 'वङ्गे वर्गी नाटके च "तानोजी, आज अष्टमीतेइ मायेर विसर्जन हवे" इत्यादि वाक्यानि नाट्य-रसिकेषु चिरस्मरणीयतां गतानीति बहुभिरेव निवेद्यते ।

नाटक-महाकाव्यादि-रचनायां यथा तस्य वैशिष्ट्यं सुविदितं सङ्गीत-रचनायामपि तस्य अपूर्वं नैपुण्यमासीत् । एतद्धि तद्-विरचितनाटकानामपरेषां तल्लिखितसङ्गीतगर्भाणां नाटकानाञ्चा-भिनयं पश्यतां सुविदितमेव ।

विद्यते सूक्तिः—

"अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकेषु सुखानि राजन् ॥"

तस्य संस्कृत-महाविद्यालये नियोगादनन्तरम् एतत् सर्वमेव प्रायेण तेन लब्धमिति मध्यजीवने अन्तिमजीवने च स नितरां सुखी एव आसीदिति तत्र नास्ति सन्देहावसरः । तस्य द्वौ पुत्रौ, पञ्च च कन्याः, सर्व एव विवाहिताः सुखेन संसारयात्रां निर्वाहयन्ति । एकः पुत्रः गङ्गेशचन्द्रः विद्यासागर-महाविद्यालये गणिताध्यापकः, द्वितीयश्च डक्टर सोमेशचन्द्रः उत्तरपाड़ामहाविद्यालये रसायन-शास्त्राध्यापकः । देशविभागात् परं हुगली-मण्डलान्तर्गत-भद्रकाल्यां तस्य द्वितलं भवनं निर्मितमभूत्, तस्य भ्रातृत्रयस्यापि भवनानि सुष्ठु एव निर्मितानि ।

स्वधर्मनिष्ठः स धर्मगुरूणां स्वनामधन्यानां सीतारामदास-ॐकारनाथ-महोदयानामतीव प्रियपात्रमासीत् । यस्मिन् कस्मिन्नपि सत्कार्ये तस्योत्साहः आनुकूल्यञ्च, यस्य कस्यापि विपदि तस्य

दुःखानुभूतिः औदार्यञ्च सर्वेषां प्रीतिकारणमासीत् । महानुभवस्य तस्य मुखे कदापि कस्यापि निन्दा न केनापि श्रुतेति अनन्य-साधारणं तस्य चरित्रवैशिष्टयमवर्त्तत । तस्य गुणराजि-वर्णनावसरे एतदेव संक्षेपेण वक्तुं युज्यते यत् सुविशेषणन्तु तस्मिन् सर्वमपि प्रयोक्तुं शक्यते, कु-विशेषणन्तु स्वल्पतोऽपि न तत्र प्रयोज्यमिति ।

## अध्यापन-कुशलता

तस्य अध्यापन-कुशलताया दृष्टान्तमुखेन आमेरिकास्थित-हारभार्ड विश्वविद्यालयस्य प्राच्यविद्या-विभागीय-प्रधानाध्यापकेन इङ्ग् ल् (Ingle) महोदयेन यदुक्तं तदेवोपस्थाप्यते । महायुद्धावसरे कलिकातास्थितेन तेन संस्कृतभाषा-शिक्षार्थं राजकीय-संस्कृत-महाविद्यालयमागत्य तर्काचार्य्य-महोदयस्यान्तेवासी अभवत् । वङ्गभाषानभिज्ञस्य आङ्गलभाषाभाषिणश्छात्रस्य अध्यापना कथं तर्काचार्य-महोदयेन कृतेति प्रश्ने तस्योत्तरम् "ज्ञानमूर्त्तेस्तर्काचार्यात् ज्ञानलाभार्थिना मयैव संस्कृत-भाषा प्रयत्नातिशयेन तथैव आयत्तीकृता यथा अध्यापना-वेलायां किमपि असौकर्यं न भवेत् ।" सरलया भाषया मनोहरं तस्य व्याख्यानादिकं सर्वेषामेव सहजबोध्यमासीत् ।

## देश-हितैषणा

स्वग्रामस्य कथं शिक्षायां, स्वास्थ्ये, चारित्र्ये, रथ्यादिषु च समुन्नतिर्भवेत् प्रथमजीवने तदेवासीत्तस्य प्राथमिकी चिन्ता, स्वदेशस्य समुन्नति-साधने गौरवार्जने स्वाधीनता-लाभे च तस्य महानाग्रहः सर्वैरेव प्रत्यक्षीकृतः । तत्कृत-'प्रशान्त-रत्नाकर'स्थानि—

"येनैव भूतेन समृद्धिभाजां विनिर्मितं सृष्टिकृता शरीरम् ।
तेनैव किं दीनगणस्य कायो न निर्मितस्तेन महामहिम्ना ॥"

"धनिकाः खलु दीनान् अक्षिपातमात्रेणापि नानुकम्पन्ते । तदीय-परिवारास्ततोऽपि मदोद्धताः परुषया वाचा दीननिवहान् व्यथयन्तस्तृप्यन्ति । तत् क एष लोक-संव्यवहारो नाम !"
इत्यादि-वाक्यानि तस्य

## तर्काचार्यस्मृतिसंख्याद्वयस्य

# विषय-सूची

---o---

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

# संस्कृत साहित्य परिषत्

| Vol. LVI Nos. 9-10 | १८९५ शकीययोपोषमाघयोः १३८० बङ्गाब्दीययोः ५६ तम-वर्षस्य ९म–१०म-संख्ये | January & Feb. 1974 |
|---|---|---|

## संस्कृतवाङ्मये एकाङ्कदृश्यकाव्यानि

[ निबन्धकः—श्रीकरुणासिन्धु दासः ]

॥ १ ॥

प्रचलिते नवीने काले संस्कृतवाङ्मयगतानां केषाञ्चित् प्राचीनदृश्यकाव्यानां पर्यालोचना न कथमपि निन्दां भजेत। स्वीकृतमस्माभिर्यत्, अतीतभारतवर्षस्य सामाजिकी आर्थनीतिकी चावस्था नेदानी स्पष्टं प्रतीयते। प्रभवत्सु राजसु प्रायेण तत्-समभ्यर्थितकाव्यकदम्बकमेवात्र केवलं दिग्दर्शनम्। अतः कथं प्रकाशितमासीत् काव्येषु वास्तविकजीवनम् इत्यत्राविष्कारे सीमाबद्धा नः पन्थानः। अपि च, हरिद्वारस्थगङ्गायां पद्माभागीरथ्योः वैचित्रं गौरवं वा कथं सम्भवेत्? तिष्ठतु तत्, अनतिमार्जितानि कानिचित् उपलखण्डानि इहास्माभिः प्रस्तूयन्ते। 'तानि नाम संस्कृत-वाङ्मये एकाङ्कानि दृश्यकाव्यानि।

प्रसङ्गतश्च वक्तव्यम्,—संस्कृतालङ्कारशास्त्रे नाटकशब्दस्यास्ति सुनिर्दिष्टो ह्यर्थः। अधुना तु दृश्यकाव्यस्यार्थे नाटकशब्दस्य प्रचुरः प्रयोगो बङ्गदेशे। रूपकम्, उपरूपकञ्चेति दृश्यकाव्यस्य द्वे श्रेण्यौ, तत्र प्रथमायां दश द्वियीयायां च अष्टादश प्रकाराः। तत्र प्रथमं वै

रूपकं नाटकम्, उपरूपकं च नाटिका। अतो दृश्यकाव्यस्यार्थे नाटकशब्दव्यवहारः प्रधान-व्यपदेशन्यायेन भवितुमर्हति। अत्रार्थे नाटयशब्दस्तु सुप्राचीनः, यथा भरतकृते नाटयशास्त्रे। अयं हि भारते वर्षे साहित्यनीतिशास्त्रेषु प्राचीनतमो ग्रन्थः, नाम्नि चास्य तदानीन्तने कालेऽपि नाट्यकाव्यस्य प्रसिद्धिः सूचिता। इदं हि नाटयशास्त्रं वेदात् नाटयकाव्यस्य दैवीमुत्पत्तिं घोषयामास। संस्कृत-दृश्यकाव्यानां प्राचीनत्वे जनप्रियतादिषु चायमुद्घोषः स्पष्टो दिङ्-निर्देशः। जातिवर्णनिर्विचारेण नाटयामोदः साधारणेभ्यः प्रसारितः। तस्मात् 'सृजापरं वेदं पञ्चमं सार्ववर्णिकम्'—(नाटयशास्त्रम्।)। साहित्यानन्दयज्ञे सर्वेषां निमन्त्रण खलु असाधारणं वृत्तम्।

भरतारिष्टटलयोः आलोचनाभ्यां प्राचीननाटयनीतिः कथञ्चिदव-बुध्यते। उभयोरेव मते लोकजीवनानुकारि मानुषस्य सुखदुःखं यत्र वाङमयमूर्त्या अभिनयपाटवेन च रञ्जिकमनांसि सभाजयति तद् दृश्यकाव्यम्। भरतमुनिना योगिककलारूपेण इद सम्यगवबुद्धम्। 'न तच्छ्रुतं न तच्छिल्पं न सा विद्या न सा कला। न स योगो न तत् कर्म यन्नाटयेऽस्मिन्न दृश्यते॥' सुखदुःखद्वन्द्वं स्वीकृत्यापि विनोदकरणं लोके नाटयमेतद् भविष्यति इति सूत्रितं तत्रभवता। किमिदं विनोदकरणत्वं मनसि निधाय संस्कृतनाटयकविभिर्वियो-गान्तनाट्यकाव्यविरचने अनीहैर्भूयते इति न जाने।

नाटयकलाविश्लेषणस्रोतस्विन्यां ततो वर्षसहस्रं स्रोतांसि विलसन्ति प्राच्यपाश्चात्त्यदेशेषु। तत्रभवतां पाश्चात्त्यपण्डितानां मतानि सश्रद्धं स्मरणार्हाणि। घटनाविन्यासम्, चरित्रचित्रणम्, दर्शकचित्तेषु कुतूहलस्य सृष्टिम्, रङ्गमञ्चसाफल्यञ्च विषयीकृत्य विचित्रो ज्ञानालोकसम्पातः संघटितः। नाटयं हि जीवनप्रकल्प इति सुनीत्यपनीत्योः इच्छापरिपार्श्वयोः युक्तिनियत्योश्च संघातः आधुनिकनाट्यकलाविद्भिर्नितराम् आकाङ्क्ष्यते नाट्यकाव्येषु। वस्तुगत्या संघातो नाटकीयत्वञ्चेति अनर्थान्तरमिदानीं संवृत्तम्, यद्यपि श्रेणीभेदात्तत्र संघातो रूपान्तरं भजे। वार्नार्डशमहोदयः

जीवननीतिगतं संग्राममेव नाट्यं मन्यतेतमाम् । मनोजगति प्रतिक्षणं संग्रामञ्चेत् जीवनं वदामः, नाट्यवस्तु नाटकीयचरित्रञ्च यथा-कथञ्चिद् द्वन्द्वमूलं स्यादेव। संस्कृतनाट्यविचारेऽप्ययमेव समुचितः पन्था इत्यसंशयम् ।

लक्षणीयमेतद् यद् उपर्युक्तानामष्टाविंशति-प्रकाराणां संस्कृतनाट्यकाव्यानां मध्ये पञ्चदशप्रकाराणि खलु एकाङ्कानि भवन्ति । तत्र भाणः, व्यायोगः, उत्सृष्टाङ्कः, वीथी, प्रहसनञ्च रूपकाणि ; नाट्यरासकम्, गोष्ठी, उल्लाप्यम्, प्रेङ्क्षणम्, रासकम्, श्रीगदितम्, विलासिका, हल्लीशः, भाणिकेति च उपरूपकाणि । व्यायोग-नाटयरासकोल्लाप्य-काव्यश्रीगदितेषु प्रख्यातचरितानां वृत्तान्तः, हल्लीशवर्जम् अवशिष्टेषु साधारणानां नीचाशयानाञ्च उपस्थितिः । रासकभाणिकयोर्नायको मूर्खः, नायिका तु प्रसिद्धा । प्रहसनविलासिकयोस्तु निन्दितचरितानामवलम्बनं घटते । प्रहसने हास्यरस एवाङ्गी, विलासिकायां तावत् शृङ्गारः ; वसन-विलासश्चात्र अवश्यकर्तव्यः । बाहुयुद्धेन उद्धत-वाग्व्यवहारेण च विशिष्यते प्रेङ्क्षणम् । गोष्ठया नवदशाः पुरुषाः, पञ्चषाश्च स्त्रियः ; देहमूलकः कामशृङ्गारोऽत्र रसः । भाणे केवलो दुष्टपुरुषः, अस्फुटशृङ्गार-वीररसावस्य मूलरसौ । एकपुरुषकं सप्ताष्ट-स्त्रीजनं बहुताललयसमृद्धं हल्लीशदृश्यकाव्यम् आधुनिकनृत्य-गीतनाटयस्य प्राचीनं रूपं खलु । नाटयरासकमपि कथञ्चिद् ईदृशम् । उत्सृष्टाङ्के साधारणचरितानां समावेशेन करुणप्रचुरो नाटयास्वादः सम्भवति । करुणरौद्रवीराद्भुतभयानकवीभत्सा व्यायोगे स्वाद्यन्ते, शृङ्गारसहितं हास्यं नाटयरासके, हास्य शृङ्गारकरुणाश्च उल्लाप्ये । व्यायोग-गोष्ठी-काव्य-प्रेङ्क्षण-श्रीगदित-विलासिकासु मुख-प्रतिमुख-निवर्हणसन्धयः, केषुचित् तु मुखनिर्वहणसन्धी । वस्तुसमासार्थमपरिहार्योऽयं मार्गः ।

प्रायेण खल्विमानि नाटयानां बहिरङ्गवैशिष्टयानि उल्लिखितानि । तथापि श्रेणीपरिचयं मुख्यञ्च उद्देश्यमनुचिन्त्य चरित्रचित्रणं

मञ्चप्रयोगश्च प्रशस्येते इत्यतो नानर्थकेयं पर्यालोचना। विशेषतश्च रसानामुल्लेखेन प्राचीनसाहित्यनीतिविद आचार्या यथार्थमालोचनम् आरेभिरे। सहृदयहृदयपरितृप्तिर्हि काव्यस्य परमप्राप्तिः, इयमेव भारतीयदृष्ट्या रस इति संज्ञायते। रसिकजनानामप्राकृतायाम् अनुभूतौ करुण-भयानक-वीभत्स-रसात्मकविषया अपि व्यावहारिक-तुच्छत्वमतिक्रम्य सौन्दर्य-लोकमुन्नीता भवन्ति। अतएव दुःख मूलकोऽपि सन् करुणरसः परिणत्यामानन्दमयः।

अन्यच्च किञ्चिदत्र स्फुटमालोचयितव्यम्। दर्शकमनसि कुतूहलस्य सार्वत्रिकी सृष्टिरभिनयसाफल्यं घटयति। बहुलं परिचितं वृत्तान्तं चरित्रञ्च आदाय कथमीदृश आग्रहः सम्भवेत्? वस्तुतो जीवन-सम्पृक्तेन विषयेण जीवनरसिकस्य परिचयः स्वाभाविक एव। साधारणदर्शकानामपि कृते एतत् शोभते। तथाहि अभिनय-चरित्रस्य परिचितिः एकात्मतां घटयति, एषा च रसाभिव्यक्ते-र्मुख्या सोपानश्रेणी। उपस्थापितचरित्रमवलम्ब्य, अनुकूलपरि-पार्श्वस्य उद्दीपनात् पात्रविशेषाभिनीतेन आचरणेन, सूक्ष्मदेहाभि-व्यक्तिभिश्च दर्शकेषु क्षुद्राहङ्कारस्य अपगमेन महान् रसमयः आत्मा उपलभ्यते। वृत्तं चरित्रञ्च चेज् जीवनसम्पर्कि, उपस्थापना चेत् शोभना, तर्हि महत् कुतूहलं जीवति रसिकचेतसि। जीवनविमुखं काव्यं तु रसप्रातिकूल्यमेव आचरेत्। अतएव भरतमुनिना नाट्ये लोकस्वभावानुकारित्वमुपदिष्टम्। तथाहि श्लोकः—

योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः।
सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते॥ इति।

प्रस्तुते निबन्धे कानिचित् एकाङ्कानि संस्कृतदृश्यकाव्यानि इदानीं समालोच्यन्ते।

॥ २ ॥

नाट्यशास्त्रे ऋग्वेदात् पाठस्य ग्रहणंल्लिखित नाट्यस्य कृते। जिज्ञास्यते, किमयं पाठः खलु ऋग्वेदगतसंवादसूक्तानि,

यानि कथोपकथनभङ्ग्या रचितानि क्षुद्राणि नाटयकाव्यानि नामेति। एषु यमयम्योः उर्वशीपुरुरवसोश्च शृङ्गाररसात्मकौ संवादौ। वृत्तान्तनिर्वाचनस्य रसमूर्तिनिर्माणस्य च प्रतिभा अत्र सुव्यक्ता। यमं निकषा यम्याः कामार्तं निवेदनं यमस्य च प्रत्याख्यानमाद्यस्य विषयः। संवाद-चरित्रचित्रण-रसाभिव्यक्तिषु असाधारणम् इदं सूक्तम्। कामार्तिप्रत्याख्यानयोः संघातेन हीदं नाट्यपदवीमारोहति। संवादस्य किञ्चिदत्र उद्ध्रियते—

(यमी) निर्जनप्रदेशेऽस्मिन् त्वत्सहवासस्य कामुकी सञ्जाताहम्।...

(यमः) गर्भसहचरस्ते त्वया सह नेदृशं सम्बन्धं काङ्क्षति। सहोदरा त्वम् अगम्येति। स्थानञ्चेदं न निर्जनम्...

(यमी) यमस्त्वम् अहं यमी, मामभिलाषुको भव—

(यमः) व्यथादायिनि, अपसर, जनान्तरं भजस्व—

(यमी) कीदृशोऽसौ भ्राता यदि सत्यपि तस्मिन् अनाथाऽस्मि भगिनी संवृत्ता मे कीदृशी वासौ भगिनी यदि सत्यामपि तस्याम् भ्राता दुःखितो भवेत्! अभिलाषमूर्छिताऽहमेवं वावद्मि।

(किं भ्राता सद् यदनाथं भवाति
किमु स्वसा यन्निर्ऋतिर्निगच्छात्।
काममूता वह्वे तद्रपामि
तन्वा मे तन्वं संपिपृग्धि ।। ऋ० १०।१०।११)

अहो यम! कापुरुषस्त्वमसि। न बुध्यते कीदृशं ते मनः कीदृशञ्च हृदयम्! अन्या किल अनायासं त्वाम् आलिङ्गितुं शक्नोति परन्तु मयि पराङ्मुखस्त्वम्।

(वतो वतासि यम नैव ते मनो हृदयं चाविदाथ।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम्।
ऋ० १०।१२)

(यमः) यमि ! त्वमपि पुरुषान्तरं गच्छ। तत्सहवासं व्यवस्थापय। तदेव ते हिताय भवेत्।

(अन्यमू षु त्वं यम्यन्य उ त्वां
परि ष्वजाते लिबुजेव वृक्षम्।
तस्य वा त्वं मन इच्छा स वा
तवाऽधा कृणुष्व संविदं सुभद्राम्॥
(ऋ० १०।१०।१४)

भवतु नामात्र महत्तरजीवनसंग्रामस्य उत्तापः अनुपस्थितः। किन्तु कामैकपरायणत्वाद् ऊर्ध्वगतेर्व्यञ्जना नास्माभिर्विस्मर्तुं पार्यते।

उर्वशीपुरुरवसोरुपाख्याने शपथभङ्गात् क्षुब्धहृदया उर्वशी दयितं पुरुरवसं विहाय चलितुं प्रवृत्ता। बहुधा उपसान्त्वयितुं यत्नः क्रियते पुरुरवसा। किन्तु अरण्ये रुदितस्ति सर्वम्। आत्मघाती भवेयम् इत्युक्त्यापि न शशाक तां निवर्तयितुं राजा। अपरिवर्तनीयमुर्वशीमनोभावमभिमुखीकृत्यासन्नवियोगव्यथाकुलनायकस्य हाहाकारः करुण-विप्रलम्भशृङ्गाररसयोः साधु उपस्थापनां करोति।

(उर्वशी) किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव।
पुरूरवः पुनरस्तं परेहि दुरापना वात इवाहमस्मि॥
(ऋ० १०।९५।२)

न विद्यते उर्वशीमनसि क्षोभान्तरम्। सपत्नीनामपेक्षया भूयः प्रेमा तया उपभुक्तः। परन्तु शपथभङ्गं न मर्षयति सा। (उर्वशी) उक्तपूर्वमासीत् मया किं नाहं मर्षयामि, यतो ज्ञातपूर्वमासीत् तत् मे तदश्रुत्वा इदानीं कथं पृथिवीपालनकर्म परित्यज्य वृथा लपसि ?

पुत्राय उर्वशीप्रोक्ता समाश्वासवाणी :—मा पुत्रस्तव सकाशम् अश्रु विसर्जयेत्, न वा क्रन्देत्। सोऽसौ मया प्रेषणीयः। आत्मघातोद्यतं राजानं प्रति तयोच्यते—

पुरूरवो मा मृथा मा प्रपप्तो मा
त्वा वृकासो अशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि सन्ति
सालावृकाणां हृदयान्येता ॥
(ऋ० १०।९५।१५)

अविस्वर्गसुखस्य अस्फुटेन आश्वासेन इदं नाट्यवस्तु समाप्यते । संस्कृतालङ्कारशास्त्रदृष्ट्या पुरुरवाः खलु धीरललितनायकः। समीचीना तस्य आर्तिः । परन्तु स्वकर्तव्यत्यागिनस्तस्य दुःखेन नास्ति लोकस्य कथञ्चित् सम्बन्धः । स्वल्पे कथावस्तुनि प्राचीनघटनाम् अप्युपन्यस्य कविना पूर्णाङ्गी नाट्याकृतिर्निर्मिता इति तु सप्रशंसम् उल्लिख्यते ।

गोधनसंग्राहिभिः पणिभिः इन्द्रदूत्याः सरमायाः संवादः सूक्तान्तरस्य (ऋग् १०।१०८) विषयः । इन्द्रस्य महिमानम् अजानन्तोऽपि पणिनः उपस्थिताय तस्मै गोगणं दद्युः सखिभावेन, सरमा तु इन्द्रस्य अलौकिकं वीर्यं व्याख्याय गोधनम् इच्छति। पणिभिरुक्तम्——अस्माकमायुधाः सन्ति तिग्मा इति । पणिश्रेष्ठैश्च रक्ष्यते गोगणः हर्तुमशक्यतया इति स्पष्टमुक्तम् । (अयं निधिः सरमे अद्रिबुध्नो गोभिरश्वेभिर्वसुभिर्न्यृष्टः । रक्षन्ति तं पणयो ये सुगोपा रेकु पदमलकमा जगन्थ ॥ ऋ० १०।१०८।७) ॥ सरमां स्वसारं मन्यमानास्ते गोगणं दातुमिच्छन्ति प्रेम्णा, न तु भयात् (स्वसारं त्वा कृणवै मा पुनर्गा अप ते गवां सुभगे भजाम । (ऋ० १०।१०८।९) । सरमा तु नेच्छति तथा (नाहं वेद भ्रातृत्वं नो स्वसृत्वम् ऋ० १०।१०८।१०) ।

मन्ये, आर्यानार्यसंघातः कश्चिदत्र उपस्थापितः ।

अगस्त्य-लोपामुद्रा-तत्पुत्राणां संवादः (ऋ. १।१७९), विश्वामित्रनदीनां (ऋ. ३।३३)', इन्द्रमरुताम् (ऋ. ४।१८), इन्द्रवरुणयोः (ऋ. ४।४२), वसिष्ठ-तत्पुत्राणाम् (ऋ. ७।२३), इन्द्र-नेम-भार्गवयोः (ऋ. ८।१००), इन्द्रवसुक्रयोः (ऋ. १०।२८), इन्द्रेन्द्राणी-

वृषाकपीनाम् ( ऋ. १०।८६ ) च संवादा नाट्यगुणान्विताः। ऋग्वेदसंहितायाम् अग्निना देवानां संवादः सूक्तत्रये उपलभ्यते (ऋ. १०।५१-५३)। कीथ्महोदयमतेन अथर्ववेदीये सूक्ते एकस्मिन् (५।११) देव निकषा अथर्वणो दक्षिणार्थमावेदनेऽपि नाट्यरूपमेव। किञ्च ऋग्वेदे ( १०।११९ ) मत्तस्य इन्द्रस्य स्वगतोक्तिरत्रोल्लेखमर्हति। तदेवं खीष्टजन्मनः पूर्व्वं सार्धवर्षसहस्रकाले रचितेषु एषु सूक्तेषु संस्कृतभाषाश्रितस्य एकाङ्क-दृश्यकाव्यस्य जन्म परिलक्षितम्। यज्ञसभासु शूद्रकर्त्तृकसोमलताहरणाद्यनुष्ठानेषु अभिनयः प्रचलित आसीत्। नाट्यशास्त्रे यजुर्वेदादभिनयानां ग्रहणमुक्तं नाटकेषु।

कानिचित् पूर्णाङ्गानि एकाङ्कनाट्यकाव्यानि उपजहार महाकविर्भासः, यः खलु कविकालिदासेन मालविकाग्निमित्रनाटके सश्रद्धमुल्लिखितः। सुबोध-सरलगिरा रचितानि तानि घटनाविन्यासेन, चरित्रचित्रणेन, मार्जितवाग्दीप्त्या रसेन च अतुलनीयानि। काव्यनाट्यप्लावनप्लुतसंस्कृतवाङ्मयभूमौ भासेन शुद्धानि दृश्यकाव्यानि सृष्टानि इति आश्चर्यम्। सति प्रयोजने नाट्यशास्त्रीयनीतिमपि उपेक्षते भासकविः। तथाहि संस्कृतसाहित्ये ऊरुभङ्ग इति केवलं वियोगान्तकं दृश्यकाव्यं तेनैव रचितम्। मृत्युस्तत्र महीयान् दर्शितः।

पञ्च हि भासकृतानि एकाङ्कदृश्यकाव्यानि। दूतवाक्यम्, दूतघटोत्कचम्, कर्णभारम्, मध्यमव्यायोगः ऊरुभङ्गञ्चेति। सर्वाण्येतानि महाभारतवृत्ताश्रयाणि। तत्र मध्यमव्यायोगः, ऊरुभङ्गदूत-घटोत्कचे, उत्सृष्टाङ्ककाव्ये, कर्णभारदूतवाक्ये च मन्ये व्यायोगौ। दूतवाक्ये दूतघटोत्कचे च दुर्योधनसभायां पाण्डवदूतरूपेण कृष्णस्य घटोत्कचस्य च दौत्यं वर्ण्यते। मध्यमव्यायोगे घटोत्कचहस्ताद् ब्राह्मणपुत्रं रक्षितुकामस्य भीमसेनस्य हिडिम्बासाक्षात्कारो विषयः। कर्णभारे पुनः ब्राह्मणवेशाय इन्द्राय कर्णेन कवचकुण्डलदानम् उपस्थाप्यते। भारतीयविचारदृष्ट्या दूतवाक्ये

वीराद्भुतौ रसौ, कर्णभारदूतघटोत्कचयोः वीरकरुणौ, मध्यमव्यायोगे वीररौद्रकरुणभयानकाः, ऊरुभङ्गे च वीरशान्तकरुणा रसाः।

दूतवाक्ये सर्वे राजानो दुर्योधनेन मन्त्रणासदसि आहूताः। सेनापतिनिर्वाचनं तत्र विषयः। सदस्यानामेकैकं पथि समभ्यर्च्य राजा दुर्योधनः सर्वेभ्य आसनानि निवेदयति। रङ्गमञ्चे न कोऽपि सदस्यः उपस्थापितः, केवलं दुर्योधनः सदस्यानां मतस्य सारांशं सभायामुच्चारयति सामाजिकानां कृते किल। तदानीं पाण्डवदूतस्य कृष्णस्य उपस्थितिर्निवेदिता। कृष्णस्तुतिम् असहमानेन दुर्योधनेन वार्ताहरो नितरा भर्त्सितः। न कश्चित् दण्डायमानः कृष्णमभिनन्दयेत् इति आदिश्य द्रौपदीधर्षणचित्रपटमादाय चित्रार्पितपाण्डवान् विनिन्द्य सुखायते, कौरवराजः। प्रवेशितं श्रीकृष्णम् अभिनन्दयामासुः सर्वे दण्डायमानाः सन्तः। साधारणदूतोचितसत्कारेण कृष्णं स्वीचकार दुर्योधनः।

निवेदिते मैत्रीप्रस्तावे दुर्योधनस्य उक्तिः—न पाण्डवाः पाण्डोरौरसास्तनया इति नास्ति तेषां राज्ये अधिकार इति। कृष्णेन च प्रत्याक्षिप्यते—विचित्रवीर्यपत्न्यामम्बिकायाम् उत्पन्नो व्यासदेवतनयो धृतराष्ट्रः कथं राज्यमवाप इति। बाहुबलैकपरायणस्य दुर्योधनस्य दृष्ट्या कंसघातिनि कृष्णे मैत्रीकथा न शोभते। कापुरुषस्यास्य राज्यमज्ञातम्। पाण्डवाश्च देवसम्भवा इति न तेषां मानुषैर्धार्तराष्ट्रैर्मैत्री सङ्गच्छते। इत्येवं बहुधा विनिन्द्य कृष्णं बद्धुम् उत्सहते दुर्योधनः। स्वैराचारो दाम्भिकः कुशासकः अयम्, संयमी परिणामदर्शी कृष्णस्तद्विरुद्धगुणैर्विभाति नाट्येऽस्मिन्। अन्तिमे अंशे अलौकिकशक्तिं दर्शयन्त कृष्णं निर्वर्ण्य तत्कालीनरुचिम् एव स्वीकरोति कविः। आधुनिकदृष्ट्या भवेदिदमस्वाभाविकम् अनाटकीयञ्च। न केनापि कविना कालरुचिः सर्वथा उपेक्षितुं शक्या इति नोल्लेखमर्हति।

कुरुक्षेत्रसमरे सम्मिलितैः कौरवैर्निहते अर्जुनपुत्रे अभिमन्यौ यदा

शकुनिप्रभृतयः पैशाचिकेन उल्लासेन मत्ताः, तदा कुरुवृद्धो धृतराष्ट्रः, तत्पत्नी गान्धारी, कन्या च दुःशला भावि अमङ्गलमाशङ्क्य विषादमापन्ना वर्तन्ते। दुःशलयोच्यते—अभिमन्युं हत्वा वधूमुत्तरां विधवां कुर्वाणेन स्वपत्नीवैधव्यमेव आयोजितम् इति।

न जानाति मन्दभाग्येयम्—अभिमन्युवधस्य कारणं हि तस्या एव स्वामी जयद्रथः। विज्ञाय सर्वं रोरुद्यमानां दुःशलां भाविवैधव्य-शङ्काकुलां नोपसान्त्वयितुं शेकतुः पितरौ।

दूतघटोत्कचस्य करुणरसात्मकमिदं दृश्यं मर्मस्पर्शि किल। तत्र तु पित्रा शोकसन्तप्तहृदयेन निन्दितस्य दुर्योधनस्य ईदृशं युक्ति-जालम्—छलेन भीष्मवधाद् यदि पाण्डवानां हस्ता न भग्नास्तर्हि छलेन अभिमन्युवधात् कथं कौरवाणां हस्ता भग्नाः स्युरिति। आपाततो विजयी दुर्योधनो बहुधा निन्दति अर्जुनम्। पुत्रवध-प्रतिकारार्थिनोऽर्जुनस्य शपथमुपहसति सः।

अस्य नाट्यकाव्यस्य प्रधाने अंशे पाण्डवदूतेन घटोत्कचेन कौरवाणामुद्धतो वाग्विन्यासो वर्णितः। घटोत्कचः सविनयं कृष्णवाक्याद् धृतराष्ट्राय कुलविरोधस्य अपकारं निवेदयति, परिहस्यते चासौ दुःशासनप्रभृतिभिः। घटोत्कचदृष्ट्या कौरवा हि राक्षसेभ्योऽपि हीनाः, यतो राक्षसा अपि सुप्तान् भ्रातॄन् न अग्नि-संयोगेन हन्तुमुत्सहन्ते। सर्वं निर्णेयं युद्धक्षेत्रेषु इति प्रत्युक्तं दुर्योधनेन। साधुबुद्धिं प्रति घटोत्कचस्य अन्तिमेन निवेदनेन नाट्यमिदं समाप्तम्। युद्धक्षेत्राद्बहिः शान्त्यर्थम् एताः प्रचेष्टाः व्यर्था अखिलं कुरुकुलं शनैः शनैः निघ्नन्ति।

दुर्योधनचरित्रस्य परिणामः ऊरुभङ्गनाट्यकाव्ये। शवाकीर्णे निर्जने कुरुक्षेत्रश्मशानप्रान्तरे कृष्णनिर्देशाद् भीमसेनेन गदाघातेन दुर्योधनो भूतलाश्रयी। गदायुद्धं नाटेऽस्मिन् प्राकृतपुरुषमुखेन वर्णितम्। भीमेन युद्धनीत्यामवमतायां क्रुद्धो जायते बलरामः। मृत्युशय्याश्रिताय तु दुर्योधनाय शान्तिः स्वदते। पिता धृतराष्ट्रः, माता गान्धारी, वधूद्वयम्, पुत्रश्च दुर्जयः सर्वे समागताः। प्राङ्-

मरणात् पुत्रस्नेहेनाकुलो दुर्योधनः। नेद दृश्यं विस्मर्तुं शक्यम्। बालत्वात् पितरमनुचिकीर्षुं पुत्रं प्रति दुर्योधनेन उपदिश्यते—भीमसेनसाहायकं प्राथ्यंतामिति। मुमूर्षोः स्नेहमयं बन्धनं छिन्नं दृष्ट्वा केवलं पुत्रस्य कृते जीवतु दुर्योधन इति विचिन्त्य शोकाप्लुतहृदया भवामः।

कौरवाणां सैनापत्यं गृह्णानस्य कर्णस्य सर्वा अस्त्रपरीक्षा व्यर्था भवन्ति। परशुरामाभिशापं स्मृत्वा स्मृत्वा स विह्वलस्तदानीमेव ब्राह्मणवेशाय इन्द्राय प्रार्थिने कवचकुण्डलं दत्तवान्। मृत्युम् अवश्यम्भाविनं ज्ञात्वापि दानान्न विरमति कर्णः।

आलोचितपूर्वाद् भासकृतनाटयचतुष्टयाद् भिद्यते मध्यमव्यायोगः। भीमहिड़िम्बयोः साक्षात्कारेण समाप्तमिदं नाटयकाव्यम्।

सर्वाण्येतानि काव्यानि यथार्थकथोपकथनैर्विशिष्यन्ते।

लक्षणीयमिदं यत् साहित्यदर्पणे दृष्टान्तरूपेण यानि नाटचकाव्यानि उल्लिखितानि, तत्र भासरचितानामुल्लेखो नास्ति। तत्र हि लीलामधुकर-वसन्ततिलकनामधेयं भाणद्वयम्, सौगन्धिकाहरणधनञ्जयविजनामकं व्यायोगद्वयम्, शर्मिष्ठाययातिनामकः उत्सृष्टाङ्कः, कन्दर्पकेलि-धूर्तचरित-लटक-मेलकसमाख्यं प्रहसनत्रयम्, रैवतमदनिकेति गोष्ठी, देवीमहादेवनामकम् उल्लाप्यम्, यादवोदयकाव्यम्, वालिवध-नामकं प्रेङ्क्षणम्, मेनकाहितम् इति रासकम्, क्रीड़ारसतालनामकं श्रीगदितम्, केलिरैवतकसमाख्यो हल्लीशः, कामदत्ता-दानकेलिकौमुदीनामकं भाणिकाद्वयम्, मालविकेति वोथीनर्मवती-विलासवती-समाख्यं नाटचरासकमुउल्लिखितमस्ति। विशिष्टकाव्यरूपेण एषां कस्यापि नोल्लेखो दृश्यते। मन्ये, विश्वनाथेन तत्कालीनानि एव नाटचानि स्वग्रन्थे उल्लिखितानि।

अत्रैव चतुर्भाणीति भाणचतुष्कस्य निर्देश उचितः। ते नाम भाणा उभयत्राभिसारिकाः, पद्मप्राभृतकम्, धूर्तविटसंवादः, पादताड़ितकं च। वररुचि-शूद्रकेश्वरदत्त-श्यामिलकाः क्रमेण एषां कवयितारः। खीष्टीयदशमशताब्द्याः प्राक् ते रचिता इति

निश्चितम् । पद्मप्राभृतक-मृच्छकटिकाभिधेयं नाट्यकाव्यद्वयम् एकस्यैव शूद्रककवेः सृष्टिरिति रचनासादृश्यात् अभिनवविषय-व्याख्यानाच्च प्रतीयते । उभयत्राभिसारिकायां नायकेन कुवेरदत्तेन अनुरुद्धो विटो नायिकां नारायणदत्ताम् उपसान्त्वयितुं प्रचलति । पद्मप्राभृतके कर्णीपुत्रमूलदेवस्य निर्देशाद् देवसेनामनोभावं ज्ञातुं याति शशः, ततश्च नायिकादत्तं पद्ममादाय प्रत्यावर्त्तते सः । धूर्तविटसंवादे विटो वर्षणसिक्तेन पथा विश्वलक-सुनन्दागृहं गत्वा कामकलातत्त्वं पर्यालोचयति । पादताड़ितके तौण्डिककिविष्णुनाग-नामकस्य राजपुरुषस्य शिरसि मदनसेनिकया पादो न्यस्त इति प्रायश्चित्तसभां गच्छति विटः । केषाञ्चिन्मते विष्णुनागेन शिरः संस्कार्य्यं जलेन, इतरेषां मते ईदृशपशुस्पर्शदोषक्षालनाय मदन-सेनिकया प्रायश्चित्तिः कार्या, मतान्तरे तावत् मदनसेनिकया व्यवहृतं पाद्यं जलं पीत्वा तत्र स्नात्वा च प्रायश्चित्तं भवेत् । सिद्धान्ते पुनः सभापतिशिरसि मदनसेनिकया पादस्य न्यासो व्यवस्थापितः । एवं परिहासेन तदानीन्तनसमाजव्यवस्थामुपस्थापयति चतु-र्भाणी ।

वामनभट्टवाणकृते शृङ्गारभूषणे (१५०० खीष्टाब्दीये) वसन्तोत्-सवसन्ध्यायां विलासशेखरो नाम विटः अनङ्गमञ्जरीगृहं गच्छन् वेश्या-कुक्कुटयुद्धादि स्वगतं वर्णयति। रामभद्रदीक्षितकृते शृङ्गार-तिलके (खीष्टीयसप्तदशशतकीये) पतिगृहं गतायां हेमाङ्गी-नायिकायां क्षुब्धो भुजङ्गशेखरो वेश्यापल्लीमार्गेण गच्छन् दृश्यमानं सर्वं वर्णयति। शङ्करकृते सारदातिलके कोलाहलपुरस्थान् शैववैष्णवान् उद्दिश्य उपहासो वर्षितः । कोटिलिङ्गयुवराजकृते रससदने नायकेनानुरुद्धो विटो नायिकामादाय मार्गादिषु भ्राम्यति । नगरात् ललनाजनेना-हूतः स तत्र गच्छति, नायकनायिकयोश्च तदा मेलनं सघटितम् । नल्लाकविरचितं शृङ्गारसर्वस्वम्, वत्सराजकृतं कर्पूरचरितम्, रङ्गाचार्यकृतं पञ्चवाणविजयम्, श्रीनिवासाचार्यकृतं रसिक-रञ्जनम्-इत्येते अपि भाणाः ।

महेन्द्रविक्रमवर्मणा कृतो मत्तविलासः खलु प्राचीनं प्रहसनम् । हर्षवर्धनकालेऽस्य रचनेति कथञ्चित् सिद्धान्तः । काञ्चीनगरीय-पल्लवराजस्य सिंहविष्णुवर्मणः पुत्रोऽयं कवयिता इति ग्रन्थारम्भे कथितम् । अत्रापि प्रस्तावनानाम स्थापनेति ।

कपालिदेवसोमयोः पानमत्तयोर्विलासोऽत्र वर्ण्यते । कपाली मद्यपानत्यागं प्रतिज्ञायापि प्रेयसीसमनुरुद्धस्तदानीमेव प्रतिज्ञां त्यजति । तन्मध्ये हरनयनहुतभुजा दग्धो मदन एव सुरारूपं लेभे इत्यतः अमृतत्वं सुरायाः । तेनोच्यते—

पेया सुरा प्रियतमामुखमीक्षितव्यं
ग्राह्यः स्वभावललितोऽविकृतश्च वेशः ।
येनेदमीदृशमदृश्यत मोक्षवर्त्म
दीर्घायुरस्तु भगवान् स पिनाकपाणिः ।। इति ।

नष्टं कपालमुपलक्ष्य शाक्यभिक्षुणा कपालिनस्तुमुलं वाग्युद्धं प्रवृत्तम् । भिक्षुणा खलु पानपात्रं देवसोमा इति द्वयमवलम्ब्य संघातः प्रस्तुतः । मात्र कोऽपि विवादं समाधातुं शशाक । विवदमानाभ्यां धर्माधिकरणं गच्छद्भ्यां पथि उन्मत्तजनात् कपालं प्राप्तम् । भिक्षुं प्रसादयन् शैवकपाली पात्रं लेभे । सात्र-लीलगिरा ग्राम्यताऽभावेन च विशिष्यते इदं प्रहसनम् ।

शङ्खधरकविराजस्य (ख्रीष्टीयद्वादशशताब्द्यां) लटकमेलकम्, ज्योतिरीश्वरकविशेखरस्य (ख्रीष्टीयपञ्चदशशताब्द्यां) धूर्तसमागमः, जगदीश्वरस्य हास्यार्णवः, गोपीनाथचक्रवर्तिनः कौतुकसर्वस्वम्, सामराजदीक्षितस्य (सप्तदशशताब्द्यां) धूर्तनर्तकः, लक्ष्मणमाणिक्य-देव-पुरोहितस्य कौतुक-रत्नाकर इति प्रहसनानि । अपि च वत्स-राजीय हास्यचूडामणि-सैरन्ध्रिका-सागरकौमुदी-दानकेल्यानन्दकोश-बृहत्सुभद्रक-भगवदज्जुकानि उल्लेखार्हाणि वर्तन्ते । स्त्रीलोकस्य कृते राज-राजपुरुष-गुरुशिष्यादीनां निन्दितानि कर्माणि एव आलोचितानि । सर्वमेतत् कवीनां लोकव्यवस्थापर्यवेक्षणं प्रकटयति ।

भासमनुसृत्य परवर्तिनि काले केचिद् व्यायोगा रचिताः। तेषु वत्सराजकृतः किरातार्जुनीयव्यायोगः, विश्वनाथस्य सौगन्धिकाहरणम्, काञ्चनपण्डितस्य धनञ्जयविजयः, मोक्षादित्यस्य भीमविक्रमव्यायोगः, प्रह्लाददेवस्य पार्थपराक्रमः, रामचन्द्रस्य च निर्भयभीमः उल्लेखमर्हन्ति। प्रायेण सर्व एवैते महाभारतकथाश्रिता इत्यहो माहात्म्यं महाभारतकाव्यस्य।

अधुना पश्चिमवङ्गदेशे केचन संस्कृतज्ञा दृश्यकाव्यरचनासु मञ्चप्रयोगेषु च कृतयत्ना वर्तन्ते। प्राच्यवाणी-संस्कृतसाहित्य-परिषदादयः संस्था नवीनकौशलेन संस्कृतनाटकमुपस्थाप्य सामाजिक-चेतांसि हरन्ति। सम्प्रति वुड़ोदा–छद्मनामतिरस्कृतस्य 'धरित्री-पतिनिर्वाचनम्' 'अथ किम्' इति च प्रहसनद्वयम् एतत्कालीनराज–नीतिकघटनाप्रकारमुपस्थाप्य ख्यातिं गतम्। वीरेन्द्रकुमारभट्टाचार्य-कृतं 'वेष्टनव्यायोगः' 'शरणार्थिसंवादश्चे'ति व्यायोगद्वयमपि उल्लेखम् अर्हति। तदेवम् एकाङ्कदृश्यकाव्यरचना इदानीमपि प्रचलति संस्कृतगिरा इति महदिदं सन्तोषकारणम्। आधुनिकसंस्कृतनाटक–रचनाप्रयासस्य पूर्णं पर्यालोचनं प्रतीक्षामहे।

स्वच्छन्दहासेन, ललितपदविन्यासेन, विद्रूपवाणेन वा संस्कृता-श्रितानि एकाङ्कदृश्यकाव्यानि लोके विनोदकरणानि भवन्ति। लोकस्य सुखदुःखसमन्वितं स्वभावं यथाशक्ति निर्णीय काव्या-न्येतानि सात्त्विक-मानविकबोधम् उल्लासयन्ति इति अनवद्या संघटना खल्वियम्।

—o—

# श्रीरामकृष्णचरितम्

( पूर्वानुवृत्तम् )

[ निबन्धकः—श्रीदीननाथ त्रिपाठी नवतीर्थः, महाचार्यः ]

अबोधि चित्ते चिदियं कथं स्यान्माष्टास्तदा नैव नु देवदेव ।
कथं भवेन्मूर्त्तिरवेयते वै तत्तु प्रकामं प्रचरद्विधानम् ॥१॥
लोकैर्मृदो यैः प्रतिमाऽर्च्यते ते सम्बोधनीयाः प्रतिमेश्वरो नो ।
परन्तु तस्याः पुरतः स ईशः सम्पूजनीयः खलु भक्तिमार्गेः ॥२॥
श्रुत्वा वचस्तस्य न रामकृष्णस्तृप्तोऽवदद् भोः कलिकातया वै ;
एतत्प्रकृत्या भवतां नगर्य्यां परोपदेशे गतया पटुत्वम् ॥३॥
प्रबोधनं वक्तृतया परेषां मतं भवेत् साम्प्रतिकं जनानाम् ।
विशेषतोऽमी कलिकातया ये वसन्ति लोका प्रवदन्ति चैतत् ॥४॥
स्वात्मानमेवेह खलूपदेष्टा को वा न तत्रापि भवत्युपायः ।
अहो बतेदं कलिनिष्ठनृणां यूयं परान् बोधयथातिचित्रम् ॥५॥
यस्येदमत्यन्तविशालविश्वं तिर्यङ्मनुष्यार्कनिशाकरान्तः ।
सृष्टचै तथास्यापि सुपालनायै तालप्रसूसर्जनतो धृतं वै ॥६॥
रक्षार्थमेषामसुभृद्गणानां पित्रोरकारि स्वयमेव माया ।
प्रयोजनं चेद् भविता स एव प्रबोधयिष्यत्यखिलं कथं नो ॥६॥
सर्वे प्रकामं विहिता उपाया येनेश्वरेणेह कृता जनानाम् ।
मृदोऽर्चना चेत् प्रतिमा-प्रसिद्धा चिदात्मकस्तेन वदिष्यते तत् ॥८॥
मूर्तेर्मृदश्चेदपराध एवं कृतेऽर्च्चने किं न स बुध्यते वै ।
उपास्यते तेन परेश्वरोऽसौ सन्तुष्यते तेन तदर्चनायाम् ॥९॥
कृते परेषां कुत आगता ते, विभावनेयं फलमेतया किम् ।
स्वयं तव स्याद् यत एव बोधो भक्तिर्यथा वा कुरु तत्र यत्नम्॥१०॥
अथानया तस्य गतस्तु दर्पो निःशेषितः सोऽथ विचिन्तयन् वै ।
देवेन तन्नाग्र्यमिदं यदुक्तं परावबोधेन कथं फलं मे ॥११॥

नाद्राक्षमीशं न च बुद्धवांस्तं न तत्र भक्तिर्व्यदिता ममासीत् ।
स्वयं न चाप्नोति शयस्य धामाह्वयत्यसौ शङ्करसंज्ञमेतम् ।।१२।।
जानामि नेशं न शृणोमि वाचं तस्याहमत्रान्यजनं कथं वा ।
प्रबोधयामीश्वरतत्त्वमित्थं विचित्रमेवं परबोधकार्यम् ।।१३।।
निर्लज्जकर्मेदमहो अबुद्धेरज्ञाततत्त्वोऽपि यदीश्वरं सः ।
मूढः परं वाचयतीह मोहान्नूनं प्रमत्तो विषयेषु मग्नः ।।१४।।
शास्त्रं किमेतद् गणितं नु काव्यं किं वेतिवृत्तं परबोधनार्हम् ।
येनापरो बोध्यत इष्यमाणः को वात्र लोके शृणुयादिदं मे ।।१५।।
ईशस्य तत्त्वं खलु सत्यमेतद् यदुच्यतेऽनेन महात्मना प्राक् ।
प्रयोजनञ्चेत् स च लोकसिद्धः स्वस्योपदेष्टा
स्वयमीश्वरोऽसौ ।।१६।।
विचारयन्नेव महेन्द्रगुप्तो ह्यातुं वितर्कं समय चकार ।
श्रीरामकृष्णेन यथान्तिमोऽयं तथाद्य आसीत् प्रथमोऽस्य तर्कः ।।१७।।
तथास्य देवेन हिताय चोक्तं क्वाहो महेन्द्र ! प्रतिमां मृदस्त्वम् ।
संश्रित्य पूजाभवदो यथावत् का हानिरस्यास्तु समर्चनायाः ।।१८।।
अर्चा प्रतीके यदि मृत्तिकाया अर्थोऽस्ति तस्याः खलु तेऽर्चनायाः ।
जानीहि नानाविधमित्थमेवं स्वोपासनं सृष्टमिहेश्वरेण ।।१९।।
तत्त्वार्थबोधेऽस्त्यधिकारिभेदः सर्वो न सर्व्वेष्ववनौ समर्थः ।
हस्ती वटैधः पचते च दग्ध्वा किमल्पशक्तिर्मनुजस्तदत्ति ।।२०।।
इयं विचित्रा वसुधातिसृष्टा तेनेश्वरेणैव कृतैः प्रभेदैः ।
मध्याधमाभ्यामपि चोत्तमेन व्यवस्थयेत्थं विहिता प्रणाली ।।२१।।
कस्याश्चिदस्तीह यथा जनन्या गेहेऽर्भकाणां खलु पञ्चकञ्च ।
मत्स्योपसम्भारो यदोपनीतो मातानुरूपं स्वगृहे करोति ।।२२।।
एकार्भकार्थं कति भर्जनानि प्रियापरार्थं पचतीव सूपम् ।
कृते च कस्याम्लमिति प्रकामं पलान्नपाकं च कृतेऽपरस्य ।।२३।।
यद्रोचते तेमनमन्नमित्थं यस्मै यथा शक्यसहं तथैव ।
धात्री विधत्ते मनसा विविच्याप्येवं स ईशो विदधाति
धर्मान् ।।२४।।

श्रुत्वा महेन्द्रोऽज्ञतया स्वतर्कं धिङमन्यते स्मैव महामनस्वी ।
अथ प्रकाशं सकलं यथाज्ञं वाढ़ं तथाङ्गीकुरुते स्म दक्षः ।। २५ ।।

इति श्रीरामकृष्णचरिते द्वितीयोऽध्यायः समाप्तः ।।

---

## चतुर्थः परिच्छेदः

संसारार्णवघोरे यः कर्णधार-स्वरूपकः ।
नमोऽस्तु रामकृष्णाय तस्मै श्रीगुरवे नमः ।। १ ।।
आह स्वभावानुसृतिं स कृत्वा देवादिदेवं गुरुरामकृष्णम् ।
श्रीनाथ पृच्छामि वद त्वमिष्टं कथं मनो याति ममेश्वरं भोः ।।२।।
नाम्नां गुणानां जगदीश्वरस्याजस्रं तु भक्त्या कुरुगीतमङ्ग ।
तद्भक्तसङ्गं कुरु सज्जनानां संसर्गमन्तःकरणेन शुद्धः ।। ३ ।।
संसारमध्ये विषये रतानां सदा जनानां कुत ईशचिन्ता ।
ततोऽवकाशे कुरुतां विचार्यान्तरान्तरा निर्जनवासकृत्याम् ।। ४ ।।
प्रयोजनं निर्जनचिन्तनं वा ईशस्य जानीहि नितान्तमादौ ।
इतोऽन्यथा तत्र मनोनिधानं दुःसाध्यमीशे मनुतां न मिथ्या ।। ५ ।।
यथा विधेया खलु वृक्षकाणां संवेष्टनी गोभ्य उतान्यतो वा ।
रक्षार्थमादावभितः प्रयत्नात्तथात्र विद्धीश्वरचिन्तने त्वम् ।। ६ ।।
धातव्य ईशो विपिने च कोणे मनीषया सन्ततमेव कार्या ।
इदं हि नित्यं तदिदं न नित्यं विधेयमीशो सदसद्विचारः ।। ७ ।।
ब्रह्मैव सत्य त्वनृत ततोऽन्यद् विचारणैवेत्यसतो निवृत्तिः ।
बुद्धेरशेषा सविशेषवृत्तेर्निष्ठेश्वरेऽतो लभमानसत्ता ।। ८ ।।
इतीरयित्वा विरते यमीन्द्रे महेन्द्र आहाथ विनीतभावः ।
कथं नु संसार इहावसामो ब्रूहि त्वमेकः कृपयाऽसुरारे ? ।। ९ ।।

श्रीरामकृष्णोऽथ महेन्द्रमाह श्रुत्वा वचोऽस्येति गभीरदृष्टिः ।
ससारकर्माणि यथाविधानं कार्याणि सर्वाणि परेशबुद्धया ।। १० ।।
मातापितृभ्यां सकलत्रपुत्रैः स्थीयेत ससारगृहेषु नित्यम् ।
सेवा जनन्या जनकस्य कार्या भार्या अपत्यस्त्रिय आदरेण ।। ११ ।।
ते स्वे तु चिन्त्या इव यत्नभावैर्मनीषया किन्तु न केऽपि वोध्याः ।
यथा समृद्धस्य जनस्य दासी करोति सर्वं निजगेऽवु चा ।। १२ ।।
प्रभोर्गृहस्याखिलकर्मकर्त्री स्वदेशगेहस्थलपुत्रवृद्धिः ।
सेव्यस्य मन्तानसयत्नपात्री जानाति मत्या न च ते ममैव ।। १३ ।।
ब्रूते प्रभोस्तानि यथापत्यनामान्यय प्रियोऽल्पो मम राम एषः ।
प्रभोर्हरिर्मेऽयमन्तनामा जानाति नैते मम केऽपि पाकाः ।। १४ ।।
कूर्माश्चरन्त्यम्बुनि मध्य आरान्मनांसि तेषान्तु गतानि तीरम् ।
अण्डाश्रयं शुष्कमलूनवर्त्म व्यनक्ति यस्मात्तु तदीयव्यंश्यः ।। १५ ।।
संसारकृत्या विहितास्तथा वै कार्याः समास्थाय फलेष्टचभावम् ।
मनोऽर्पणीयं भगवत्पदाङ्के मुच्येत वन्धादखिलादनेन ।। १६ ।।
अप्राप्य भक्तिं जगदीश्वरे ये कुर्वन्ति संसारमगुस्तमस्ते ।
तापत्रयेणापदि शोकदुःखैरधैर्यमेष्यन्ति परं विमूढाः ।। १७ ।।
यावद्धि भावो विषयेषु वर्तते तावत्समासक्तिमुपैति जन्तुः ।
स्वभाव एवं विषयस्य साधो तेन त्यजेयुर्विषयान्महान्तः ।। १८ ।।
स्नेहाक्तहस्तैः पनसो विचेयो नो चेत्तदीयेन रसेन लिप्तः ।
तथेश्वरप्रेमसुतैललिप्तौ करौ क्रियायां नियुनक्ति भक्तः ।। १९ ।।
एकान्ततो दुग्धमुपेत्य दध्नि प्रणीयमाने मथितेऽथ धीरैः ।
हैयङ्गवीनं तत एव कार्यं नो चेदसिद्धिश्चलिते च भाण्डे ।। २० ।।
एवं सुदीर्घेण तपस्तपस्याप्यनेहसैकान्तत एव पूता ।
भक्तिर्भवे न प्रभवेत् प्रसिद्धा गरीयसी भागवती महिम्ना ।। २१ ।।
पश्यैतया भावनया पुनस्त्वं पत्युः श्रियोनिर्जनभूमिवासे ।
वैराग्यभक्ती भवतस्ततो हि ज्ञानं परं रत्नमभीप्सितं यत् ।। २२ ।।
संसारकालुष्यविलिप्तपङ्के स्थेयं मनश्चेद्विषयप्रपञ्चे ।
हीनं भवेत्तन्नितरां हि तत्र स्त्रीणां धनानां सततं नृचिन्ता ।। २३ ।।

संसार एषोऽम्बुतया विभाव्यो मनस्तु दुग्धं खलु भावनीयम् ।
नीरेण दुग्धं यदि मिश्रितं स्यान्नोपेयतेऽन्विष्य कदापि दुग्धम् ॥२४॥
दुग्धेन निर्माय दधि प्रशस्तं सम्मथ्य तस्मान्नवनीतमङ्ग ।
न्यसेत्ततस्तोयगतं प्रसह्य प्लूयेत तेनात्र न संशयः स्यात् ॥ २५ ॥
साध्यन्त एतेन तपांसि कष्टं बहूनि साध्यानि विरागतायै ।
ज्ञाने च भक्तौ महतां वरेण प्राप्यन्त आयासपथेन सर्वे ॥ २६ ॥
लब्धे च बोधे भगवत्पदाब्जे भक्तौ तु संसारकृतौ स्थितिश्चेत् ।
तदा न भीतिर्भवतीह काचित्तोये यथा स्यान्नवनीतधानम् ॥ २७ ॥
कर्तव्य एवं सदसद्विचारो नित्य समाराधनया च सार्धम् ।
चला रमण्यः क्षणिकं सुवर्णं वस्त्वीश्वरः सत्यमनन्तधामा ॥ २८ ॥
धनेन किं वा भवती पृथ्व्यामन्नं सवस्त्रं खलु तेमनञ्च ।
एयद्धि लभ्येत न तु प्रियात्मा संसारसारो जगदीश्वरो यः ॥ २९ ॥
अतो न जीवायुष इष्टमेवद्धनं कदापि व्यसनाय लोके ।
एवंविधोऽयं सदसद्विचारः कार्यः सदा मोक्षफलार्थिभिर्हि ॥ ३० ॥
यदुक्तमेतन्ननु भाषितं मेऽज्ञातं किमाहोस्विदुत प्रबुद्धम् ।
पृष्टो महेन्द्रो गुरुणेतिसद्यो बाढं ददौ चोत्तरमात्तबोधः ॥ ३१ ॥
माष्टार्समाख्येन वचो बभाषे भो देव दृष्टः प्रथिते हि नाट्ये ।
प्रबोधचन्द्रोदय संज्ञिते वै प्रोक्तो विचारः सदसत्समाख्यः ॥ ३२ ॥
महात्मभिः सर्ववरेण्यसिद्धैर्मुक्तानां सौख्यपदैरभिज्ञैः ।
महेन्द्रवाक्यादथ तृप्तिमद्भिः प्रोचे मितार्थैर्वचनैरथाप्तैः ॥ ३३ ॥
सत्यं विचारो ननु वस्तुगानां विभावय स्वार्थधने किमस्ति ।
देहे च भूतै रचितै र्मनोज्ञे किमस्ति तत्त्वं प्रविचिन्तयस्व ॥ ३४ ॥
स्त्रीणां शरीरे ननु सुन्दरीणां विद्येत किंस्विच्च विचार्यतां वा ।
मेदोऽस्थिमांसानि वसा शिरास्ता मूत्रं पुरीषं च रसाः समस्ताः ॥३५॥
दुर्गन्धयुक्ता अपवित्रभावा एते न चान्यत् किमु शोभनं वै ।
एतेषु भावेषु कथ रमन्ते मर्त्या विहायेश्वरवस्तु सत्यम् ॥ ३६ ॥
मर्त्यं निहीनं सुखलेशसंज्ञैरत्यन्तपूतिश्रितवस्तुयुक्तम् ।
नारीशरीरं पुरुषा भजन्ते माया विचित्रा सदसद्विभिन्ना ॥ ३७ ॥

कथं मनुष्या ददते मनांसि द्रव्येषु तेषु प्रविहाय नित्यम् ।
विस्मृत्य संसार निदानरत्नमीशाख्यतत्त्वं विपदं श्रयन्ते ।। ३८ ।।
नूनं बतैषा परमेशमाया यया विमुह्यन्ति महान्त आद्याः ।
भजन्ति ये चेश्वरपादपद्मं तरन्त्यानायासन्मिमां मनुष्याः ।। ३९ ।।
असारमस्मान्मनसा विहायाश्रयस्व संसारनिदान मूलम् ।
शाखाग्रपत्रेषु विहाय सेकं वृक्षस्य मूले फलदो हि सेकः ।। ४० ।।

[ क्रमशः ]

# आयुर्व्वेदे अगदतन्त्रं नाम विषविज्ञानम्

[ निबन्धकः—श्रीदेवदेव भट्टाचार्य्यः, एम-ए (डबल), नवतीर्थः ]

"अगदतन्त्रं नाम सर्पकीटलूतादष्ट-विषव्यञ्जनार्थं विविधविष-संयोगोपशमनार्थं च ।" ( सुश्रुत, सूत्रस्थान, १।६ ) । "विविधानां नानाप्रकाराणां विषाणां स्थावरजङ्गमानां संयोगः सङ्गमस्तदुपशमाय । अन्ये तु विविधविषसंयोगविषोपहतोपशमार्थं चेति पठन्ति । संयोगविषं समानमधुघृतादि ।" (टीकाकारस्य श्रीडह्लणाचार्य्यस्य—।।६।।) ।

विषोत्पत्तिप्रकरणं च चरकसंहितायां त्रयोविंशाध्याये—

अमृतार्थं समुद्रे तु मथ्यमाने सुरासुरैः ।
जज्ञे प्रागममृतोत्पत्तेः पुरुषो घोरदर्शनः ।।
दीप्ततेजाश्चतुर्दंष्ट्रो हरित्केशोऽनलेक्षणः ।
जगद् विषण्णं तं दृष्ट्वा तेनासौ विषसंज्ञितः ।।
जङ्गमस्थावरायां तद्योनौ ब्रह्मा न्ययोजयत् ।
तदम्बुसम्भवं तस्माद् द्विविधं पावकोपमम् ।।
अष्टवेगं दशगुणं चतुर्विंशत्युपक्रमम् ।
तद्वर्षास्वम्बुयोनित्वात् सक्लेदं गुड़वद् गतम् ।।

आसीत् पुरा नृपतीनां प्राणरक्षार्थं तेषां पाकशालाध्यक्षत्वेन वृताश्चिकित्सका अभिज्ञतमाः, ते खलु विषप्रयोगकारिणो लक्षणं, विषभेदविचारं विषघ्नमौषधं सम्यग् ज्ञातवन्तः। राज्ञां रक्षणाय सर्व्वदा यतमानास्ते तेषां भोज्यादिभ्यः पानीयादिभ्यश्च किञ्चित् किञ्चिद् गृहीत्वा काकादिभ्यः प्रदाय विषक्रिया काऽपि भवति न वेति परिलक्ष्य पश्चाद् राजभ्यस्तानि भक्ष्यद्रव्याणि प्रदत्तवन्तः। एवमासीत चक्रदत्तश्चरक-चतुराननो गौड़ाधिनाथस्य पाकशालाध्यक्ष इति च श्रूयते।

संक्षेपतो विषस्य द्वैविध्यम्। गतिहीनः स्थावरो गतिशीलो जङ्गम इति। मूलं, पत्रं, फलं, पुष्पं, त्वक्, क्षीरं, सारो, निर्य्यासो, धातुः कन्दश्चापि दशविधाः स्थावरविषाणामाधाराः। जङ्गमाः खलु सर्प-कुक्कुर-वानर-मकर-भेक-मूषिकादयस्तेषां विषाणां षोड़शाधाराः, यथा—दृष्टिः, निःश्वासो, दंष्ट्रा, नखं, मूत्रं, पुरीष, शुक्रं, लाला, दंशनम्, आर्त्तवम्, आलम्, अस्थि, पित्तं, शूकं, मृतदेहादयश्चापि।

एतद्भिन्नं कृत्रिमं विषं समानमधुघृतादिसंयोगविषम् अपि चाधुनिके संग्रामे जनगणमारणार्थं विषवाष्पादिकमिति च मन्ये। रुक्षत्वमुष्णत्वं, तीक्ष्णत्वं, सूक्ष्मत्वमाशुकार्य्यकारित्व, व्यवायित्व, विकाशित्वं, विशदत्वमपाकित्व, लघुत्वञ्चेति दश गुणा विषस्य। अस्य रुक्षतायां वायुः कुप्यति, उष्णताया पित्तं शोणितमपि कुप्यतः, तीक्ष्णतायां मनसो मोहो जायते, शरीरस्य बन्धनानि शिथिलानि भवन्ति। सूक्ष्मतायां सर्व्वाङ्गगतमेतद् विषं विविधान् विकारान् जनयति।

विषस्याशुगत्वात् प्राणान् सत्वरमेवैतद् विनाशयति जीवानाम्। व्यवायित्वाद् विषं स्त्रीष्वभिलाषं जनयति, विकाशित्वाद् देहस्य दोषधातुमलानां क्षयं करोति, अस्य वैशद्यहेतुतया सातिशयं विरेचनं भवति, लघुतयैतस्य चिकित्सितेऽपि कष्टसाध्यत्वम्, अविपाकित्वहेतुतया नैतदल्पकालेन जीर्य्यति, दीर्घकालं खलु शारीरक्लेश-

दायकं भवति। सर्व्वाण्येव विषाणि दशविधगुणसम्पन्नानि आशु प्राणविनाशकराणि च।

आयुर्व्वदे सुश्रुतसंहितायां कल्पस्थाने, चरक-संहितायाञ्च त्रयोविंशाध्याये चिकित्सितस्थाने विषसम्बन्धीयालोचना विद्यते। अगद-विषयकं प्रतिषेधकोपायसमन्वितं प्रभूत तथ्यमपि तत्र तत्र लिपिबद्धम्।

करवीर-गुञ्जादीनां मूलानि विषाणि। जैपालबीजाभ्यन्तरस्थ-पत्रवदंशोऽथवा तिक्तालावुपत्रमपि विषम्। हरिताल-मनःशिलादीनि धातुविषाणि। वेतसकदम्बादीनि पुष्पविषाणि। अहिफेनमपि विषमेव। जगति सर्व्वत्रैव धातुविषाणां प्रयोगो दृश्यते। एतानि स्थावरविषाणि, सरीसृपाणां कुक्कुर-वानर-मकर-मूषिक-भेकादीनां दंशनमपि जङ्गमविषं, वृश्चिक-लूता-पतङ्गादीनामपि आलविद्धकरणं जङ्गममेव विषम्, एवमेव पृथिव्यां सर्व्वत्र परिलक्ष्यते।

'मुद्राराक्षस' नामधेये नाटके विषकन्यायाः प्रयोगश्चाणक्येन कृतश्चन्द्रगुप्त-शत्रुवधायेति च परिदृश्यते। सा च कन्या जन्म-कालीन-ग्रहनक्षत्रादीनां विशेषसन्निवेशाद् जायते अथवा शैशवात् स्वल्पतमविषसेवनमभ्यस्य क्रमशः प्राप्तयौवना सा पुरुषसङ्गम-मात्रं मृत्युप्रदायिका भवतीति श्रूयते वृद्धवैद्येभ्यः। आधुनिके युगे अश्वदेहे विषमात्रायाः प्रयोगतः क्रमशो 'विषस्य विषमौषध'-मिति प्रतिषेधकमौषधं जगति प्रचलतीति श्रूयते।

जङ्गमविषेषु सर्पविषमेवाशुप्राणापहारकम्। सुप्राचीन-कालान्नरैः सर्पाणां विरोधोऽपि वर्त्तते। अष्टादशपर्व्वसमन्वित-महाभारतग्रन्थस्य पृथिव्यां प्रचलनं जनमेजयकृत-सर्पयज्ञादनन्तर-मेवाभूत्। तथा च खृस्तीय-वाइवेलाख्यधर्म्मग्रन्थे ईश्वरविरोधिभिः शयतान-नामधेयैः स्वर्गोद्याने सर्परूपधारणं भगवदभिसम्पातहेतुतो मनुष्यैः सह सर्पाणां चिरविरोधोऽपि च सृष्टेरादितः प्रचलतीति तत्र पुस्तके वर्णितमुपाख्यानं विद्यते। मनसामङ्गलादिषु बङ्गीय-ग्रन्थेषु सर्पस्तुतेराधिक्यं सर्पभयादेव।

अधुनापि पल्लीग्रामनिवासिनो नगरवासिभ्यः सर्पभयात् त्रस्ततरास्तिष्ठन्ति। सुश्रुतग्रन्थतो ज्ञायते सर्पाणामशीतिप्रकारो भेद इति। ते खलु पञ्चश्रेणीषु विभक्ताः, यथा—दर्व्वीकरो मण्डली राजिमन्तो निर्व्विषो वैकरञ्जश्चेति। दर्व्वीकरस्य षड्-विंशतिः प्रकाराः, मण्डल्या द्वाविंशतिः प्रकाराः, राजिमन्तस्य दश प्रकाराः, वैकरञ्जस्य त्रयः प्रकारा निर्व्विषाणां द्वादश प्रकाराश्च। वैकरञ्जेभ्यो जाताः सप्तविधाश्चित्रा इति।

दर्व्वीकराणां (फणिनां) दंशनतो वायुः कुप्यति, राजिमन्तानां श्लेष्म-प्रकोपो जायते, मण्डल्या दंशनतः पित्तं प्रकुप्यति, सङ्कर-जातीय-सर्पविषाद् दोषद्वयस्य प्रकोपो भवति च। आहताना कृष्ण-सर्पादीनां दर्व्वीकराणां शङ्खचूड़ादीनामपि संक्रुद्धानां दशनतो झटिति चिकित्सितं विना मृत्युरेवावधारिता गतिः। मुक्तत्वचां दुर्बल-सर्पाणां पलायनपराणां भीतानामपि द्रुतं दंशनतः समयेन चिकित्सा सुखसाध्या भवतीति दृश्यते।

येषां सर्पाणां जिह्वाननेत्रमुखानि बृहत्तराणि ते तु पुरुषाः, यासां तान्यङ्गानि क्षुद्रतराणि तास्तु स्त्रिय एव, मध्यमाङ्ग-विशिष्टानां पुनर्नपुंसकत्वमेवेत्यनुमीयते। नपुंसकसर्पाणां विषं विलम्बेन सञ्चरति।

सर्व्वसर्पविषाणां वेगास्तु सप्तप्रकारा दृश्यन्ते। रस-शोणित-मांसमेदोऽस्थिमज्जा-शुक्राणि च शरीरस्य सप्त धातवः। सर्प-दष्टे जीवदेहे क्रमेणैते धातवः कुप्यन्ति। एकैकः स क्रमो वेग इत्यभिधीयते। दष्टे तु मर्म्मस्थाने तीव्रविषेण सर्पेण प्रतिविधानाव-सरमप्राप्यैव रोगी म्रियते। हस्ते वा पदे वा सर्पदष्ट एव तत्-तत्स्थानतश्चतुरङ्गुल्युपरि सत्वरमेवारिष्टाबन्धन विधेयम्। बन्धन-स्थानस्य निम्नदेशपर्य्यन्तं कतिपयसरलरेखाक्रमेण छेदनञ्चाशु कर्त्तव्य-मतः परन्तत्र दहनीयमपि। पश्चाद् विषशोषणार्थं वस्तियन्त्रेण मुखेन चूषणं कुर्य्यात्। मुखाकर्षणात् शोणितेन सहाकृष्टं विषं वस्तियन्त्रमध्ये प्रविशति। पुरा विषनाशाय मन्त्रविद् वैद्यो मन्त्र-

मपि विनियोजयामास परमुच्चारणादिदोषाद् मन्त्रस्य फलमनिर्दिष्टमासीत्, एतदर्थं कर्त्तव्यः औषधस्याशुतरम् एव प्रयोगः। शल्यकुशलो वैद्यो बहुदर्शी दष्टस्थानस्य चतुःपार्श्वे एव शिरावेधं कृत्वा रक्तमोक्षणं कुर्य्यात्, प्रलेपनमपि दद्याद् विषघ्नेनागदेन।

अतीव क्लेशप्रदं सद्योमारकञ्च सर्पदंशनम्। अत आयुर्व्वेदे सर्पाघात-चिकित्सिते एतस्य विस्तृतालोचना विद्यते। विशेषतश्च मनुष्येतर-प्राणिनामश्व-हस्त्युष्ट्र-कुक्कुर-मार्जार-पक्षिणामपि पथक् पृथङमात्रानसारेण भेषज-प्रयोगविधिना चिकित्सा-परिचर्य्या-पद्धतिरपि तेष्वायुर्व्वेद-ग्रन्थेषु यत्नेन लिपिबद्धा दृश्यते।

सन्ति सर्पादितरे प्राणिनः सविषाः। ते च सिंह-व्याघ्र-वृक-शृगाल-कुक्कुरादयः श्वापदाः, वानर-मूषिकादयो जन्तवो गोधा-कृकलासादयः सरीसृपाः, वृश्चिक-लता-पिपीलिकादयः कीटाः, मत्स्य-मकरादयो जलचरा भेकादयश्च उभचरा गृध्रादयः पक्षिणो मक्षिकादयः पतङ्गाश्च विषसम्पन्नाः, तेषां विषेभ्योऽग्निदाहवज्ज्वलनमन्ये च विविधा उपसर्गा जायन्ते, कुत्रचित् क्षेत्रेषु भयावहान्यपि यन्त्रणाप्रदानि फलानि दृश्यन्ते। अतस्तेषामपि विषाणां चिकित्सापद्धतिरायुर्व्वेदोक्ता विद्यते।

स्थावरं जङ्गममपि विषमचिकित्सितं यदि किञ्चिदपि देहाभ्यन्तरन्तिष्ठेत् तदा कालेन तस्य विषरूपः परिणामो दूषी भवेत्। स्वल्पशक्तितस्तद् बिषं जीवनं न विनाशयति परन्तु मिलितकफेन सह दीर्घकालं देहे स्थित्वाशेषं क्लेशदायकं भवति। दूषिणो विषाद् मुखस्य विरसता, मूर्च्छा, वमनं, वाग्जड़ता, दूष्योदरमपि जायते। आमाशयस्थे तद्विषे कफवातजनितो रोगः, पक्वाशयस्थे वातपित्तघटितश्च व्याधिर्भवति। शिरसि केशानामुत्सादनात् पलितं मुण्डं भवति। देहे कोठोऽपि जायते, हस्ते, पदे च शोथो भवति। जलोदरातिसार-विषमज्वरादि-रोगाणां प्रादुर्भावोऽपि भवति। क्रमेणोन्माद-वाग्जड़ता-कुष्ठादिवहुविधा रोगा जायन्ते।

अतो देहे प्रविष्टमात्रे विषे प्रतीकारोऽवलम्बनीयः।

नो चेदारोग्यलाभः क्रमेण सुदूरपराहतो भवति। अगद इति परिचयो विषनाशकस्यौषधस्य। अतोऽष्टाङ्गायुर्व्वेदस्याङ्गमेकमगद-तन्त्रम्। आयुर्व्वेदे विषविज्ञानस्य यादृगनुशीलन कृतं सङ्कलनेन तस्य समग्रस्य बृहद्ग्रन्थता भविष्यति। निबन्धेऽस्मिन् सामान्यतो दिग्दर्शनमात्रं लेखकेन कृतमिति। महागदोऽजितोऽगदस्तार्क्ष्यो-ऽगदः, सञ्जीवनी-ऋषभ-मुख्यादयो-ऽगदाश्च सुश्रुतोक्ताः सर्व्वेषा विषाणामुपकारकाः। विशेषतश्च पल्लीग्रामे यत्राधुनिक-चिकित्सातुरशालायन्त्रादीनामभावो विद्यते तत्र शिरीष-वृक्षस्य पञ्चाङ्गं—मूलं, पुष्पमङ्कुरं वल्कलं बीजमपि, गुञ्जापराजिता तुलस्यादीनां मूलादयोऽपि व्यवह्रियन्ते लोकैर्विषनाशार्थम्। तत्रापि यदि कोऽप्यायुर्व्वेदज्ञो वर्त्तते तस्यायुर्व्वेदोक्तोऽगदस्य प्रयोगो नितरा फलप्रदोऽपि।

---

## यम-जयश्रीसंवादः

[ निबन्धिका—श्रीजयश्रीचट्टोपाध्याया ]

ॐ अयमारम्भो रसाय भवतु।

यदा यदा विविधदूषणदूषिता जयश्रीरियं हतश्रीः प्रतीयते तदा तदैव अस्या मनसि यमदिदृक्षा स्वत एव समुदेति। न जाने केन पथा यमद्वारं प्राप्नोमि, न जाने कुत्रास्ति जीवनपथपरिक्लान्ता-नामेकमेव विरामनिकुञ्जं यमसदनम्। परं यमालयस्य पथिवर्णना कठोपनिषदि नोपलभ्यते इत्यस्ति अन्तरायः। शरीरं गन्तु नालञ्चेन्मन एव गच्छतु इति बुद्ध्या अचिरमेव यमलोकं प्राप्ता। यद् यदस्माभिरालोचितं विदुषामनुरञ्जनाय सारमस्य वर्णयामि।

यमः—केन नाम्ना परिचितासि वत्से ?

जयश्रीः—जयश्रीरिति मामवगच्छेद्भवान् ।

यमः—(विहस्य) नाम्नि तव विपरीतलक्षणा सुपरिलक्ष्यते । सर्वथा श्रीवर्जिता त्वं गतश्रीरित्येव भवितुमर्हसि कथं जयश्रीः ?

जयश्रीः—भवतश्च नाम्नि विपरीतलक्षणा दृष्टा । यम इत्यभिहितो भवान्, परमबलाया बलं पतिजीवनमाहरतस्तथा सर्वसहायविरहितायाः सहायसर्वस्वं पुत्रजीवनमभिलषतो भवतः संयमनं नावलोक्यते ।

यमः—( भ्रूकुटिकुटिलाननः )—नितरामुद्धतासि ।

जयश्रीः—हताया वरमुद्धता ।

यमः—धृष्टे, केन विरक्तिं जनयसि ?

जयश्रीः—"येन वागभ्युद्यते" तेनैव । परब्रह्मणः परम-कारुण्याद्रसना मम कटुभाषिणी, प्रियवाक्यप्रदानेन कथमनुरक्ति-मानयामि ? किञ्चिदस्ति प्रष्टव्यम् ।

यमः—प्रागल्भ्यं परित्यज्य प्रकृतमनुसर ।

जयश्रीः—प्रकृति-प्रगल्भा प्रागल्भ्यं कथं हातुं समर्था, अपि नाम शिंशपा वृक्षत्वं विजहाति ? यदि शिंशपा वृक्षत्वमतिक्रामेत् तर्हि आत्मानं जह्यात् । एतस्मिन्नात्म-हनने मम स्पृहा न जागर्त्ति । महती मे जिजीविषा । वाढं, वीजमध्ये वनस्पतीनामस्तित्वं सदैव समाच्छन्नमास्ते, इति आर्षदृष्टं सत्यमा शैशवात् श्रुत्वा श्रुत्वा गतं यौवनं, जीवनमपि गतप्राय मन्ये । परं, यथाकाले जलसेचनविरहा-दङ्कुरोत्पत्तेः प्राग् बीजं चेद्विनश्यति वनस्पतीनामनन्तसम्भावना कीदृशीं गतिमाप्नुयात् इति पृच्छा मामतिमात्रं बाधते ।

यमः—( शिरःकण्डूयनं कृत्वा ज्वलन्निव रोषाच्चिंषा )

मा, मैवं प्राक्षीर्जयश्रीः, मूर्द्धा ते निपतिष्यति ।
शिरश्चेद्बहु मन्येथास्तूष्णीमेवास्तु ते बलम् ।

---

## पुस्तकपरिचयः

[परिचयकारिणी—ड: श्रीइन्दिरा मुखोपाध्याया, एम, ए, डि-फिल]

'आनार कलि'—दशाङ्कसमन्वितं नवं संस्कृतरूपकं विद्वद्वरेण्येन शास्त्रवादे कर्कशधिया, नाट्ये काव्ये च कोमलधिया, किं वा विशेषणेनान्येन,—ड: डि, राघवन महोदयेन विरचितम्, माद्राजस्थितेन संस्कृतरङ्गेन च प्रकाशितम्। प्रकाशनकालः १९७२ खीष्टाब्दः। मूल्यम्—सार्द्धत्रीणि रूप्यकाणि।

मोगलश्रेष्ठस्य महामतेः आकवरस्य शासनकाले संघटितं किञ्चित् ख्यातं वृत्तमवलम्ब्य ड: राघवनेन विरचितमिद प्रकरणम्। आनारकलीति काचित् सुन्दरीश्रेष्ठा प्रकरणस्य नायिका। नायिका-नाम्ना कृतं प्रकरणस्य नाम।

सुविदितापि वियोगान्ता परिणतिरानारकल्या दर्शितान प्रकरणे मिलनान्ता परिणतिः। परिणतिरेषा केषाञ्चिदैतिहासिकानामपि सम्मता। नाट्यकारेण स्वयमेवोक्तम् 'नामूलं लिखितं किञ्चित्। इतिहासश्रितं 'रोमाण्टिक' वृत्तमिद नाट्यकारेण संस्कृत-भाषया साधु समारोपितम। सर्वविषयप्रकाशनक्षमा संस्कृतभाषेति यदुच्यते प्रमाणं तस्यात्रैव प्रकटीकृतं राघवनमहोदयेन।

प्रकरणेऽत्रादावङ्कद्वये आकवरमहाराजस्य सुशासनं वर्णितम्। शासितरि तस्मिन् सर्वासां कलाविद्यानाम् अभ्युदयो दर्शितः, भारत-वर्षस्य विभिन्नप्रदेशवासिनः कलाकुशलिनो राज्ञः सभाया समागताः। सर्वेषु धर्मेषु तस्य समदर्शित्वञ्च नाटकान्तर्गतानां भिन्नधर्माश्रितानां प्रासङ्गिकानां चरित्राणां माध्यस्थ्येन रूपायितम्। एतेन सर्व-भारतीयसंहति सुपरिस्फुटा, महाराजस्य सर्वधर्मसमन्वयात्मिका बुद्धिश्च सुप्रकाशिता। तृतीयाङ्कादारभ्य नाटकीयवस्तु परं रसघनत्वं प्राप्त दर्शकपाठकानां कौतूहल जनयति। तृतीयेऽङ्के 'रहिम खान्' इति सलीमसहचरेण सह 'इम्मद्वीगम्' नामधेयाया महिलाया आकवरविरोधिचक्रान्तरचना, अष्टमेऽङ्के नृत्यसभायां मृत्युदण्डादेशादयश्च व्यापारा नाट्यानुकूल सघातं जनयन्ति।

कलाकुशलतायाः श्रेष्ठं प्रमाणमिदं यदैतिहासिक वृत्तं सम्यगनुसृतमत्र परं नाट्योल्लिखितानि चरित्राणि तु समधिक मनोहारीणि । उद्भिन्नयौवना 'आनारकलिः' सदृशी नायिका ; आनारकलिः न केवलम् अपरूपदेहसौन्दर्य्यविभवशालिनी, अपि तु नृत्यपटीयसी, बहुगुणभूषिता च, 'शरीरबद्धा भावसमृद्धिरिव भाति' इति महाराजेनाकवरेणोक्तम् ।

आसीत् 'मिहिरुन्निषा' नाम्नी काचित् युवती युवराज-सलीमस्य प्रणयिनी । भ्रातुस्तस्या 'इस्नद्बेगम्' नामधेयाया गन्धपेषिण्या महिलायाः खलचरित्रं सुचित्रितम् । उपजापचतुरा हि सा, कण्टकेनैकेन कण्टकान्तरमुन्मूलयितुं प्रवृत्ता । सदा नेपथ्यनिवासिनी अनन्यसाधारणी कुमार-सलीमस्य बहुमानगर्विता हिन्दुभार्या अन्ते तु नाटकीयकथावस्तूना नियन्त्रिका जाता । अत्रैव दृश्यते समुत्कर्षो नाट्यकौशलस्य । प्रकरणस्य प्रासङ्गिकानि चरित्राण्यपि स्वस्ववैशिष्ट्येन भास्वराणि ।

रहिम्खान्-नाम्नः सलीमसहचरस्य 'सिरिओकमिक'—चरित्रं दर्शक-पाठकानां कौतुकमुद्दीपयति । एकतः सार्थकोऽयं विदूषकः, परं न केवलं हास्यकृत् ।

द्वितीयाङ्कस्य प्रारम्भे 'आब्दुल्-कादिर-वदौनी' इति नामधेयस्य कस्यचित् जनस्य 'द्वौ गर्दभौ ! एकः श्वा ! गर्दभौ श्वा ! श्वा गर्दभौ' इति स्वगतोक्तिः हास्यरसमभिव्यञ्जयति ।

नाटकस्य संलापश्चरित्रोचितः सुललितश्च । 'दौःशील्यम्' 'जृम्भमाणैः' प्रभृतिभिः पदैरपि संलापस्य गतिर्न स्खलिता ।

ग्रन्थेऽस्मिन् कालिदासप्रभृतीनां पूर्वसूरीणां केचन श्लोकाः समुद्धृताः । डः राघवन-विरचिते प्रकरणे तेषामुपस्थितिर्नास्माकं विस्मयमावहति ।

ग्रन्थादौ नाट्यकारेण योजिता ग्रन्थपञ्जिका ग्रन्थस्य गौरवं वर्धयति । तत्कालीनं दुष्प्रापं चित्रद्वयञ्च योजितम् । ग्रन्थस्य मुद्रणं सर्वथा सौष्ठवोपेतम् ।

---

## सम्पादकसम्पाद्यम्

अहो रे दुर्दैवमतिदुर्दैवं समुपस्थितमद्य संस्कृतजगतो विशेषेण संस्कृत-साहित्य-परिषदः, यदचिरेणैव कालेन गुणगणभूयिष्ठाः परिषत्-प्रधारणस्तम्भसदृशाः पञ्चैव विद्वांसः परस्परमाकारयन्त इव काल-कवलमुपगताः ।

(१) तत्र परिषत्-सहसभापतयः पण्डितधुरन्धराः स्वनामधन्या हेरम्बनाथतर्कतीर्थपादाः प्रथमतः समुल्लेखमर्हन्ति । ये तावत् सुबहून् कालान् यावत् संस्कृतव्यवसायिषु प्रतिष्ठामापन्ना विभिन्नैः संस्कृत-प्रतिष्ठानैः सह युक्तसम्बन्धाः सन्तस्तत्तत्प्रतिष्ठानाना कृत्येषु सूक्ष्मदृष्टयो व्यतीते अशीत्यधिकत्रयोदशशततमबङ्गाब्दीय-सौर-भाद्रस्य सप्तमे दिवसे शुक्रवासरे स्वकर्मार्जितलोकमगमन् । ब्राह्मण-पण्डितेष्वेतादृशी सूक्ष्मदर्शिता प्रायेण सुदुर्लभैव । तस्मात् संस्कृत-साहित्यपरिषदेतेषामभावेनात्मनो महती क्षतिमनुभूतवतीति नूनम् ।

(२) अथ द्वैतीयिकतया मनसि नः सततं जागर्त्ति विद्वत्-प्रियाणां तेषां योगेन्द्रमोहनविद्यारत्न-महाभागानामभावः । ये खलु संस्कृतैकव्रतिनो महात्मानः सुदीर्घं कालं परिषदः सहसभापतेः पदमलंकुर्वाणाः परिषत्कार्य्यजातं सुष्ठुतया परिचाल्य परिषत्समुन्नतिविधये रात्रिन्दिवं प्राणैःपणैर्यतमाना व्यतीते अशीत्य-धिकत्रयोदशशततमबङ्गाब्दीय-सौराश्विनस्य त्रयोदशदिवसे रवि-वासरे स्वर्लोकं प्रति प्रस्थिताः । स्वभावकवयः खल्वेते महाभागाः साहित्यदिशा महाकविभिः सह समानं मानमर्हन्तो जगतीतलेऽस्मिन्न-तुलनीयां कीर्त्तिमर्जितवन्त इति के वा विद्वांसो न जानन्ति ? तस्मादेतादृशानां संस्कृतप्रियाणामभावेन संस्कृत-साहित्य-परिषदिय-मात्यन्तिकी क्षतिमार्त्तिञ्चाधिगतेति विदितं नः सर्वेषामेव विदुषाम् ।

(३) अहो अपूर्वोऽयं कालहतकस्य महिमा । यतः अनवसित एव निरुक्तरूपे शोकावेगे क्षते क्षारमिवासौ समर्पयिष्यन् पुनरपि समनयदात्मनः पुरममून् विद्वत्तमान् धर्मैकशरणान् परिषद्गतप्राणान् कालीपदविद्याभूषण-महाभागानतर्कितं परिणते वयसि समतीते अशीत्यधिकत्रयोदशशततमबङ्गाब्दीयसौरपौषस्य द्वादशदिवसे

गुरुवासरे। विद्याभूषणपादाः खलु प्रायेण परिषदो जन्मनः समारभ्य सदस्यत्वमुपगता जीवनस्यान्तं यावत् सदस्यपदे समासीना आसन्। एते महात्मानः स्वप्नेऽपि परिषदो हितमेवापश्यन् नाहितं कदाचिदिति एतादृगकृत्रिमबन्धूनद्य हापयन्तीयं संस्कृतसाहित्यपरिषद् यथार्थतो दुःखार्णवे निमग्नेदानीमनाथेन संवृत्ता।

(४) हा हा, नैतावतापि ममतुष्यत् निर्घृणो यमहतक इति भृशं दूयामहे। यतः परिषत्पृष्ठपोषकावन्यावपि द्वावकृत्रिमौ बान्धवौ वामापदवसुं नलिनाक्षदत्तञ्चानयदसौ स्वमालयं सहसा तर्जयन्निव तर्जन्या परिणतवयस्कान् परिषत्प्रियानपरान सदस्यान्। तत्र गुण-गणान्वितः संस्कृतसेवी स्वप्नवासवदत्तप्रभृतीनां बहूनां संस्कृतग्रन्थानां बङ्ग-भाषायामनुवादकः डः वामापद वसु एम-बि महाभागश्चक्षु-श्चिकित्सायां सविशेषां नैपुण्यमर्जयन् विद्यया धर्मनिष्ठया दाक्षिण्येन च न केवलं वसुवंशमुखं परं संस्कृतसेविनामपि नो मुखमुज्ज्वल-मकार्षीदिति के वा न कथयेयुः?

(५) यस्त्वपरः कलिकाता-विश्वविद्यालय-पालिविभागीय-प्रधानाध्यापकचरः एम, ए पि आर एस, पि एइच-डि, डि-लिट् इत्युपाधिकः कीर्तिमान् नलिनाक्ष-दत्तो नाम, स खलु 'हाटखोला' दत्तवंशावतंसो विद्वज्जगदिदमात्मनो विद्यावत्तया विस्मितमेवाकार्षी-दिति नाधिकोक्तिः। यतः एक एवासौ महाभागः प्राच्यपाश्चात्त्या-दिदेशदेशान्तरागत-पण्डित-प्रकाण्डैरशक्यपाठोद्धारं पालिभाषानिबद्धं काश्मीरप्राप्तमतिप्राचीनं ग्रन्थरत्नं स्वयं पठित्वा तद्ग्रन्थगत-लिपिविषये कांश्चित् काश्मीरवासिनो विदुषः शिक्षयंश्च तैरेव ग्रन्थरत्नमिदमविकलं लेखयित्वा 'गिलगिट्-म्यानस् क्रिप्ट्स्' इति नाम्ना कलिकातातो मुद्राप्य प्रकाशितवान्, अपराण्यपि च बहूनि पुस्तकानि रचितवान्। संस्कृत-पालि-प्राकृत-तिव्वतीयभाषासु प्रावीण्यमुपगतस्तादृशो जनो जगति सुदुर्लभ एवेति नो धारणा।

तस्मादन्ते प्रागुक्तानेतान् परलोकगतान् प्रति परिषत्पक्षतो वयमान्तरिकीं श्रद्धामावेद्य स्मृतितर्पणमेषामनुतिष्ठामः।

# मेघदूतालोचनम्*

[ निबन्धकः—श्रीवासुदेव पोद्दारः ]

मेघदूतं हि सन्देशकाव्यानां हिमाद्रिः। तस्य तुङ्गशिखरात् शतशो रसपेशलानि सन्देशकाव्यानि प्रभवन्त्यत्र भारताजिरे स्यन्दमानानि भवन्ति।

कस्मिन् काले कस्मिन् देशे एतादृशा धारा-सम्पातोऽजायत इति न जानीमहे। कति वा कवयस्तार्किका वेदान्तशिखरसमारूढा आचार्यवर्या अपि हंस-सन्देशादीनि लिखितुं प्रवृत्ताः समभवन्। अयमेव मेघदूतस्य चमत्कारी प्रभावः। महाकवेर्मेघानयनम् उत्तरावर्तस्य सांस्कृतिकभूगोलरूपेण अवतरति; तस्य अपरिमिता सोमारेखा विद्युद्गर्भाश्च—जड़े चैतन्यरूपेण समायान्ति इतोऽन्यच्च व्यष्टिभावस्य तथा समष्टिभावस्य चितिरेव मेघकाव्यस्य शाश्वतं सौन्दर्यम्।

मेघदूतं भारतीयकाव्याम्बुधे रसाम्नायरूपेण प्रसिद्धिं लभते। कालिदासो रामायणस्य निसर्गसौन्दर्यं मेघयानरूपेण प्रस्तौति। आदिकवेर्महाकाव्यस्य कामप्रस्थानमतिगहनमेव। इदमेव तस्य बीजम्—

मन्दमारुतनिःश्वास संध्याचन्दनरञ्जितम्।
आपाण्डु जलदं भाति कामातुरमिवाम्बरम्॥

विप्रलब्धमानवानां चेतस्सु गगनपर्यन्ता निखिला प्रकृतिः कामातुरपुरुषमेवाश्रयति।

---

* व्यतीतमेघदूतोत्सवे निबन्धोऽप पठितो निबन्धकेन।

मेघयानस्य आयामो विशालतमः। तत्र वेदस्य सौन्दर्यरूपिणी ऋतम्भरा प्रज्ञा सर्वं विश्व मेघव्रतीकरोति। धरित्री मेघस्य व्रतं धारयति, वेदेऽप्युक्तम्—

यस्य व्रते पृथिवी नन्नमीति

यस्य व्रते शफवत् जभु रीति

यस्य व्रते ओषधीर्विश्वरूपाः

स नः पर्जन्यः महि शर्म यच्छ ॥

मेघदूतस्य चित्रफलके काम-प्रस्थानस्य अभिव्यापिका अनुभूति-वैविध्ययुक्ता दृश्यते। तत्र कामस्य मुक्तसंचरणम्। महाकवेर्नास्ति कोऽप्यत्र नूतनः प्रयासः। किन्तु अद्वितीयमेव तत्र प्रातिभं ज्ञातम्, भारतीयसाहित्याम्बुन्धौ दर्शने च कामस्य महत्त्वं नास्ति, नूनमेव अपरिमेयस्यास्य सीमाविस्तारः। आध्यात्मिक-पक्षोऽपि कामस्य लौकिकपक्षेण सहाञ्चति। वैदिकशब्दराशिरपि कामस्य सार्वभौमस्वरूप स्पष्टरूपेण निगदितवान्। ‘कामस्तदग्रे समवर्तताधि भूयी यो नः प्रथमं जायमानः’। मेघदूतेऽपि ऋतुधर्मस्य कामस्य अद्वितीय आयामः। तत्रोच्चाटितकामस्य स्वरूपं दर्शनीयम्। यदा उच्चाटनस्य उद्वेलनं भवति तदा तद् विप्रलम्भशृङ्गारस्य परिपेक्षसंचरण नूतनतामुद्भावयति। प्रकृतिकाव्यं रूपकायितं भूत्वा प्रतीकान्तरेण अभिव्यक्तिं लभते। शिप्रानिर्विन्ध्याप्रभृतयो नद्यः प्रकृतिरूपेण स्थिता अपि कामस्य पृथुत्वं भजन्ते। देवाः सिद्धा गन्धर्वाः किन्नराः कामस्य स्वातंत्र्य काव्ये सर्वतोभावेन अभिव्यञ्जयन्ति। यौवनस्य अलंकरणमङ्गानां सौष्ठवम्। तेषां तनुता ततोऽप्यधिकतया तालफलोपमाः स्तनाश्च

घटप्रमाणेन समायान्ति । एवमेव मेघस्य प्राकृतिकपरिवेषात् बलवांस्तस्य वात्स्यायनीयः परिवेषः । इतोऽधिकं दोहदकर्मणो मनोविज्ञानम् । तच्च सर्वाधिकजटिलमेव ; तस्य निगड़त्वं नितान्तं ग्रन्थिलमेव, ततः sadism, masochism, प्रभृति प्रवृत्तीनाम् अध्ययनं कर्तुं न शक्यते—मनोविश्लेषणपरैर्वैज्ञानिकैः । अशोकस्योपरि पादप्रहारः सुकुमारबकुलस्य हृदये मधुमिश्रितमुखामृतस्य प्रयोगश्च नास्ति साधारणः । अशोकवृक्षे पादताड़नम्, बकुलपादपे मुखक्रमेण सुराभिषेचनञ्च व्यपदेशमात्रं वर्तते । निषेचनस्य, पादताड़नस्य निगूढा वार्ता, प्रतारितकामस्य निगूढ़ा विप्रलम्भगर्भिता गहना अनुभूतिः । तत्र स्मार्तधर्मा संस्कृतिश्च कामस्य निरुद्धं मार्गम् अतिक्रमितुमसमर्था भवन्ति ; काव्यस्य अलौकिको व्यापारः कामसंचरणस्य लोकोत्तरं द्वारमुद्घाटयति । श्रौतस्मार्तानां धर्म-दण्डोऽत्र कुण्ठितरूपः । विप्रलम्भशृङ्गारे दोहदस्य अवतरणं प्रतारितकामान्तरभावविकृतकामस्य संश्लेषणमेव, तस्य आत्मतुष्टा अनुभूतिरपि कौतूहलकारिणी । कामस्य मुक्तसंचरणार्थं सीम्नो रेखा अभिव्यापिकैव, तस्या नमनशीलत्वम् अपि कामसंसिध्यर्थम् । तस्य मार्गः कामसंचरणस्य वैविध्यप्रसंगः । तस्य स्तनितं कामस्य अन्तर्लीनसित्करणम् । तस्य धारासम्पाते कामस्य सूनृता विश्वम्भरा परितृप्तिः । शैलाः, शैलेन्द्राः, नदाः, वनानि, उपवनानि, उद्यानानि, ह्लदाः सर्वं एव कामकौतुकाधानस्य हेतोः प्रवर्तन्ते । तदा क्षुद्रोऽपि रसः अनुप्रविश्य 'संवेदनायामायतीभूतस्य चेतसो रससम्भोगाय आयतते, रससंभारास्वादो रसिकमुन्मत्तं करोति । इतः पूर्वं भारतीयानां संस्कृतिरेतादृग्रूपेण उन्मुक्तवसना नाभवत् । अस्याः समाहारो हिमवतः शिखरोपरि सौन्दर्यस्य सम्प्रसारणात् चित्तस्य निरुद्धदशां भजते । कामस्य लास्यधिकृत्य मेघदूतः पराप्रकृतौ लीनो भूत्वा वासनया प्रेरितं चाञ्चल्यमपि विलीनयति । भावनायाम् उपर्युपरि सौन्दर्यस्य विभ्रमेण समाधिदशायां चाञ्चल्यं मुञ्चति । कूटस्थभावमापन्नं सौन्दर्यं सान्द्रत्वमनुभवति ।

अचेतन-हृदयानाम् इयमेव चेतनप्रक्रिया—'कामार्त्ता हि प्रकृति-कृपणाश्चेतनाचेतनेषु'। प्रसिद्धमेवैतत्। यत्र चेतनाचेतनयोर्धिभेदको धर्मो विलीयते तत्रैव सौन्दर्यस्य प्रवर्तनं जायते। कवेः प्रमेयलोकः सौन्दर्यस्य भाषाशस्त्रेण शोभते। तत्र मेषाण्डप्रमाण-पटूनां तार्किकानां नास्ति अवकाशः। मेवदूतस्य भाषातत्त्वम् अभुक्तकामस्य तत्त्वदर्शनमेव। इदमेव 'रसो वै सः' प्रभृति महावाक्यानां यादृशी स्पष्टा सप्रेषणशीला व्याख्याविषयीभूता भवति सा एव वेदान्तस्य तुलनया नास्ति न्यूना। मेघदूतस्य सौमारिकवैशिष्ट्यं तत्त्वदर्शनमेव। रसार्णवे संतरणं हि तार्किक-तिमिंगलैः कर्तुं न शक्यते। अस्य कृते विमानपुरुषस्य चिन्मयविग्रह एव पर्याप्तः। काव्यभाषायां शिप्रानिर्विन्ध्याप्रभृतीनां भोगो यतो वास्तव एव। स एव तत्तत्परिणामेन वेदान्तभाषायाम् अतीन्द्रियः।

यास्को वैदिकशब्दानां निरुक्तकारः; कालिदासः सौन्दर्यस्य निरुक्तं मेघदूतकाव्यव्यपदेशेन विवृणोति। तदीयसौन्दर्यस्य भाष्यकारा आधुनिका व व्याख्यातारो भवितुं शक्नुवन्ति। पुरातनटीकाकाराणां विपुला टीका वर्तते। तेऽपि मेघदूतस्य स्यन्दमानं स्वरूपं संकोचयन्ति। तेषां प्रतिपादन-परंपरा खण्ड-काव्यसीमानम् अतिक्रमितुं न शक्नोति। मल्लिनाथाद् आरम्य भरतमल्लिकपर्यन्ताः सर्वेऽपि टिप्पनकारा मेघदूतस्य खण्डसीमानं नातिक्रामन्ति खण्डकाव्यत्वमुद्घोषयन्तः। शब्दानां व्याकरणानाम् अलंकाराणां च स्पष्टीकरणं केवेरभिप्राय एव इति तेषां मतम्। मेघदूतस्य महत्त्वम्, औदार्य्यं च तेषां निर्वचनविषयाद् बाह्यमेव।

मेघदूतं गगनधर्मि काव्यमेव, तस्य विचित्रा गतिः कवि-हृदयस्य स्पन्दनं लब्ध्वा जडाऽपि चैतन्यं लभते; अचलाश्च चला भवन्ति। उत्तरापथस्य अचलो भूपिण्डः कालिदासस्य छन्दो-विच्छित्तिं स्पृष्ट्वा गगनधर्मी भवति; तदा तस्य नूतना आकांक्षा जायते। कुत्र चरणक्षेपो मन्दो भवति कदा आक्रान्तोऽपि वा भवति।

आदिकवेरनुष्टुभः स्पन्दनं मदाक्रान्तेन छन्दसा प्रस्तारयितुं यादृशी स्फीतिः कालिदासस्य प्रफुल्ले हृतसरोजेऽविद्यत सा एव हि कविकल्पनालोकस्य विपुला स्फीतिः; तदा मेघमेदुरा काव्यस्य शोभा मयूरधर्मा भवति। मन्दाक्रान्ताया एका रीतिर्धरातलस्य शाद्वलं स्पृशति अपरा गहनगगनमधिरोहति।

मेघदूतं सौन्दर्यस्य शाश्वती दीपशिखा, तत्र आलोको वर्तते, दाहोऽपि जायते, चिरविरहिणां हृदयस्य निविड़संवेदनासंचरणशीलो दृश्यते ह्यनुतापोऽपि। यदा सौन्दर्यस्य कामोद्भूतो निविड़रागो हृदये विलुण्ठति, उदात्तभावानां विभावदेहोऽपि जायते; तदा एतादृशानि विरहकाव्यानि उपनिषद्धर्माणि भवन्ति। तेषां मध्ये अपाणिपादः पुरुषोऽपि बृंहणं करोति; चक्षुःश्रुतिगोचराः पदार्थधर्मा अपि सीमानमतियन्ति; सन्दर्भान्तरं प्राप्य एतादृशविषयविनिवृत्त्या रसनिष्पत्तिरपि 'रसो वै स' इति रूपेण स्थविराणां मीमांसाविषयो भवति। पुंखानुपुंखक्रमेण विप्रलम्भ्य धार्मो भावो जायते, तदा तस्य सान्द्रत्वम् अलौकिकमेव, वाणी लोकं धर्मान् अतीत्य मीमांसापथं नावतरति। तदा शब्दस्य अनिर्वचनीयव्यापारो व्यज्यते स्फोटयति शब्दस्य शक्तिग्रहम्। 'ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः' इति वदन् कालिदासोऽपि अच्युतपदवी गृहीत्वा कविशेखराणां मध्ये भगवान् कालिदास इति रूपेण समर्चनीयो भवति। अद्वैतसाम्राज्याधिरूढ़ाः सर्वशास्त्रपारंगताः सर्वतन्त्रस्वतंत्रा वेदान्तसिद्धान्तवागीशा मधुसूदनसरस्वतीवर्या अच्युतगुणानुकीर्तनक्रमेण कंठतः उद्घोषयन्ति यत् 'कृष्णात् परं किमपि तत्त्वमहं न जाने'। एवमेव प्रकारेण कविकुलशेखरीभूताः काव्यशास्त्रधौरेया रससिद्धाः काव्याम्बुधिपारंगताः महाकवयोऽपि अधिकबलेन उद्घोषयन्ति—

'न कालिदासादपरस्य वाणी' इति।

—0—

साहित्यदर्पणीय-

# दोषविशेषभेदविमर्शः

( गुरुशिष्यसवादरूपः )

[ निबन्धकः—श्रीरामधन शास्त्री ]

शिष्यः—उपाध्याय, साहित्यदर्पणस्य दोषपरिच्छेदं बहुशः पठन्नपि नैवावधारयितुं शक्नोमि भेदान् परस्परमेषां दोषाणाम्, तदेतद्भेदावबोधो यथा मे स्फुटतया भवेत्, तथोपदेशं दीयमानमभ्यर्थये भवता ।

गुरु.—वत्स, कथमनवबोधस्ते समुपजातः ? ननु, दोषाणां लक्षणानि यदि साभिनिवेशं पर्य्यालोच्येरन्, तदैवैतेषां परस्परं भेदः सम्यक्तया परिज्ञातो भवेत् । पश्य,—अस्ति हि 'परुषवर्णतया श्रुतिदुःखावहत्वम्' इति दुःश्रवत्वदोषस्य लक्षणम्, 'वर्णानां रसानुगुण्यविपरीतत्वं वर्णप्रतिकूलत्वम्' इति च वर्णप्रतिकूलत्वदोषस्य लक्षणम् । तत्र यथासंख्यम् 'कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशं गता' इत्याद्यस्य 'ओवट्टइ उल्लट्टइ सअणे कहिंपि मोट्टाअइ' इत्यादि चापरस्योदाहरणम् ।

अत्रोदाहरणद्वय एव शृङ्गाररसस्य परिवेशनं स्फुटम् । परं प्रथमस्योदाहरणे 'कार्त्तार्थ्यम्' इत्यादौ श्रुतिकटूनां वर्णानां प्रयोगो यथा शृङ्गाररसस्य परिपन्थी जातस्तथा द्वितीयस्योदाहरणे 'ओवट्टइ' —इत्यादौ नीरसटकारसघातस्य प्रयोगोऽपि । तस्मादुभयत्रैव प्रायेण वर्णानां रसपरिपन्थित्वात् समानतया कथं नैकरूपत्वमनयोरिति बुद्धिर्जायत एवापातदृष्ट्या जनगणमनःसु, तवापीदृश्येव धारणा सम्भवद्रूपेति तर्कयामि ।

शिष्यः—प्रभो, मनोगतमाकूतं समुदितवान् भवान् । तदत्र यद्भेदसमाधानं तदुच्यतां कृपया ।

गुरुः—तात, दुःश्रवत्वे कर्कशस्य वर्णसंघातस्यैव प्रयोगः प्रायेण, वर्णप्रातिकूल्यस्थले पुनः 'ओवट्टइ उल्लट्टइ' इत्यादौ अनुप्राप्रास-प्रकर्षप्रदर्शनार्थं कविनातिनीरसटकारसमूहस्य प्रयोगः कृतः। स चात्र प्रकृत रस विरोधी जातः। वस्तुतस्तु वर्णप्रातिकूल्यस्थले वर्णानां रसविरोधित्वमेव विशेषतो ग्राह्यम्। एवं च कोमलस्य वर्णसमूहस्यापि कदाचिद् वीररसादौ प्रयोगे एतादृग्दोषः स्यादित्यनयोः परस्परं भेदो ज्ञेयः।

२। शिष्यः—गुरो, इदानीमपरयोरेवंभूतयोर्दोषयोर्भेदः सम्भवति चेत्, तमप्यवबोधयतु भवान् मां सदयम्।

गुरुः—वत्स, योऽयं निहतार्थत्वनामा दोषः, स खलु अप्रतीतत्वदोषेणापाततस्तुल्यतां भजते, तस्मादेतयोर्भेदमधुना व्याकरोमि, शृणु।

शिष्यः—उपाध्याय, अथ पृच्छामि,—निहतार्थत्वदोषस्याप्रतीतत्वदोषस्य च लक्षणं कीदृशं भवति? येन तयोरेकरूपतया प्रतीतिः स्यादिति?

गुरुः—शिष्य, 'उभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगो निहतार्थत्वमि'ति निहतार्थत्वदोषस्य 'एकदेशमात्रप्रसिद्धत्वम् अप्रतीतत्वम्' इति च अप्रतीतत्वदोषस्य लक्षणम्। तत्राद्ये 'यमुना शम्बरमम्बरं व्यतानीत्' इत्युदाहरणम्, द्वितीये च 'योगेन दलिताशयः' इति। एकाधिकार्थोऽपि शम्बरशब्दो दैत्ये प्रसिद्धः, स पुनरिह अप्रसिद्धे जलरूपेऽर्थे प्रयुक्त इति निहतार्थत्वम्। अपरत्र च 'आशय'शब्दस्य योगशास्त्ररूपशास्त्रैकदेशे वासनार्थे प्रयोगात् अप्रतीतत्वदोषः समुपजातः। वञ्चापातदृष्ट्या द्वयोरेवानयोरेकरूपताप्रतीतिः। परं निहतार्थत्वमेकाधिकार्थकशब्दविषयकम्, अप्रतीतत्वं पुनरेकार्थकशब्दविषयकमित्यनयोर्भेदो द्रष्टव्यः।

शिष्यः—आचार्य्य, पृच्छामि किञ्चित्—क्लिष्टत्वदोषस्य संकीर्णत्व दोषस्य च साधारणबुद्धया कथं तुल्यरूपत्वम्, येनानयोः परस्परं भेदः साधनीयः स्यात्?

गुरुः—वत्स, 'अर्थप्रतीतेर्व्यवहितत्वं क्लिष्टत्वमि'ति क्लिष्टत्व-

दोषस्य लक्षणम् । 'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः' इति तदुदाहरणम् । इह हि 'आपः प्रसन्ना' इति वाच्यार्थमवबोधयितु-मुक्तरूपं वाक्य वक्ता प्रयोजितवान् । परं श्रोतुरर्थबोधवेलायां—क्षीरोदजा लक्ष्मीः, तस्याः वसतिः पद्मम्, तस्य जन्मभुवः आपः, ताः प्रसन्ना इत्येवं समासादिविभजनजनितविलम्बेन श्रवणसमकालमेवात्र श्रोतुरर्थानवगतौ क्लेश इति बोध्यम् ।

'वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वम्' इति हि संकीर्णतादोषस्य लक्षणम् । 'मुञ्च चन्द्रं कुरङ्गाक्षि पश्य मानं नभोऽङ्गने' इति तस्योदाहरणम् । अत्र 'हे कुरङ्गाक्षि, नभोऽङ्गने चन्द्रं पश्य, मानं मुञ्चे'ति वाच्यार्थः । स च एकस्य वाक्यस्य मध्ये अपरस्य वाक्यस्य पदानामनुप्रवेशात् श्रवणसमनन्तरमेव श्रोतुर्बोधार्हो न भवतीति यथार्थत एव जायतेऽत्र श्रोतुः क्लेशः । तस्मादुभयोरनयोर्दोषयोः प्रायेण तुल्यरूपतापातः ।

अत्र हि क्लिष्टत्वदोषस्य एकवाक्यविषयतया सङ्कीर्णत्व-दोषस्य चानेकवाक्यविषयतया परस्परं भेदः समुन्नेयः ।

शिष्यः—गुरो, अथ विधेयाविमर्शदोषेण सह कथमभवन्मत-सम्बन्धनामकदोषस्यापातदृष्ट्या एकरूपता स्याद् यतस्तयोः परस्परं भेदः साध्यते ?

गुरुः—साधूक्तं वत्स, आदौ तावदनयोर्लक्षणे उदाहरणे चोक्त्वा यथैतयोस्तुल्यरूपतापातस्तत्प्रदर्शनपुरःसरं भेदं कथयामि, शृणु ।—'विधेयांशस्य विमर्शाभावेन गुणीभूतत्वम् अविमृष्टविधेयां-शत्वम्' इति विधेयाविमर्शदोषस्य लक्षणम् । यत्र विधेयस्य प्रधानस्यांशस्य भागस्य विमर्शाभावेन प्रधानतया निर्देशाभावेन गुणीभूतत्वमप्रधानीभूतत्वं तत्र विधेयाविमर्शदोषत्वमिति हि लक्षणार्थः । अत्रोदाहरणम्—'स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः' इति । इह हि भुजानां वृथात्वं विधेयम् । तच्च वक्तुर्वाच्यम् । परमत्रोच्छूनपदेन सह 'वृथापदस्य समासे तद् गुणीभूतम् । एवञ्चानया रीत्यात्र उच्छूनत्वपदस्यैव विधेयत्वं

जातं वृथात्वस्य च पुनरुद्देश्यत्वमेव। एतेन च वक्तुरभिमते वाच्यार्थे श्रोतुर्निर्मनस्कतेति रसप्रकर्षनाशः।

'पदविशेस्याभिमतसम्बन्धानुपपत्तिमद्वाक्यत्वमभवन्मतसम्बन्धत्व'मिति अभवन्मतसम्बन्धतादोषस्य लक्षणम्। 'या जयश्रीर्मनोजस्य यया जगदलंकृतम्। यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा' इति तत्रोदाहरणम्। अत्र यच्छब्दनिर्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात् तदेकान्तःपातिना एणाक्षीशब्देनान्येषां वाक्यानां सम्बन्धो वक्तुरभिमतोऽपि नोपपद्यत इति वक्त्रभिमतसम्बन्धानुपपत्त्या श्रोतुर्वैमनस्योदयेन रसप्रकर्षहानिः। इत्थञ्चोभयत्रैव श्रोतरि रसप्रकर्षनाशात् प्रायेण तुल्यरूपतापातः। ततश्च विधेयाविमर्शे यदेव पदमविमृष्टं तदेव पदं दुष्टम्, अभवन्मतसम्बन्धस्थले तु एकस्यापि पदस्य प्राधान्येनाप्रतीतौ वाक्यस्थानां सर्वेषामेव पदानां तदर्थत्वेनाप्रतीतिरिति परस्परमनयोर्भेदो ज्ञेयः।

शिष्यः—गुरो, अध्यापनवेलायां भवतैव कदाचिदुक्तं,—विधेयाविमर्शेन दोषेण सह विध्ययुक्तत्वदोषस्य प्रायेण समानरूपतेति। साम्प्रतं तत् कथमिति श्रोतुमिच्छामि।

गुरुः—वत्स, विधेयाविमर्शदोषस्य लक्षणमुदाहरणञ्च प्रागेवोक्ते। इदानीं विध्ययुक्तत्वदोषस्य सलक्षणमुदाहरणमुक्त्वा तत् प्रदर्शयामि। 'अयोग्ये विधित्वारोपो विध्ययुक्तत्वमि'ति विध्ययुक्तत्वदोषस्य लक्षणम्। विधिरत्र समापिका क्रिया। तस्या अयुक्तता अर्थात् असमापिकाक्रियास्थलेऽपि समापिकाक्रियात्वारोपः। एतेन श्रोतुः प्रतीति-विपर्य्यासाद् रसग्राहप्रतिबन्ध इत्यस्य दोषत्वम्। तथाहि,—'आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति' इति विध्ययुक्तत्वदोषस्योदाहरणम्। अत्र परपक्षान् हत्वा स्वपक्षमानन्दयिष्यतीति विधेयम्। तच्च 'हनिष्यती'ति 'स्यति' प्रत्ययेन गुणीभूतमिति विधेयाविमर्शदोषतुल्यतापाततोऽस्य दोषस्यायाति।

तत्र विधेयाविमर्शे शब्दश्रवणानन्तरमेव विधेयस्य गुणीभूतत्वेन प्रतीतिः, विध्ययुक्तत्वदोषस्थले तु अर्थप्रतीत्यनन्तरं विधेयस्य गुणीभूतत्वेन ज्ञानमित्यनयोर्भेदः।

६ । शिष्य:—उपाध्याय, असमर्थत्वमप्रयुक्तत्वं चेति दोषद्वयमपि पठितमस्माभिः । परं कथमनयोरेकरूपतयावभासः कीदृग् वैतयोर्भेद इति सूक्ष्मत्वात् नावधारयितुं शक्यते । तत् सर्वमिदमवबोधय नो भवान् कृपया ।

गुरुः—शिष्य, (१) 'चरणादियत्किञ्चित्सहकारिविरहाद् विवक्षितार्थ-प्रत्यायनाशक्तत्वम् असमर्थत्वमि'त्यसमर्थत्वदोषस्य लक्षणम् । तत्रोदाहरणम्—'कुञ्जं हन्ति कृशोदरी'ति । धातुपाठे हि 'हन हिंसागत्योः' इत्यनेन हनधातुः हिंसारूपे चार्थे पठितः । परमुदाहरणे हन्तिरयं गमनरूपेऽर्थे प्रयुक्तोऽपि वक्तृवाच्यं गमनरूपमर्थं प्रकाशयितुं नैव शक्नोति, चरणादियत्किञ्चित्सहकारिविरहात् । एवञ्च वक्तुरभिप्रेते वाक्यार्थेऽशक्ततया हन्तिरिह श्रोतृ रसास्वादने वैमनस्यमुत्पादयतीति ज्ञेयम् ।

(२) अपरत्र च 'तथा प्रसिद्धावपि कविभिरनादृतत्वमि'त्यप्रयुक्तत्वदोषस्य लक्षणम् । तत्र 'भाति पद्मः सरोवरे' इत्युदाहरणम् । इह 'वा पुंसि पद्मम्' इत्यमरकोषादौ विकल्पेन पद्मशब्दस्य पुंस्त्वमुक्तम् । परं पद्मशब्दस्य पुंस्त्वे कोषादिसिद्धेऽपि कविभिस्तस्यानादृतत्वादत्र रसास्वादनव्यापारे श्रोतुर्विमनस्कता स्वभावत एवोत्पद्यते । एवञ्चोभयत्रैव याथार्थ्यप्रकाशन विलम्बनात् प्रायेण तुल्यरूपतापातो लक्ष्यते ।

तस्मादिह असमर्थत्वमेकाधिकार्थकशब्दविषयम्, अप्रयुक्तत्वं पुनरेकार्थकशब्दविषयमिति परस्परमनयोर्भेदः ।

७ । शिष्य:—गुरो, असमर्थत्वदोषस्य निहतार्थत्वदोषस्य च परस्परमन्यथापि भेदः श्रूयते । अथ कीदृगयं भेदः स्यात् ?

गुरुः—वत्स, 'सर्वथा प्रयोगाभाववत्त्वमसमर्थत्वं' 'विरलप्रयोगवत्त्वञ्च निहतार्थत्व'मिति दोषयोर्द्वयोर्लक्षणम् । इह हि असमर्थत्वे शब्दस्य सर्वथा प्रयोगाभावः, निहतार्थत्वे तु शब्दस्य विरलः प्रयोग एवेति परस्परमनयोर्भेदः ।

८ । शिष्य:—उपाध्याय, यथा खलु वाच्यार्थबोधनासामर्थ्यात् असमर्थत्वनामा दोषः, एवमवाचकत्वदोषोऽपि । तस्य

विवक्षितार्थ-बोधकत्वेऽसामर्थ्यादिति । तत् कथमनयोर्नैकरूपता स्यात् ?

गुरुः—तात, सत्यम्, आपातदृष्ट्यानयोरभिन्नतयैव प्रतीतिरस्ति ; परं पर्य्यालोचनयैतौ भिन्नरूपावेव । तथाहि,—चरणादिमत्किञ्चित्सहकारिविरहात् 'कुञ्जं हन्ति कृशोदरी'त्यादौ हन्त्यादयो धातुपाठादिषु 'हन हिंसागत्यो'रित्यनेन गमनार्थे पठिता अपि न तत्र समर्थाः, अवाचकत्वस्थले तु 'तदर्थासत्त्वेन तद्बोधनाक्षमत्वमवाचकत्वमि'ति लक्षणात् 'दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नापि यामिनी'त्यादौ दिनपदं प्रकाशमयाद्यर्थे कोषादिषु नैव धृतमिति भिद्यत एवायमवाचको नाम दोषोऽसमर्थत्वरूपाद् दोषादिति । एवञ्चासमर्थत्वे तत्तदर्थे पठितानामपि शब्दानां यत्किञ्चिज्ज्ञापकाभावान्न तत्तदर्थबोधकत्वम्, अवाचकत्वे तु तत्तदर्थेऽपठितानामपि शब्दानां प्रकरणादिना तत्तदर्थाविनिगमनमित्यनयोर्भेदः ।

६ । शिष्यः—आर्य्य, अथात्र पृच्छामि,—यदत्राधिकपदत्वमपुष्टत्वञ्चेति दोषद्वयम्, तत् कथमेकविधं न स्वीकार्य्यमिति ? यद्वादनयोरेकतरस्य स्वीकरणे का हानिरिति चेत् ?

गुरुः—शिष्य, साधारणबुद्ध्यानयोस्तुल्यरूपतापातः सत्यम्, परं पर्य्यालोचनद्वारैतयोर्भिन्नरूपतैव । पश्य,—'अनावश्यिकपदवत्त्वमधिकपदत्वमि'त्यधिकपदत्वदोषस्य लक्षणम् । तत्रोदाहरणम्,—'पल्लवाकृतिरक्तोष्ठी' इति । अत्राकृतिपदमधिकम् । आकृतिपदाभावेऽपि पल्लववद् रक्तौ ओष्ठौ यस्या इति बहुव्रीहिसमासेन तदर्थप्रतीतेः । अपरत्र 'मुख्यानुपकारित्वमपुष्टत्वमि'त्यपुष्टत्वदोषस्य लक्षणम् । मुख्यानुपकारित्वं पुनरुद्देश्यानुपयोगित्वमित्यवसेयम् । तत्रोदाहरणम्,—'विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये' इति । अत्र विततशब्दो रोषत्यागं प्रति न किञ्चिदुपकुरुते इति विततशब्दस्य मुख्यानुपकारित्वम् । एवञ्च विततशब्दोऽत्राधिक इति 'अधिकपदत्वदोषेणैवास्य गतार्थत्वमिति न मन्तव्यम्, भिन्नतयास्य निर्देशात् । तथा च अधिकपदत्वदोषस्थले

पदार्थान्वयप्रतीते: समकालमेव वाधप्रतिभास:, अर्थात् अनावश्यिक-तया वैयर्थ्यज्ञानम्, अपुष्टत्वदोषस्थले तु पदार्थान्वयप्रतीते: परं तदित्यनयोर्भेद: ।

किञ्च अधिकपदतादोषस्य निरर्थकतादोषेणापि नैव गतार्थ-त्वम्, अधिकपदतादोषस्य वाक्यगततया निरर्थकतादोषस्य च पद-गतया परस्परं भेदादिति ।

१० । शिष्य:—गुरो, अधिकपदत्वदोषेण सहानियमपरि-वृत्तित्वदोषस्य भेद: कथं साधनीय: ?

गुरु:—तात, अधिकपदत्वदोषस्थले शब्दश्रवणसमकालमेव दोषस्य प्रतीति:, अनियम-परिवृत्तित्वदोषस्थले अर्थात् अनियमे नियमरूपदोषस्थले तु अर्थप्रतीतेरनन्तरमेव दोषत्वेन प्रतीतिरिति परस्परमनयोर्भेद: समुन्नेय: ।

११ । शिष्य:—गुरो, वाच्यानभिधाननामा योऽयं दोष:, स कथं न्यूनपदत्वदोषाद् भिद्यते ? प्रायेण द्वयोरनयोस्तुल्यरूप-त्वात् ?

गुरु:—वत्स, सत्यम्,—द्वाविमौ दोषावापातदृष्टचा समानत्वं भजेते, पर्य्यालोचनया पुनरिमौ भिन्नावेव । पश्य,—'अवश्य-वाच्यस्यानभिधानत्वं हि वाच्यानभिधानत्वम्' इति वाच्यानभिधान-त्वदोषस्य लक्षणम् । तत्रोदाहरणम्,—'व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि कुप्यसि' इति । अत्र व्यतिक्रमलवम् अपीति अपिरवश्यं वाच्य:, स तु नोक्त एव । अपरत्र 'अनिश्चेयान्वयिपदहीन-वाक्यत्वं न्यूनपदत्वम्' इति न्यूनपदत्वदोषस्य लक्षणम् । तत्र 'यदि मय्यर्पिता दृष्टि: किं ममेन्द्रतया तदा' इत्युदाहरणम् । अत्र प्रथमे पादे 'अर्पिते'ति क्रियाया: कर्त्तृभूतस्य 'त्वयेति' पदस्यानुल्लेखात् न्यूनपदत्वं सिद्धम् ।

एवञ्चोभयत्र यथाक्रमम् 'अपि'रूपस्य पदस्य 'त्वये'ति कर्त्तृपदस्य चानुल्लेखादापातदृष्टचा तुल्यरूपताप्रतीतिरेव द्वयोरनयो: सम्भवति । किन्तु पर्य्यवसाने न्यूनपदत्वस्थले 'अपि'प्रभृतीनामर्थद्योतकता-

मात्रत्वस्य, 'त्वयेति'ति कर्त्तृभूतस्य पदस्य चार्थवाचकत्वस्य सिद्धत्वादनयोः परस्परं भेदः साधनीयः ।

१२ । शिष्यः—आचार्य्य, अन्यदपि किञ्चित् पृच्छामि,—न्यूनपदत्व-साकाङ्क्षत्वदोषयोः कीदृशो भेदो भवेत् ? येन दोषद्वयमिदं पृथकृतया निर्दिश्यते ?

गुरुः—वत्स, न्यूनपदतादोषस्य लक्षणमुदाहरणञ्चोक्ते प्रागेव । सम्प्रति साकाङ्क्षतादोषस्य लक्षणमुदाहरणञ्चोक्त्वा द्वयोरनयोर्भेद व्याकरोमि, शृणु,—'अनुपपद्यमानस्यार्थस्य स्वोपपत्तये अनुक्तार्थसापेक्षत्वं साकाङ्क्षत्वम्' इति साकाङ्क्षतादोषस्य लक्षणम् । अत्र हि आकाङ्क्षितविषयानभिधानेन विवक्षितार्थानवगमाद् रसप्रतीति-प्रतिबन्धेनास्य दोषत्वमिति ज्ञेयम् ।

ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम् ।
स्त्रीरत्नञ्च कथं नाम मृष्यते भार्गवोऽधुना ।।

इति हि साकाङ्क्षतादोषस्योदाहरणम् । उदाहरणेऽस्मिन् 'उपेक्षितुमि'ति तुमन्तक्रियापदस्याकाङ्क्षा विद्यत एव । तदभावाद् विवक्षितार्थानुपपत्तिरिति साकाङ्क्षतादोषस्यात्र समुद्भवः । न्यूनपनत्वदोषेण सह साकाङ्क्षतादोषस्यापातदृष्ट्या समताज्ञानं पुनरित्थमवधेयम्,—न्यूनपदत्वे यथा यत्किञ्चित्पदस्यानुल्लेखस्तथा साकाङ्क्षतादोषस्थलेऽपि अर्थदिशा 'उपेक्षितुमि'त्यादिरूपस्य कस्यचित् क्रियापदस्यानुल्लेखोऽस्ति । तस्मादुभयोरनयोर्दोषयोः समताबुद्धिः स्वभावसिद्धैव । वस्तुतस्तु न्यूनपदत्वे शब्दाध्याहारः साकाङ्क्षत्वे तु अर्थाध्याहार इति परस्परमनयोर्भेदः साधनीयः ।

१३ । शिष्यः—उपाध्याय, योऽयं कथितपदत्वनामा दोषः, स हि अनवीकृतत्वदोषेण सह समानरूपतां भजत इति मन्ये । कथितपदतादोष इवात्रानेकवारानेकविधशब्दोपादानात् । तत् कथमनयोर्भेदः साधनीयः स्यात् ?

गुरुः—वत्स, अत्रानयोर्लक्षणे सोदाहरणे समुल्लिख्य भेदः प्रदर्श्यते, शृणु सावधानम्,—'प्रयोजनशून्यत्वे सति अभिन्नार्थक-

समानानुपूर्वीकपदान्तरवद्वाक्यत्वं कथितपदत्वमि'ति कथितपदता-दोषस्य लक्षणम्। अत्र 'रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्'इति 'जक्षुर्विसं धृतविकाशि विसप्रसूना:' इति यथाक्रमं चोदाहरणद्वयम्। आद्ये 'रतिलीले'ति 'सलील'मित्यत्र च वारद्वयमेकार्थकसमानानुपूर्वीकपदद्वयवत्त्वात्' अन्त्ये च मृणालरूपैकार्थकविसशब्दस्य वारद्वयमुल्लेखात् कथितपदतादोषो जात इति ज्ञेयम्। अपरञ्च 'एकविधशब्देन पुनः पुनरेकार्थकथनमनवीकृतत्वमि'त्यनवीकृतत्वदोषस्य लक्षणम्।

'सदा चरति खे भानुः सदा वहति मारुतः।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः॥'

इत्यस्योदाहरणम्। अत्र 'सदे'ति एकविधस्य शब्दस्य वारं वारं प्रयोगः, न पुनरिह तच्छब्दपर्य्यायिकतया तदर्थकस्य शब्दान्तरस्य प्रयोग इति कथितपदतादोषेणास्य तुल्यता भवितुं युक्ता। पर पर्य्यालोचनया दृश्यते, कथितपदत्वस्थले एकस्यैव शब्दस्य वारं वारं प्रयोगः, अनवीकृतत्वदोषस्थले पुनर्विच्छित्त्यभावे पर्य्यायगत-शब्दान्तरेणापि प्रयोग इति परस्परमनयोर्भेदः।

१४। शिष्यः— उपाध्याय, इदानीमन्यदपि किञ्चित् पृच्छामि। योऽयं पतत्प्रकर्षतानामको दोषः, तस्य व्याहतत्व-दोषेण तुल्यत्वात् कथं पृथक्तयास्य समुल्लेख इति नावधारयामि, तदत्र कीदृशमस्ति समाधानम्?

गुरुः—तात, आदौ तावदनयोर्लक्षणे सोदाहरणे समाकर्णय। पश्चाद् यथैतयोरेकविधत्वाभावस्तज् ज्ञास्यसि। वत्स, 'क्रमिक-प्रकर्षहीनत्वं पतत्प्रकर्षत्वम्' इति पतत्प्रकर्षतादोषस्य लक्षणम्। तत्रोदाहरणम्'—

प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः।
श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेशरी॥

इति। अत्र प्रथमपादादारभ्य चतुर्थपादं -यावत् अनुप्रासप्रकर्षः क्रमशः पतित इति तन्नामको दोषोऽत्र संघटितः। अन्यत्र च

'कस्यचिद् वस्तुनः प्रागुत्कर्षमभिधाय पश्चादपकर्षप्रतिपादनम्' अथवा 'प्रागपकर्षमभिधाय पश्चादुत्कर्षप्रतिपादनं व्याहतत्वम्' इति व्याहतत्वदोषस्य लक्षणम्।

हरन्ति हृदयं यूनां न नवेन्दुकलादयः।
वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका ॥ इति

तदुदाहरणम्। अत्र प्रथमांशे यस्याश्चन्द्रिकाया युवजनहृदयेषु आनन्दजनकत्वाभावादपकर्षः कथितः, उत्तरांशे तस्या एव चन्द्रकलारूपिण्या नायिकायाः पुनरानन्दजनकतया उत्कर्षोऽपि प्रतिपादितः। एतेनात्र व्याहतत्वदोषप्रसङ्गः। एवञ्च प्रकर्षापकर्षप्रतीतिद्वारा द्वयोरनयोरेकरूपतापातः कथञ्चिद् भवत्येव। तस्मादत्र पतत्प्रकर्षतास्थले प्रकर्षस्य शाब्दत्वाद् व्याहतत्वस्थले च तस्यार्थत्वादनयोर्भेदः साधनीयः।

१५। शिष्यः—आचार्य्य, यावेतौ अर्धान्तरैकपदतासमाप्तपुनरात्ततानामकौ दोषौ, तौ हि सर्वथा भिन्नलक्षणावेव। तत् कथमनयोः परस्परं तुल्यतापातः सम्भवतीति संशयितोऽस्मि। तद् भवद्भिरभिधीयमानं समाधानमत्राभिलषामि।

गुरुः—शिष्य, संशय एव जनं समाधानमासादयति। तदत्र कथयामि, शृणु। अत्र हि 'स्वावस्थानार्धादपरार्धसन्निविष्टैकमात्रपदवद् वाक्यत्वमर्धान्तरैकपदत्वम्' इत्यर्धान्तरैकपदत्वदोषस्य लक्षणम्। एष च दोषः कदाचित् श्लोकपूर्वार्धवाक्यघटकैकपदस्य श्लोकपरार्धे परार्धवाक्य-घटकैकपदस्य वा श्लोकपूर्वार्धे वर्त्तमानतया द्विप्रकारो भवितुमर्हति। तत्राद्य उदाहरणम्—

इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः।
जगन्मा कुरु तन्वङ्गि मानं पादानते प्रिये ॥

इति। अत्र प्रथमार्धगतवाक्यघटकीभूतस्य 'जगत्' इत्येकपदस्य परार्धगततया पाठादर्धान्तरैकपदतादोषः। अन्यत्र 'समाप्तवाक्यस्थयत्किञ्चित्पदविशेषणतया पदान्तरस्योपादानत्वं समाप्तपुनरात्तत्वमि'ति समाप्तपुनरात्ततादोषस्य लक्षणम्। एष च

दोषः क्वचित् कर्त्तृपदस्य क्वचित् कारकान्तरस्य क्वचिद्वा सम्बन्धिपदस्य विशेषणतया पदान्तरस्योपादानाद् बहुविधो भवति। तत्राद्यस्योदाहरणम्—

नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम्॥ इति।

अत्र तृतीयपादगतेन 'शशिनः पादा' इति कर्त्तृपदेन 'पतन्ति' इति क्रियापदेन च वाक्यसमाप्तावपि चतुर्थपादगतं 'भासयन्तः' इति पदं कर्त्तृविशेषणतया पुनरात्तमिति समाप्तपुनरात्ततादोषो घटितः। एवञ्च अर्धान्तरैकपदतादोषस्थले यथा 'जगदिति'पदस्य द्वितीयार्धगतत्वं समाप्तपुनरात्ततादोषस्थलेऽपि तथा 'भासयन्तः' इतिपदस्य चतुर्थपादगतत्वमित्यापातदृष्ट्या द्वयोरेतयोस्तुल्यतापातः। परमत्रार्धान्तरैकपदत्वमनेकवाक्यविषयं समाप्तपुनरात्तत्वं पुनरेकवाक्यविषयमित्यनयोर्भेदः साधनीयः।

१६। शिष्यः—उपाध्याय, अथ समाप्तपुनरात्तत्वदोषस्य निर्मुक्तपुनरुक्ततादोषस्य च प्रायेण समानरूपतया कथमनयोर्भेदः स्यात्?

गुरुः—तात, समाप्तपुनरात्तत्वदोषस्य लक्षणमुदाहरणञ्च प्रागेवोक्तम्। इदानीं निर्मुक्तपुनरुक्तत्वदोषस्य लक्षणमुदाहरणञ्चोक्त्वा भेदमनयोः कथयामि।—'समाप्तस्यापि वाक्यार्थस्य कारकान्तरेण पुनरुपादानत्वं निर्मुक्तपुनरुक्तत्वम्' इति निर्मुक्तपुनरुक्तत्वदोषस्य लक्षणम्। निर्मुक्तः समाप्तोऽपि पुनरुक्त इति निर्मुक्तपुनरुक्तः। 'लग्नं रागावृताङ्ग्या सुदृढमिह यथैवासि यष्ट्यारिकण्ठे मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती। तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि

१७। शिष्यः—गुरो, अक्रमतादोषस्यास्थानस्थपदतादोषस्य च परस्परं तुल्यरूपतया कीदृगनयोर्भेदः सम्भवतीति नावधारयामि, तद् यथा भेदज्ञानमत्र सम्यग् जायेत, तदर्थं विवरणं दीयमानमभ्यर्थ्यते भवता ।

गुरुः—शिष्य, अहमत्र विवृणोमि, शृणु,—इह खलु उभयत्रैव अस्थाने पदप्रयोगदिशापाततस्तुल्यरूपताबोधो जायते । किन्तु 'यस्य यदव्यवहितपूर्ववर्त्तित्वनियमेन यदव्यवहितपरवर्त्तित्वनियमेन वा विवक्षितार्थानुभावकत्वं, तस्य तत्परिहारेणान्यत्र विद्यमानत्वं', यद्वा 'स्वानुपस्थाप्यपदोत्तराव्ययपदप्रयोगवत्त्वमिति वाक्रमत्वमित्यक्रमतादोषस्य लक्षणम् ।

द्वयं गतं सम्प्रति शोचनीयतां
समागमप्रार्थनया पिनाकिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी ॥

इत्येतस्योदाहरणम् । अत्र 'त्वमित्यनन्तरमेव चकारो युक्तः, स च यथास्थानं न दत्त इत्यक्रमतादोषोऽत्र घटितः ।

'अनुपयुक्तस्थाने वाचकपदप्रयोगवत्त्वमस्थानस्थपदत्वमि'त्यस्थानस्थपदत्वदोषस्य लक्षणम् । 'तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्यगङ्गामि'त्यादि, 'हितान्न यः संशृणुते स किंप्रभुः' इत्यादि च तदुदाहरणे । इह हि यथासंख्यं 'तदीय' पदात् पूर्वं 'गङ्गामि'ति पदस्य 'संशृणुते' इत्यतः पूर्वं च निषेधार्थकस्य नञः पाठो युक्तः । स च यथास्थानं न विहित इति दोषोऽयमापतितः ।

परं पर्य्यालोचनया यत्र खल्वस्थाने द्योतकपदप्रयोगस्तत्राक्रमतानामा दोषः, यत्र पुनरस्थाने वाचकपदप्रयोगस्तत्रास्थानस्थपदतानामा दोषः स्यादिति परस्परमनयोर्भेदो विचारणीयः ।

१८। शिष्यः—गुरो, अक्रमत्वदुष्क्रमत्वदोषयोः को नाम भेदो भवेत् । यतो द्वैविध्येनानयोरुल्लेखो विहितः ?

गुरुः—वत्स, 'स्वानुपस्थाप्यपदोत्तराव्ययपदप्रयोगवत्त्वमि'त्युक्तं प्रागक्रमतादोषस्य लक्षणम्, उदाहरणमपि दत्तमस्य 'द्वयं गतं

सम्प्रती'त्यादि । यथास्थानं चकारादीनामव्ययपदानां प्रयोगाभावादक्रमतादोषस्य प्रसक्तिरिति हि दोषस्यास्य वक्तुंलार्थः । 'विपरीततया दूषितक्रमवत्त्व दुष्क्रमत्वमि'ति हि दुष्क्रमत्वदोषस्य लक्षणम् । 'देहि मे वाजिनं राजन् गजेन्द्रं वा मदालसम्' इत्येतस्योदाहरणम् । अत्र हि मदालसस्य गजेन्द्रस्य प्रथमं याचनमुचितं महामूल्यत्वात्, तदनन्तरं वाजिनो न्यूनमूल्यत्वात् । याचनादिव्यापारे तादृशव्यवस्थाया एव सर्वजनसमादृतत्वं शोभनत्वञ्च । अत्र पुनर्गजवाजिनोर्मध्येऽल्पमूल्यस्य वाजिनो याचनं प्रथमं कृतमिति याचनस्य क्रमो दुष्ट इति दुष्क्रमत्वदोषप्रसक्तिः ।

एवञ्च द्वयोरेवानयोर्दोषयोरस्थानस्थतयापाततस्तुल्यताबोधो जायते ।

परमत्राक्रमत्वं शव्दविषयम्, दुष्क्रमत्वं पुनश्चार्थविषयमित्यनयोर्भेदो विधेयः ।

१९ । शिष्यः—तात, अथ वाच्यानभिधानत्वन्यूनपदत्वदोषयोः को वा भेदो भवेत् ? येनानयोः पृथक्तया समुल्लेखो दृश्यते ?

गुरुः—वत्स, 'अवश्यवाच्यस्यानभिधानं हि वाच्यानभिधानम्' इति वाच्यानभिधानदोषस्य लक्षणम् । 'व्यतिक्रमलवं कं मे वीक्ष्य वाक्षाक्षि कुप्यसि' इत्यादि तदुदाहरणम् । अत्र 'अपि' शब्दस्यावश्यिकत्वेन वक्तव्यत्वेऽपि स नोक्तः, तस्मादत्र वाच्यानभिधाननाम्नो दोषस्योद्भवः ।

'अनिश्चेयान्वयिवाचकपदहीनवाक्यत्वं न्यूनपदत्वमि'ति न्यूनपदत्वदोषस्य लक्षणम् । 'यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा' इत्येतदुदाहरणम् । अत्र 'त्वये'ति पदं न्यूनम् । एवञ्चापाततो वाच्यानभिधानत्वन्यूनपदत्वदोषयोस्तुल्यतया प्रतीतिः स्यादेव उभयत्र वाच्यस्यानभिधानात् ।

परं पर्य्यालोचनया दृश्यते,—वाच्यानभिधानदोषस्थले 'अपि' प्रभृतीनामर्थद्योतकानां पदानामनुल्लेखः, न्यूनपदत्वे तु वाचकानामेव पदानामनुल्लेख इति परस्परमनयोर्भेदः साधनीयः स्यादिति दिग्दर्शनमात्रमिदम् ।

---

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. LVI<br>No. 11-12 | १८९४ शकीयफाल्गुनचैत्रयोः<br>१३८० बङ्गाब्दीययोः<br>५६तम-वर्षस्य ११श-१२श-संख्ये | March-April<br>1974 |
| --- | --- | --- |

# संहितायुगे नारीणां स्थानम्

[ निबन्धिका—अध्यापिका ड० श्रीवाणी चक्रवर्ती स्मृतितीर्था ]

"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः॥"

( मनु ३।५६ )

इति मनुवचनाद् यत्र कुले पित्रादिभिः स्त्रियः पूज्यन्ते तत्र देवताः प्रसीदन्ति, यत्र पुनरेता न पूज्यन्ते तत्र नराणां देवताप्रसादाभावाद् यागादिक्रियाः सर्वा निष्फला भवन्ति।

याज्ञवल्क्यसंहितायामपि दृश्यते—

"भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः॥" ( १।८२ )

इति। एतेन ज्ञाप्यते यद् भर्तृप्रभृतिभिः स्त्रियो यथाशक्त्यलङ्कारवसनभोजन-

पुष्पादिभिः सम्माननीयाः, यस्मात्ताः पूजिताः सत्यो धर्मकामार्थान् संवर्धयन्ति।

अत्र तावदालोच्यते संहितायुगे नारीणां स्थानम्। संहिताशब्देन प्रथमतो वेदो बुध्यते, परं मन्वादिस्मृतिसंहिता अपि व्यपदिश्यन्ते। प्रथमं तावद् वेदसंहितायुगे नारीणा स्थानमालोच्यते। ऋग्वेदयुगे यज्ञसम्पादनार्थं सौभाग्यवृद्ध्यर्थम् अपत्यरक्षणार्थञ्च नारी विवाहिता बभूव।

यथा—

"गृभ्णामि ते सौभगत्वाय हस्तं
मया पत्या जरदष्टिर्यथासः।
भगो अर्यमा सविता पुरन्धि-
र्मह्यं त्वा दुर्गार्हपत्याय देवाः॥
(ऋग्वेद X. 85. 36)

अत्र सायनभाष्यमालोच्यते—हे वधु! तव हस्तमहं गृह्णामि। किमर्थं सौभगत्वाय सौभाग्याय। मया पत्या त्वं यथा जरदष्टिः प्राप्तवार्धक्यासि भवसि। भगोऽर्यमा सविता पुरन्धिः पूषा। एते देवास्त्वाः त्वां मह्यमदुः दत्तवन्तः। किमर्थं गार्हपत्याय यथाहं गृहपतिः स्यामिति।

एतेन सौभाग्याय नारी पाणिगृहीती स्यादिति ज्ञायते। गृहेषु स्त्री सदैव स्वतन्त्रा। स्त्रियं विना गृहस्थस्य किमपि कर्म न साफल्यमेति। सा च सहधर्मचारिणीति कथ्यते। गृहे स्त्रियाः स्वातन्त्र्यज्ञापनार्थम् ऋग्वेदे 'जायेदस्तम्' इत्यनेन सायनभाष्ये कथ्यते—अस्यते क्षिप्यते पदार्थोऽत्र इत्यस्तं गृहं जयेज्जायैव गृहं भवति। महाभारतवाक्येऽपि इदं सुपरिज्ञातं यत्—

"न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम्॥ (शान्तिपर्व, १४४।६)

दम्पती विवाहानन्तरं समानमनस्कौ स्यातामिति श्रूयते। यथा ऋग्वेदे —'दम्पती समनसा कृणोषि' ( V. 3. 2 ) इत्यनेन अग्निसमीपं प्रार्थितं यत्, हे अग्ने ! जायापती समानमनस्कौ करोषीति।

तैत्तिरीयसंहितायाञ्च कथ्यते—'अर्द्धो वा एष आत्मनो यत् पत्नी'ति ( VI. 1. 8. 5 )। एतेन दृश्यते यत् पत्नी पत्युरर्द्धशरीररूपा।

ऋग्वेदेऽपि 'या दम्पती समनसा सुनुत आ च धावतः' ( VIII. 31. 5 ) इत्यादिना समनसौ समानमनस्कौ यौ दम्पती यज्ञकारिणौ सोमाभिषवं कुरुत इत्यादिना स्त्रीणां यज्ञाधिकारः सूचितः।

वैदिकयुगे स्त्रीणां शिरसि आवरणं नानुमोदितम्। तथा च ऋग्वेदे—

"सुमङ्गलीरियं वधूरिमां समेत पश्येत।
सौभाग्यमस्मै दत्त्वायाथास्तं विपरेतन॥" ( X. 85. 33 )

इत्यत्रार्थो दृश्यते सायनभाष्ये—इयं वधूः सुमङ्गलीः शोभनमङ्गला। अत इमां सर्व आशीःकर्तारः समेत संगच्छत तां पश्यत च। तां संगताश्च दृष्टास्या ऊढायै सौभाग्यं दत्त्वाय दत्त्वाथास्तम्। गृहनामैतत्। स्वस्वसम्बन्धिनं विपरेतन विविधं परागच्छत।

श्वशुरकुले नारी विवाहिता सती प्राधान्यं प्राप्नोति। तदर्थमुच्यते—

"सम्राज्ञी श्वशुरे भव सम्राज्ञी श्वश्र्वां भव।
ननान्दरि सम्राज्ञी भव सम्राज्ञी अधिदेवृषु॥"
( ऋग्वेद X. 85. 46 )

हे वधु श्वशुरादिषु त्वं सम्राज्ञी भव। देवरेषु ननान्दरि च सम्राज्ञी भव इत्यर्थः। ऋग्वेदे कन्यानां स्वयं वरग्रहणेन तासां स्वातन्त्र्यं दृश्यते।

भर्तृमरणानन्तरं स्त्रीणां गृहावस्थानमुच्यते, न तु पत्या सह सहमरणमुचितम्। यथा ऋग्वेदे—

"इमा नारीरविधवाः सुपत्नीराञ्जनेन
सर्पिषा संविशन्तु।
अनश्रवोऽनमीवाः सुरत्ना आ रोहन्तु
जनयो योनिमग्रे॥" ( X. 10. 18. 7 )

अत्र सायनभाष्यमालोच्यते—अविधवाः धवः पतिरविगतपतिकाः जीवद्भर्तृका इत्यर्थः। सुपत्नी शोभनपतिका इमा नारीः नार्यः अञ्जनेन सर्वतोऽञ्जनसाधनेन सर्पिषा घृतेन अक्तनेत्राः सत्यः संविशन्तु। स्वगृहात् प्रविशन्तु। तथा अनश्रवः अश्रुवर्जिताः अरुदत्यः अनमीवा अमीवा रोगस्तद्वर्जिताः मानसदुःखवर्जिता इत्यर्थः। सुरत्नाः शोभनधनसहिता जनयः जनयन्त्यपत्यमिति जनयो भार्याः। ता अग्रे सर्वेषां प्रथमत एव योनिं गृहम् आरोहन्तु आगच्छन्तु।

पुनरपि दृश्यते ऋग्वेदे—

"उदीर्ष्व नार्य्यभि जीवलोकं गतासुमेतमुपशेष एहि।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि संबभूथ॥"

( X. 10. 18. 8 )

अत्र सायनभाष्ये कथ्यते—हे नारि मृतस्य पत्नी! जीवलोकं जीवानां पुत्रपौत्रादीनां लोकं स्थानं गृहमभिलक्ष्य उदीर्ष्व। अस्मात् स्थानादुत्तिष्ठ। गतासुम् अपक्रान्तप्राणम् एतं पतिम् उप शेषे तस्य समीपे स्वपिषि। तस्मात् त्वम् एहि आगच्छ। यस्मात् त्वं हस्तग्राभस्य पाणिग्रहं कुर्वतः दिधिषोः गर्भस्य निधातुः तवास्य पत्युः सम्बन्धादागतम् इदं जनित्वं जायात्वम् अभिलक्ष्य सम्बभूथ सम्भूतासि। अनुमरणनिश्चयम् अकार्षीः तस्मादागच्छ।

वैदिकयुगे नारी उच्चशिक्षां प्राप्तवती। सा नारी तत्र ब्रह्मविदुषीति कथ्यते। यथा ऋग्वेदे आम्भृणीनाम अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौत्। तथा कक्षीवतो दुहिता घोषा 'युवां ह घोषा पर्य्यश्विना यती'त्यादौ ( ऋग्वेदे V. 40. 5 ) सायनभाष्ये उक्तम्— हे नरा नेतारावश्विनौ ! युवां ह खलु परि परितो यती गच्छन्ती राज्ञो दीप्तस्य कक्षीवतो दुहिता पुत्री घोषा घोषाख्या अहमुचे इति।

अपि च तत्र—अत्रेः पुत्री अपालाख्या त्वद्दोषपरिहाराय निम्नोद्धृतेन सूक्तेन इदं स्तुतवती अतः सैष ऋषिः।

यथा—

"अपालामिन्द्र त्रिः पूत्वी अकृणोः सूर्यत्वचम्॥"

( ऋग्वेद VIII. 80 )

इत्यत्र अपालामेतन्नामिकामत्रिसुतां ब्रह्मवादिनीमिति।

किञ्च—"एति प्राची विश्ववारा नमोभिर्देवाँ ईड़ाना हविषा घृताची॥"

( ऋग्वेद V. 28 )

इत्यत्र अत्रिगोत्रोत्पन्ना विश्ववारानामिकास्य सूक्तस्य ऋषिः।

स्मृतिसंहितायुगे नारीणां स्थानमालोच्यतेऽधुना।

तत्र च यमवचनम्—

"पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनञ्च वेदानां सावित्रीवचनं तथा॥"

इत्यनेन नारीणामुपनयनसंस्कारो वेदाध्यापनं गायत्रीवचनमित्यादीनि परिलक्ष्यन्ते।

मनुसंहितायान्तु—

"वैवाहिको विधिः स्त्रीणां
संस्कारो वैदिकः स्मृतः।
पतिसेवा गुरौ वासो
गृहार्थोऽग्निपरिष्क्रिया ॥" (२।६७)

एतेन ज्ञायते यद् वैवाहिकविधिरेव स्त्रीणां वैदिकः संस्कार उपनयनाख्यो मन्वादिभिः स्मृतः, पतिसेवैव गुरुकुले वासो वेदाध्ययनरूपः, गृहकृत्यमेव सायं प्रातः समिद्धोमरूपोऽग्निपरिचर्या, तस्माद् विवाहादेरुपनयनस्थाने विधानाद् उपनयनादेर्निवृत्तिरिति।

गृहस्थस्य भार्याग्रहणमपरिहार्यम्। गृहस्थः प्राणतुल्यः सर्वाश्रमिणामिति वचनाद् गृहस्थः सर्वेष्वाश्रमेषु श्रेष्ठः।

तथा चोक्तं मनुना—

"यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः ॥" (३।७७)

यथा प्राणाख्यवायूनामाश्रयेण सर्वप्राणिनो जीवन्ति तथा गृहस्थाश्रयेण सर्वाश्रमिणो निर्वहन्ति। गृहस्थस्य दारग्रहणेन गार्हस्थ्यधर्मा अनुष्ठेयाः। दारग्रहणस्य फलमाह योगीश्वरो याज्ञवल्क्यः—

"लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।
यस्मात्तस्मात् स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः।" (१।७८)

यथा लोके आनन्त्यं वंशस्याविच्छेदो लोकानन्त्यं दिवः प्राप्तिश्च दारसंग्रहस्य प्रयोजनम्। कथमित्याह—पुत्रपौत्रप्रपौत्रकैर्लोकानन्त्यम् अग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः। यस्मात् स्त्रीभ्य एतद्द्वयं भवति तस्मात् स्त्रियः सेव्या उपभोग्याः प्रजार्थं रक्षितव्याश्च धर्मार्थम्। तथाचापस्तम्बेन—धर्मप्रजा-

संपत्तिः प्रयोजनं दारसंग्रहस्योक्तं धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीत इति। रतिफलं तु लौकिकमेव। तस्मादुच्यते मनुना—

"तस्मादेताः सदा पूज्या भूषणाच्छादनाशनैः।
भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च॥" (३।५९)

अनेन भूषणाच्छादनेन अशनेन च नित्यं सत्कारेषु कौमुद्यादिषु उत्सवेषूपनयनादिषु समृद्धिकामैर्नृभिः स्त्रियः सदा पूजनीयाः। स्वामिनः स्त्रियाश्च सन्तोषेण कल्याणं सर्वदा विराजते।

यथाह मनुः—

"सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्॥" (३।६०)

इति। अनेन यत्र कुले भार्यया भर्ता प्रीतो भवति स्त्र्यन्तराभिलाषादिकं न करोति, भार्या च स्वामिना प्रीता भवति, तस्मिन् कुले चिरं श्रेयो भवति। कुलग्रहणात् न केवलं भार्यापती एव, पुत्रपौत्रसन्ततिरपि श्रेयोभागिनी भवति।

वृहस्पतिसंहितायाञ्च—

"आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा॥"

इत्यनेन शरीरार्धसमा जाया स्वातन्त्र्यं प्राप्नोति।

'कन्येयं कुलजीवितम्' इति महाकवि-कालिदासवाक्यात् कन्या कुलस्य जीवनरूपा। सा कन्या सदैव गुणशीलाय प्रदेया। महाभारते तावत् कथ्यते—"नित्यं निवसते लक्ष्मीः कन्यकासु प्रतिष्ठिते"ति (अनुशासनपर्व, ११।१४)।

महाकविना कालिदासेन चोक्तं शाकुन्तलनाटके—

"गुणवते कन्यका प्रतिपादनीयेत्ययं तावत् प्रथमः सङ्कल्पः।"

यस्मै कस्मैचित् कन्या न प्रदेया। उक्तञ्च यमस्मृतौ—

"कुलञ्च शीलञ्च वपुर्यशश्च
विद्याञ्च वित्तञ्च सनाथताञ्च।
एतान् गुणान् सप्त परीक्ष्य देया
कन्या बुधैः शेषमचिन्तनीयम्॥" इति।

एतेन दृश्यते यद् वराणा कुलं शीलं रूपं यशो विद्या वित्तं सनाथ ताञ्चति सप्त गुणान् परीक्ष्य कन्या देया। गुणहीनाय कदापि न कन्या प्रदातव्या। तथा च मनुवचनम्—

"काममामरणात्तिष्ठेद् गृहे कन्यर्तुमत्यपि।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥" (९।८९)

ऋतुदर्शनात् प्राक कन्याया दानम्। ऋतुदर्शनेऽपि न दद्याद् यावद् गुणवान् वरो न प्राप्तः। अत्र गुणशब्देन मेधातिथिभाष्ये दृश्यते—गुणो विद्या शौर्यातिशयः शोभनाकृतिर्वयो महत्त्वोपेतता लोकशास्त्रनिषिद्ध-परिवर्जनं कन्यानामनुराग इत्यादीनि। एतेन ज्ञायते यत् सञ्जातार्तवापि कन्या वरं मरणपर्यन्तं पितृगृहे तिष्ठेत् न पुनरेनां विद्यागुणरहिताय कदाचित् पित्रादिर्दद्यादिति।

विवाहव्यापारे स्मृतिसंहितायां स्त्रीणां स्वातन्त्र्यं निरूपितम्। पित्रादिभिरदीयमाना कुमारी कन्या यथोक्तकाले यदि भर्तारं स्वयं वृणुते तदा सा न किञ्चित् पापं प्राप्नोति। तथाच मनुः—

"अदीयमाना भर्तारमधिगच्छेद् यदि स्वयम्।
नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति॥" (९।९१) इति।

यमवचनेऽपि उक्तं—

"कन्या द्वादशवर्षाणि याप्रदत्ता गृहे वसेत्।
ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत् स्वयम् ॥"

याज्ञवल्क्येनापि कथितम्—'गम्यं त्वभावे दातृणां कन्या कुर्यात् स्वयंवरम्'। नारदमतेन च पित्रभावे स्वजनाभावे च कन्या स्वयं वरयेत्। यथा चोक्तं नारदेन—

"यदा तु नैव कश्चित् स्यात् कन्या राजानमाश्रयेत्।
अनुज्ञया तस्य वरं प्रतीत्य वरयेत् स्वयम् ॥" (१५।२२)

मनुनापि कथितम्—

"त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती।
ऊर्द्ध्वं तु कालादेतस्माद् विन्देत सदृशं पतिम् ॥" (६।६०)

एतेन पित्रादिभिर्गुणवद्वरायादीयमाना कन्या सञ्जातार्तवा सती त्रीणि वर्षाणि प्रतीक्षेत। वर्षत्रयात् पुनरूर्द्ध्वमधिकगुणवरालाभे समानजातिगुणं वरं स्वयं वृणीत।

विवाहानन्तरं सा स्त्री गृहेषु सर्वमयी कर्त्री। तत्र सा अशेषां स्वाधीनतां लभते। पतिस्तत्र दाराधीनः। उक्तञ्च मनुना—

"प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥
उत्पादनमपत्यस्य जातस्य परिपालनम्।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥
अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा।
दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह ॥" (६।२६-२८)

यतो नार्य्यो महोपकारा गर्भोत्पादनार्थं बहुकल्याणभाजनभूता वस्त्रा-

लङ्कारादिदानेन सम्मानार्हाः स्वगृहे शोभाकारिण्यः। स्त्रियः श्रियश्च गेहेषु तुल्यरूपाः, नानयोर्विशेषो विद्यते। अपत्यस्य जननं जातस्य परिपालनं प्रतिदिनञ्चातिथिमात्रभोजनादेर्लोकव्यवहारस्य प्रत्यक्षं भार्यैव निदानम्। ततो धर्मकार्याणि अग्निहोत्रादीनि पितृणामात्मनश्च अपत्यजननादिना स्वर्ग इत्येतत् सर्वं भार्याधीनम्। न हि गृहे स्त्रीभिर्विना काचित् सेवास्तीति सुप्रसिद्धमेतत्। सत्यपि श्रीविभवे भार्यायामसत्यां सुहृत्स्वजनादिषु आगतेषु न गृहस्थाः प्रतिपुरुषं भोजनादिभिरावर्जयितुं समर्थाः। यथा दरिद्रे न भवति शक्तिः, अतः स्त्रियः श्रियश्च न विशेषो विद्यते गेहेषु। अनेनात्र दृश्यते गृहेषु स्त्रीणां सर्वथा स्वातन्त्र्यम्। स्मृतिसंहितायामपि 'नारी पुनर्भू'रित्यभिधानात् पुनःसंस्कृता तथा पुनर्विवाहिता इति कथ्यते। उक्तञ्च याज्ञवल्क्येन—

"अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत्॥ (१।६७)

इत्यनेन ज्ञायते यद् अन्यपूर्वा नारी द्विविधा—पुनर्भूः स्वैरिणी चेति। पुनर्भूरपि द्विविधा—क्षता चाक्षता च। तत्र क्षता संस्कारात् प्रागेव पुरुषसंबन्धदूषिता। अक्षता पुनः संस्कारदूषिता। या पुनः कुमारं पतिं त्यक्त्वा कामतः सवर्णमाश्रयति सा स्वैरिणीति।

पराशरसंहितायाम्—

"नष्टे मृते प्रव्रजिते क्लीवेऽथ पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥" (४।२६)

इत्यस्यार्थो विद्वन्मनोहरेति टीकायामुच्यते—वाग्दानानन्तरं पाणिग्रहात् प्राक् पतौ उत्पत्स्यमानपतित्वे पूर्वस्मिन् वरे, नष्टे दूरदेशगमनेनापरिज्ञात-वृत्तान्ते नारीणां कन्यानामन्यः पतिर्विधीयते।

माधवाचार्यकृतभाष्ये च कथ्यते—नष्टे मृते इत्यादिना योऽयं स्त्रीणां पुनर्विवाह उक्तः, सोऽयं युगान्तरविषयः। अत्र विषये तु मनुसंहिताया मेधातिथिभाष्यं दृश्यते—तत्र पालनात् पतिमन्यमाश्रयेत्, सैरन्ध्रीकर्मादिना आत्मवृत्त्यर्थम्। प्रोषितभर्तृकायाश्च स विधिरिति।

धनाधिकारविषये कथ्यते याज्ञवल्क्येन 'पत्नी दुहितरश्चैव' इत्यादिना अपुत्रकस्य धनं पत्न्यभिगामि, तदभावे दुहितृगामि। कात्यायन-संहितायामपि—

"पत्नी पत्युर्धनहरी या स्यादव्यभिचारिणी"ति।

धनविषये स्त्रीधनं नाम स्त्रियाः स्वातन्त्र्यं सर्वथा कीर्तितम्। उक्तञ्च याज्ञवल्क्येन—

"पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्।
अधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्तितम्॥" (२।१४३)

इत्यनेन पित्रा मात्रा पत्या भ्रात्रा च यद्दत्तं यच्च विवाहकाले अग्नावधिकृत्य मातुलादिभिर्दत्तम्, अधिवेदननिमित्तं यद् धनं तदेव स्त्रीधनम्।

उक्तञ्च कात्यायनेन—

"विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम्॥
यत् पुनर्लभते नारी नीयमाना पितुर्गृहात्।
अध्यावाहनिकं नाम स्त्रीधनं तदुदाहृतम्॥
प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते॥
ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम्॥"

इत्यादीनि स्त्रीधनानि कीर्तितानि।

स्त्रीधनेषु स्त्रिया एव स्वतन्त्रता। तद्धनग्रहणे पत्युरधिकारो नास्ति। यदि कश्चन बलेन स्त्रीधनमुपभुङ्क्ते तदा 'सवृद्धिकं प्रदाप्यः स्याद् दण्डञ्चैव समाप्नुयात्' इति कात्यायनमतेन स्त्रीधनं प्रदातव्यं तेन।

विवाहकाले लब्धं धनमपि स्त्रिया ग्राह्यम्। तथाच व्यासवचनम्—

"विवाहकाले यत् किञ्चिद् वरायोद्दिश्य दीयते।
कन्यायास्तद्धनं सर्वमविभाज्यञ्च बन्धुभिः॥"

स्त्रियाः कार्याणि मनुना उक्तानि। यथा—

"अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।
शौचे धर्मेऽन्नपक्त्याञ्च पारिणाह्यस्य वेक्षणे॥" (९।११)

इत्यनेन धनस्य संग्रहणे विनियोगे च द्रव्यशरीरशुद्धौ भर्त्रग्निशुश्रूषादिके अन्नसाधने पारिणाह्यस्य गृहोपकरणस्य शय्यासनकुण्डकटाहादेरवेक्षणे स्त्री नियोक्तव्या।

महाभारतस्यादिपर्वणि पत्युरर्द्धत्वं स्त्रीत्वमिति कथ्यते। यथा—

"अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा।
भार्या मूलं त्रिवर्गस्य भार्या मूलं तरिष्यतः॥" (७४।४०)

न केवलं स्त्री शरीरार्धरूपा नरस्य, अपितु स्त्री गृहे सचिवरूपा सखिसमा च सती सर्वविषयेषु श्रेष्ठत्वमाप्नोति। यथा महाभारतस्य शान्तिपर्वणि च दृश्यते—

"नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः।
नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे॥" (१४४।१६)

अतो दृश्यते महाकवि-कालिदासवाक्यम्—

'गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधा'विति।

---

# कुम्भयोगमाहात्म्यम्

[ हरिद्वारे द्वादशवर्षीयपूर्णकुम्भयोगः ]

[ निबन्धकः—श्रीदीननाथ त्रिपाठी नवतीर्थः, महाचार्य्यः ]

भारतवर्षस्य चतुर्षु स्थानेषु कुम्भयोगे स्नानादिकमनुष्ठीयते। अयं च कुम्भोत्सवः कियतः कालात् अनुष्ठीयते तन्निश्चिततया वक्तुं न शक्यते। केचित् कथयन्ति हर्षवर्धनकृतोत्सवकालमारभ्यायं प्रचलति। केचित्तु ततोऽपि प्राचीनात् कालादस्य प्रवृत्तिरिति आहुः। अत्र विषये इतिहासविदः प्रमाणमिति तेषु एतत्तत्त्वनिर्णयभारं समर्प्य कुम्भयोगविषये किञ्चिद् वक्तव्यमस्माभिरुपस्थाप्यते। कुम्भयोगविषये श्रुत्यादिशास्त्रप्रमाणं न प्राप्यते। अस्मिन् वर्षे हरिद्वारे कुम्भयोगमुपलक्ष्य ऋषीकेशस्थ-कैलासाश्रमात् एकं पत्रं प्रकाशितम्। तत्र अथर्ववेदः प्रमाणमिति उल्लिखितम्। यथा—"चतुरः कुम्भांश्चतुर्धा ददामि" [ अथर्ववेदः ४।३४।७ ] "पूर्णः कुम्भोऽधिकाल अहितस्तां वै पश्यामो बहुधा नु सन्तः। स इमा विश्वा भुवनानि कालं तमाहुः परमे व्योमन्" [ अथर्ववेद—१९।५३।३ ]। परन्तु एतत्प्रमाणेन कुम्भयोगस्तत्र स्नानादिकमधुना यथाऽनुष्ठीयते न तस्य स्पष्टतया प्रकाशो भवति। "चतुरः कुम्भान् चतुःप्रकारान् ददामि" इति ब्रह्मवचनेन कुम्भयोगो न प्रमाणीक्रियते। परवर्तिमन्त्रे—यद्यपि "पूर्णः कुम्भः" इति पदद्वयमस्ति तथापि कः स पूर्णः कुम्भः इत्यत्र निर्णयो नास्ति। "परमे व्योमन्" परव्योम्नि अर्थात् हृदयाकाशे पूर्णः कुम्भः स्वप्रकाशं ब्रह्म—इत्यपि अर्थो लभ्यते। तस्मान्नाथर्ववेदः कुम्भस्नानविषये प्रमाणमिति। ततः परं तस्मिन्नेव पत्रे ये श्लोका उद्धृताः कुम्भयोगविषये तेषां श्लोकानामाकरो न दर्शितः। अतस्तेऽपि श्लोका निर्मूला इति ज्ञायन्ते। ते च श्लोका यथा—

"सहस्रं कार्तिके स्नानं माघे स्नानं शतानि च।
वैशाखे नर्मदाकोटिः कुम्भस्नानेन तत्फलम्॥
अश्वमेधसहस्राणि वाजपेयशतानि च।
लक्ष्यं प्रदक्षिणाः पृथ्व्याः कुम्भस्नानेन तत्फलम्॥
देवानां द्वादशाहोभिर्मर्त्यैर्द्वादशवत्सरैः।
जायन्ते कुम्भपर्वाणि तथा द्वादशसंख्यया॥" इति।

एषु श्लोकेषु प्रथमद्वितीयश्लोकौ कैवल्यानन्दपुर्या तत्कृतश्रीश्रीकुम्भयोग-माहात्म्यनामके ग्रन्थे उपस्थापितौ, नान्त्यः श्लोकः। तत्रापि तेन श्लोकानामाकरस्थाननाम न प्रदत्तम्।

भारतवर्षे प्रयागोज्जयिनीनासिकहरिद्वारेषु चतुर्षु स्थानेषु कुम्भस्नानं विधीयते। प्रतिस्थानम् एकादशभ्यो वर्षेभ्योऽनन्तरं द्वादशे वर्षे पूर्णकुम्भयोगो भवति। कुत्र च षष्ठे वर्षे वा चतुर्थे वर्षे वा अर्धकुम्भयोगो भवति। अस्मिन् वर्षे हरिद्वारे द्वादशवर्षीयः पूर्णकुम्भयोग उपस्थित आसीत्। हरिद्वारे पूर्णकुम्भविषये विशुद्धसिद्धान्तपञ्जिकायां कैलासाश्रम-पत्रे कतिचित् श्लोकाः प्रदत्ताः।

यथा—

"पद्मिनीनायके मेषे कुम्भराशिगतो गुरुः।
गङ्गाद्वारे भवेद् योगः कुम्भनामा तदोत्तमः॥
कुम्भराशिगते जीवे यद्दिने मेषगे रवौ।
हरिद्वारे कृतं स्नानं पुनरावृत्तिवर्जनम्॥"
वसन्ते विषुवे चैव घटे देवपुरोहिते।
गङ्गाद्वारे च कुम्भाख्यः सुधामेति नरो मतः॥"

एतच्छ्लोकत्रयं विशुद्धसिद्धान्त पञ्जिकायां प्रदत्तम्। कैलासाश्रमपत्रे तु द्वितीयः श्लोकः प्रदत्तः।

तत्रापि पाठभेदो वर्तते। यथाः—

"कुम्भराशिं गते जीवे तथा मेषं गते रवौ।
हरिद्वारे कृतं स्नानं पुनरावृत्तिवर्जनम्॥" इति।

भवतु यद् वा तद् वा, तथापि एवं ज्ञायते—

यद्—यस्मिन् वर्षे यदा बृहस्पतिः कुम्भराशिं गच्छति, रविश्च मेषराशिं तस्मिन् वर्षे तदा हरिद्वारे पूर्णकुम्भयोगो जायते।

कैवल्यानन्दकृतग्रन्थेऽपि दृश्यते—

"पद्मिनीनायके मेषे कुम्भराशिगतो गुरुः।
गङ्गाद्वारे भवेद् योगः कुम्भनामा तदुत्तमः॥" इति।

परन्तु कुत्रापि उक्तानां श्लोकानां मूलशास्त्रम् एतावता कालेन न प्राप्तमस्माभिः। विश्वकोषे यत् खलु स्कन्दपुराणीयवचनं प्रमाणत्वेनोक्तं तदपि प्रकाशितस्कन्दपुराणे अस्माभिर्न प्राप्तम्।

साम्प्रतिके काले बहुभिः स्व-स्वपत्रिकायां वा स्व-स्व-कृतग्रन्थे वा कुम्भयोगविषये इत्थमुपाख्यानं प्रकाशितम्। यथा—समुद्रमन्थनशेषे धन्वन्तरिर्यदा अमृतपूर्णकुम्भं करे कृत्वा उत्थितस्तदा देवानां सङ्केतेन इन्द्रपुत्रो जयन्तस्तं कलशम् उत्कृष्य पलायितुमारेभे। आदौ तावदसुरा न विदुः, परन्तु शुक्राचार्याणामुपदेशेन तज्ज्ञात्वाऽसुराः अमृतकलशं ग्रहीतुं जयन्तमनुजग्मुः। जयन्तं द्वादश दिवसान् धावितवान्। असुरा अपि तथैव अमृतप्राप्त्यर्थं धावमाना जयन्तेन साकं हस्ताहस्ति कृतवन्तः। तेन च हस्ताहस्तिकर्मणा भारतस्य चतुर्षु स्थानेषु किञ्चित् किञ्चित् अमृतं भुवि न्यपतत्, स्थानान्तरेषु अष्टशः कलसो न्यपतत्।

नासिके उज्जयिन्यां प्रयागे हरिद्वारे च अमृतं न्यपतत्। देवानां दिवसपरिमाणं मनुष्यलोके संवत्सरस्वरूपमिति देवतानां द्वादशदिनानि मनुष्यलोके द्वादशवत्सरा भवन्ति। अतो द्वादशे द्वादशे वर्षे उक्तानां चतुर्णां स्थानानम् एकैकस्मिन् स्थाने पूर्णकुम्भयोगो भवति।

एतदाख्यायिकाविषये यान् प्रमाणश्लोकान् उद्धृतवन्तो विपश्चितस्तेषा-माकरग्रन्थाध्यायादीनामुल्लेखं ते न कृतवन्तः। वयन्तु कथञ्चिदनुसन्धाने-नापि अस्या मूलीभूतानि प्रमाणानि न प्राप्तवन्तः। अन्यानपि पृष्ट्वा च कुत्रापि कुम्भयोगविषये शास्त्रीयप्रमाण न लब्धवन्तः।

अत एवं मन्यते "वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः। एतच्चतुर्विधं प्राहुः सक्षाद्धर्मस्य लक्षणम्॥" [मनुस्मृतिः—२।१२] इति मनोः प्रामाण्यात् मीमांसादर्शनस्य प्रथमाध्याये तृतीयपादे अष्टमाधिकरणे होलाकाद्याचाराणामिव कुम्भयोगे स्नानदानादीनामपि शिष्टाचारानुमित-स्मृतिबलेन धर्मत्वं व्यवस्थाप्यते। स्मृत्या च श्रुतिरनुमीयते।

हृषीकेशस्थकैलासाश्रमात् महामण्डलेश्वरा अनन्तश्रीस्वामिविद्यानन्द-गिरिमहाराजाः "द्वादशवर्षीयपूर्णकुम्भ हरिद्वार मे" इति हिन्दीभाषामयं पत्रमेकं प्रकाशितवन्तः। तस्मिन् पत्रे कुम्भयोगविषये अथर्ववेदं प्रमाणत्वेन उद्धृतवन्तः। यथा—"चतुरः कुम्भांश्चतुर्धा ददामि" [ अथर्व-संहिता—४।३४'७ ]। ते खलु अस्य वेदस्य अर्थं कृतवन्तो हिन्दीभाषायाम्। तस्यार्थस्य संस्कृतभाषायां वर्णनमस्माभिः प्रदत्तम्। यथ—"ब्रह्मा कथयति—भो मनुष्य! अहं तुभ्यम् ऐहिकानि पारत्रिकाणि च सुखानि प्रयच्छतश्चतुरः कुम्भपर्वणो निर्माय हरिद्वारप्रयागोज्जयिनीनासिकनामसु चतुर्षु स्थानेषु प्रददानि" इति।

परन्तु नायमर्थ उक्ताथर्ववाक्यस्य समीचीनतया उल्लिखितः। यस्मादस्य सूक्तान्तर्गतमन्त्रस्यार्थोऽन्यथा वर्णितः सायनाचार्य्यैस्तद्भाष्ये। तथाहि—अथर्वसंहितायां चतुर्थकाण्डे चतुस्त्रिंशत्तमं सूक्तमेकमस्ति। तस्मिन् सूक्ते आद्या ऋक् "ब्रह्मास्य शीर्षम्" इत्यादि। तत्र सायनाचार्येण व्याख्यातम् "ब्रह्मास्य शीर्षम्" इति सूक्तं ब्रह्मास्योदनसवे निरुप्तहविरभिमर्शनादिकर्मणि विनियुक्तम्। अयमर्थः—ब्रह्मास्योदनाख्यः कश्चित् सवो विद्यते। सवो

नाम प्रातर्मध्याह्नपराह्नेषु एकैकस्मिन् काले सोमरसादि हूयमानं यस्मिन् कर्मणि सः।

ब्रह्मास्योदनसवे प्रदीयमानहविषः अभिमर्शनादिकर्मणि मन्त्रपूर्वक-स्पर्शनादिकर्मणि उक्तं सूक्तं विनियुज्यते। तस्मिन् सवे तेन सूक्तेन चतसृषु दिक्षु ह्रदकरणम्, कुल्याकरणम्, रसैः तासां पूरणं क्रियते। तस्य ब्रह्मास्य-सूक्तस्य सप्तमो मन्त्रो यथाः—

"चतुरः कुम्भांश्चतुर्धा ददामि क्षीरेण पूर्णाँ उदकेन दध्ना।
एतास्त्वा धारा उपयन्तु सर्वा स्वर्गे लोके मधुमत्
पिन्वमाना उप त्वा तिष्ठन्तु पुष्करिणीः समन्ताः॥ (७)

अस्य मन्त्रस्यार्थः सायनाचार्येण कृतः—क्षीरादिद्रव्येण पूर्णान् चतुरः कुम्भान् चतुर्धा प्रागादिदिग्भेदेन चतुष्प्रकारं दधामि दिक्षु निदधामि। एताः क्षीरादिधारास्त्वाम् उपयन्तु इत्यादि योज्यम्। अस्य मन्त्रस्य सम्पूर्णोऽर्थः—क्षीरेण, उदकेन, दध्ना मधुना च पूर्णान् चतुरः कुम्भान् चतसृषु दिक्षु निदधामि। एताः क्षीरादिधाराः सर्वाः त्वां सर्वयज्ञानुष्ठातारं स्वर्गे लोके उपयन्तु। पुष्करिणीः पुष्करिण्यः मधुना परिपूर्णाः समन्तात् स्वर्गे लोके त्वां सत्रयज्ञानुष्ठातारम् उपतिष्ठन्तु इति।

तस्मात् ब्रह्मास्योदनसवे घृतादिपूर्णकुम्भनिधानप्रकाशकोऽयं मन्त्रो न तु कुम्भयोगप्रकाशकः।

अपरोऽपि मन्त्रः कैलासाश्रमप्रकाशितपत्रे कुम्भयोगप्रमापकतयोद्धृतः। सोऽपि न तदर्थे समीचीनः। तथाहि—अथर्वसंहितायाः एकोनविंशे काण्डे त्रिपञ्चाशत्तमं सूक्तमेकमस्ति। तस्मिन् सूक्ते तृतीया ऋग् यथा—

"पूर्णः कुम्भोऽधिकाल आहितस्तं वै पश्यामो बहुधा नु सन्तः।
स इमा विश्वा भुवनानि प्रत्यङ् कालं तमाहुः परमे व्योमन्॥
[ अथर्व सं १९।५३।३ ]

अस्या ऋचः अर्थः कृतो हिन्दीभाषाया कैलासपत्रे। तस्य सारसंक्षेपोऽयम् —भो सन्तः। पूर्णकुम्भयोगकालः [ द्वादशवर्षानन्तरं ] आगच्छति। यं योगं वयं बहुधा प्रयागादितीर्थेषु दृष्टवन्तः। तं कालमेव कुम्भं वदति—यः कालः महति आकाशे ग्रहराश्यादियोगेन भवतीति। एतादृशार्थकरणमपि उक्ताया ऋचो लोकचक्षुषि धूलिनिःक्षेपसममिति।

यस्मात् सायनाचार्यैः कीदृशं व्याख्यातमुक्तसूक्तं तदत्रोपक्षिप्यते। तथाहि—उक्त-त्रिपञ्चाशत्तमस्य सूक्तस्य प्रथमा ऋक्—"कालो अश्वो वहति सप्तरश्मिरित्यादि।" तद्व्याख्याने उक्तं सायनैः—अनेन सूक्तद्वयेन सर्व-जगत्कारणभूतः कालरूपः परमात्मा स्तूयते। अयमर्थः—त्रिपञ्चाशत्तमेन सूक्तेन तथा चतुःपञ्चाशत्तमेन सूक्तेन परमात्मा स्तूयते। "पूर्णः कुम्भ" इत्यादि तृतीयाया ऋचः अर्थः कृतः सायनैः यथा—काले सर्वजगत्-कारणभूते नित्ये अनवच्छिन्ने परमात्मनि स्वस्वरूपे। अधिशब्दः सप्तम्य-र्थानुवादी। पूर्णः सर्वत्र व्याप्तः कुम्भः कुम्भवत् कुम्भः अहोरात्रमासर्तु-संवत्सरादिरूपः अविच्छिन्नो जन्यः काल आहितो निहितो वर्तते। सर्वस्य कार्यस्य स्वकारणेऽवस्थानात्। अत्र विद्वदनुभवश्रुतिं प्रमाणयति। तं जन्यं कालं सन्तः सत्पुरुषा बहुधा नानाप्रकारम् अहोरात्रादिभेदेन पश्यामो नु अनुभवामः खलु। अथवा तं जन्यकालाधारं परमात्मानं बहुधा बहुभिः श्रवणमनननिदिध्यासनैः पश्यामः साक्षात्कुर्मः। सन्तः सद्रूपब्रह्मोपासका वयम्। "असि ब्रह्मेति चेद् वेद सन्तमेनं ततो विदुः" इति हि श्रुतिः [ तैः आः ८।६ ]। वै नु शब्दौ प्रसिद्धयर्थौ। स कालः इमाः इमानि परिदृश्यमानानि विश्वा विश्वानि व्याप्तानि भुवनानि भूत-जातानि प्रत्यङ् प्रत्यञ्चनः अभिमुखाञ्चनः आव्याप्नुवन् भवति। तं कालं परमे उत्कृष्टे सांसारिकसुखदुःखादिद्वन्द्वदोषरहिते व्योमन् व्योम्नि आकाशवन्निर्लेपे सर्वगते विविधं रक्षके परमानन्दप्रदायके स्वस्वरूपे

वर्त्तमानम् आहुः विद्वांसः। व्योमन्निति सुपां सुलुक् इति सप्तम्या लुक्। 'न ङिसम्बुद्ध्योः' इति नलोपनिषेधः। इति।

तस्मान्नायं मन्त्रः कुम्भयोगे प्रमाणम्। अथर्ववेदीये उक्तसूक्ते पूर्वस्मिन् सूक्ते वा परस्मिन् सूक्ते वा कुम्भयोगस्य गन्धोऽपि नास्ति। नापि तत्र किञ्चित् कुम्भयोगविषये प्रकरणमस्ति। अतोऽयं मन्त्रोऽन्यथा मनःकल्पनया हिन्दीभाषायां व्याख्यातः।

एतेन कुम्भयोगविषये प्रत्यक्षतया श्रुतिस्मृतिपुराणादिकं किमपि प्रमाणं नास्तीति ज्ञायते। केवलं शिष्टाचारवशात् स्मृत्यादिकमनुमीयते—इति सिद्धम्।

प्रयागे कुम्भयोगकालः— कैवल्यानन्दकृतश्रीश्रीकुम्भयोगमाहात्म्यग्रन्थे लिखितः।

"मकरे च दिवानाथे वृषगे च बृहस्पतौ।
कुम्भयोगो भवेत्तत्र प्रयागे ह्यतिदुर्लभः॥"
"माघे वृषगते जीवे मकरे चन्द्रभास्करौ।
अमावस्या ततो योगः कुम्भाख्यस्तीर्थनायके॥"

सौरे माघे मासि यदा बृहस्पतिर्वृषराशिं गच्छति, सूर्यश्चन्द्रोऽपि मकरराशिं याति, तस्मिन् काले अमावास्यायां प्रयागे कुम्भयोगो भवति इति भावः।

एतस्यापि श्लोकद्वयस्याकरस्थानं तैर्नोक्तम्। अतोऽपि एतच्छ्लोकद्वयं परवर्तिनि काले कैश्चिद्रचितमिति अनुमीयते, मूलप्रमाणाभावात्।

नासिके कुम्भयोगकालस्तैरुक्तः। श्रावणे भाद्रे वा मासि बृहस्पतौ

सिंहराशिं गते रविचन्द्रमसोर्योगेऽमावास्यायामित्यर्थः, नासिके त्र्यम्बके कुम्भयोगो भवति। वचनञ्चोद्धृतं यथा—

"सिंहराशिस्थिते जीवे दिवानाथे निशापतौ।
अमावस्या भवेद् योगः कुम्भो गोदावरीतटे॥"

अस्यापि श्लोकस्य मूलग्रन्थो नोल्लिखितः।

उज्जयिन्यां कुम्भयोगकाल उक्तः।

कार्तिकसंक्रान्त्या वृश्चिकं गते बृहस्पतौ रविसोमयोर्योगे तथा रिक्तायां कुम्भयोग उज्जयिन्यां भवति। तत्रापि वचनमुक्तं तैः।

"सूर्यचन्द्रगुरुस्त्रैण्यं वृश्चिके सङ्गमो यदा।
यदा रिक्ता तिथिश्चापि धाराया कुम्भो वै स्मृतः॥"

धारायामुज्जयिन्यामित्यर्थः।

अयमपि मूलप्रमाणशून्यः।

कुम्भयोगस्य साक्षात् श्रुतिस्मृतिपुराणादिप्रमाणाभावात् केवलं शिष्टाचारानुमितस्मृतिबलात् प्रामाणिकत्वमास्थीयते।

परन्तु अधुना कुम्भयोगे यान्यनुष्ठानानि दृश्यन्ते तानि सर्वाणि शिष्टाचारसम्मतानि इति कथयितुं न शक्यते। यथा द्विषष्ट्यधिकोनविंशतितमे खृष्टाब्दे तथा चतुःसप्तत्यधिकोनविंशतितमेऽस्मिन् खृष्टाब्दे यदस्माभिः दृष्टं तत् कथञ्चित् संक्षेपेण वर्ण्यते। उत्तरखण्डे सन्न्यासिसम्प्रदाये पूर्वं चत्वारो विभागा आसन्। निरञ्जनी-आखड़ाइत्याख्य एकः। निर्वाणी-आखड़ाइत्याख्योऽपरः। जुना-आखड़ा इति अन्यः। आनन्द-आखड़ा इत्यपरः। अधुना तु एभ्योऽधिकौ द्वौ वा त्रयो वा विभागा अजायन्त। तत्र कुम्भस्नानदिवसे हरिद्वारे ब्रह्मकुण्डे प्रथमतो निरञ्जनानन्दाखड़ास्थसाधवः स्नास्यन्ति, ततः जुनाखड़ास्थसाधवः। ततो निर्वाण्याखड़ास्थसन्न्यासिनः। ततोऽन्ये सन्न्यासिनः। तत्पश्चात् वैष्णवाः साधव इत्यादि क्रमो विद्यते। प्रयागे अन्यथा क्रमः। एवं नासिके तथा

उज्जयिन्यां भिन्नो भिन्नः क्रमः। एकैकस्याम् आखड़ाख्यसंस्थायाम् आदौ कतिचित् नागासन्न्यासिनो गच्छन्ति, ततस्तत्तदाखड़ास्थमण्डलेश्वरस्वामी वाहकस्कन्दस्थदोलायां वा सिंहासने वा गजपृष्ठे वा गच्छति। गमनकाले मण्डलेश्वरस्वामिनः सर्वेभ्यो जनेभ्य आशिषं प्रयच्छन्ति। मण्डलेश्वरस्य पश्चात् कतिचिद् नागाख्यसन्न्यासिनः, ततोऽन्ये सन्न्यासिनो ब्रह्मचारिणश्च गच्छन्ति। एतेषां मध्ये इतरजनानां प्रवेशो नास्ति कथञ्चित्। मार्गस्योभयतः सर्वकाररक्षकैः स्थूलरज्जुधारणपूर्वकं यष्टिदण्डेन इतरान् जनान् वारयन्ति। एवमेकैकस्य आखड़ाख्यसंस्थानस्य साधवः श्रेणीशो गत्वा ब्रह्मकुण्डे स्नान्ति। तद्दाखाड़ास्थसाधूनां स्नानसमाप्त्यनन्तरमपराखड़ास्थसाधवः स्नान्ति। प्रत्यागमनमपि क्रमेण भवति। तत्तदाखड़ास्थसाधवः क्रमेण स्वस्वमठान् प्रत्यावर्तन्ते। केषुचित् पुस्तकेषु पठितम् [ सद्गुरुप्रसङ्ग इत्यादौ ] पूर्वमन्यथाचरणेन साधूनां परस्परं खण्डयुद्धम् अभूत्, येन गङ्गा रक्ताप्लुता अभवत्। इङ्गराजराजत्वकालात् सुशासनवशात् अधुनापि स्वाधीने भारते नियमनवशाच्च तादृशो हत्याकाण्डो नानुष्ठीयते। एवं च हरिद्वारे प्रथमतः स्नानं कश्चिदाखड़ाख्यसंस्थाश्रितानां साधूनाम्। प्रयागे च अपरेषाम्। एवं नासिके उज्जयिन्यां च एकैकस्याः संस्थायाः स्नानप्राथम्यम्। एतादृशस्नानक्रमश्च न शास्त्रानुसारी। परन्तु कदाचित् कियतः कालात् पूर्वस्मिन् काले तत्तत्सन्न्यासिनां बलप्रयोगमपेक्ष्यायं क्रमोऽधुना तादृशनियमान्तर्भूतो जात इत्यत्र नास्ति कश्चित् सन्देहः। एवं कुम्भयोगकाले तत्तदाखड़ास्थसन्न्यासिनः शिविरस्थापनं कृत्वा पुण्यार्थियात्रिणां कृते वासाहारादिव्यवस्थां कुर्वन्ति। शास्त्रप्रवचनं विष्ण्वादियागानुष्ठानं साधुभ्यो भोजनदानं च कुर्वन्ति। एतेषां व्ययभारनिर्वाहं खलु धनिनः कुर्वन्ति। एवं खलु श्रूयते—अस्मिन् वर्षे हरिद्वारकुम्भे अशीतिलक्षाणि पुण्यार्थिनः समाविशन्ति स्मेति।

अतिशयेन जनसम्मर्देन नराणां क्लेशः सञ्जातः। द्रव्यमूल्यानि च

चतुर्गुणिनानि पञ्चगुणितानि चाभवन्। तथापि पुण्यसञ्चयार्थमेव महत्-क्लेशासहिष्णवोऽपि भारतवर्षीयाश्चतसृभ्यो दिग्भ्य आगताः हरिद्वारे कुम्भेऽजस्रतया। हरिद्वारधाम्नि पञ्चसु स्थानेषु स्नानस्य विधानं कस्मिंश्चित् श्लोके दृश्यते। यथा—

"हरिद्वारे कुशावर्ते विल्वके नीलपर्वते।
कनखले (च) कृते स्नाने पुनर्जन्म न विद्यते॥"

अस्यापि श्लोकस्याकरस्थानं न प्रदत्तं तैस्तैः कुम्भयोगमाहात्म्यप्रकाशकैर्महोदयैः।

हरिद्वारे कुम्भयोगे षोड़ा स्नानं लिखितं कैलासपत्रे।

तत्र प्रथमस्नानं माघे मासि कृष्णत्रयोदश्यां वा शिवचतुर्दश्यां वा।

द्वितीयस्नानं च मधुकृष्णात्रयोदश्यां वारुणीयोगे।

तृतीयस्नानं चैत्रे अमावस्यायाम्।

चतुर्थस्नानं चैत्रे शुक्लप्रतिपत्तिथौ।

पञ्चमस्नानं रामनवम्याम्।

षष्ठस्नानं मेषसंक्रमणे। इदमेव मुख्यं स्नानमित्युक्तम्। विशुद्ध-सिद्धान्तपञ्चाङ्गे तु अन्यथा उक्तम्।—

प्रथमस्नानं शिवरात्रिदिने।

द्वितीयस्नानं महाविषुवसंक्रान्त्याम्।

तृतीयस्नानम् अक्षयतृतीयायाम्।

चतुर्थस्नानम् वैशाखे अमावास्यायाम्।

पञ्चमस्नानम् एकत्रिंशत्तमे वैशाखदिवसे संक्रान्त्याम्।

परन्तु एतत्स्नानदिवसविषयेऽपि केऽपि प्रमाणं नोपस्थापितवन्तः।

अस्मिन् वर्षे हरिद्वारे कुम्भयोगे वयमेकस्य महात्मनो दर्शनं लब्धवन्तः। तस्य नाम खलु देओयाहारीबाबाइत्ति। देओयाहारीनाम्नि ग्रामे तस्याश्रम इति कृत्वा तस्य संज्ञापि देओयाहारीबाबा इति।

नीलधाराया अपरपार्श्वे मृत्तिकाया कियतः स्तम्भान् निखाय तेषां स्तम्भानामुपरि मध्यभागतो वंशदण्डैः कञ्चिकातृणविशेषैश्च शून्ये कुटीरं निर्मितम्। तस्मिन् कुटीरे अन्तरेव महात्मा ध्यानादिकं समाचरति। प्रायशो घटिकात्रयानन्तरं ध्यानाद् व्युत्थाय उपरि एव स्थित्वा लोकेभ्यो दर्शनं तथाशिषं च प्रयच्छति। वाचं न विसृजति। कौपीनमात्रधारी स कदाचिद् वा नग्न एव तिष्ठति। लोकप्रवादात् श्रुतं तस्य वयो द्वाभ्यां शताभ्यामूर्ध्वमिति। दृष्ट्वा तु सप्ततेः किञ्चिदूर्ध्वमिति मन्यते स्म वयः। जनेभ्यो दर्शनं प्रदाय मतृह्यण्डीं निवेद्य प्रत्येकं प्रसादं यच्छति।

हरिद्वारस्थगङ्गायाः प्राच्यां दक्षिणस्यां च क्रोशद्वयात् परं चण्डीपाहाड़ इत्याख्यः कश्चित् पर्वतोऽस्ति। तस्य पर्वतस्य शिखरदेशे पश्चिमभागे चण्डिकामन्दिरे द्वितले चण्डिकादेवी विद्यते निम्ने च कालिकामूर्तिर्विद्यते। तत्र बहवो जना गत्वा पूजादिकं कुर्वन्ति।

पूर्वभागे च मन्दिरद्वयं विद्यते। अञ्जनामन्दिरं तथा हनुमन्मन्दिरम्। तत्रापि पूजादिकं क्रियते। एवं हरिद्वारस्थगङ्गायाः पश्चिमोत्तरयोः मनसापाहाड़ाख्यः पर्वतोऽस्ति। तत्र मनसादेवीमन्दिरम् अस्ति। मनसापाहाड़ाख्ये पर्वते चाधुना जनानां निवासः, मोटराख्ययानादीनां चलनम्, वैद्युतालोकपानीय- जलादीनां व्यवस्था च सन्ति।

यद्यपि अस्मिन् वर्षे हरिद्वारे कुम्भस्नानयोगे जनानां बहुतरः सम्मर्दोऽभूत् तथापि उत्तरप्रदेशसर्वकारतस्तन्नगरपरिष्करणादिव्यवस्था एतादृशी चमत्काराधायिका आसीत् येन मया कुत्रापि कदापि द्वित्रेभ्यो मुहुर्तेभ्य ऊर्ध्वम अपरिष्कृता भूमिः अपरिष्कृतं वा जलं नादृश्यत। एतादृशी व्यवस्था प्रशंसनीया अनुकरणीया चेति।

---

# विस्मितप्रायो वाराणसेयः संस्कृतज्ञः

[ निबन्धकः—श्रीप्रफुल्ल चन्द्र करः, बि. एस्. सि. ]

अस्ति वाराण्यस्याश्चौखाम्बापत्तने वित्तशाली सम्भ्रान्तश्च कश्चित् मित्रवंशः। आङ्गलदेशीयानां राजत्वकाले उत्तरभारतस्थानां कुलानां वंशानुक्रमिकं विवरणं रक्षितमासीत्। तेषामन्यतमद्धि मित्रकुलम्। बहूनि उपाध्युपढौकनादीनि राजसकाशादेभिरधिगतानि। 'ग्राण्ड-ट्राङ्क रोड' इत्याख्यवर्त्मनो विस्तारकर्मणि तथा च बहुषु जनहितकरकर्मसु दानमेतेषामुल्लेखम् अर्हति। रायप्रमदादासमित्रवाहादुरमहोदयः खलु परिवारस्य कृतिसन्तानानामन्यतमः। अतुलेन वैभवेन लालितः प्रमदादासः संस्कृत-भाषायां तथाङ्गलभाषायाञ्च पाण्डित्यमर्जितवान्। तत्प्रासादे विदुषामालोचनासभानुष्ठानं नियमिततया आसीत्। विश्रुतकीर्त्तयो विद्वांसस्तत् प्रति श्रद्दधाना आसन्। तस्माद्धेतोः अनुरुद्धे सति इङ्गराजराजेन महामहोपाध्यायइत्युपाधिग्रहणार्थं ससौजन्यं तत् प्रत्याख्यातवन्तस्तत्रभवन्तः। द्विजातय एव सम्माननामिमाम् अर्हन्तीति आसीत्तेषां मतिः। अथ रायवाहादुर इति राजा इति विरुद्धे तदानीन्तनकालादेव प्रचलिते। एवमेव विरुदभाजा 'राजा राजेन्द्रनाथ मित्र रोड'—नाम्ना वाराणसेय-राजपथो वर्त्तते अधुनापि।

अखण्डानन्दजीमहोदयानाम् आनुकूल्येन स्वामिविवेकानन्दस्तैः सह परिचितोऽभवत्। तत्कालादारभ्य स्वामिविवेकानन्दो बहुशस्तदावासं गतः, तत्समीपं तेनाधीतानि बहूनि शास्त्राणि तत्रैवावस्थाय। परवर्त्तिनि च काले यदा यदैव विवेकानन्दसमीपे सन्देहाकुलः शास्त्रार्थो जातस्तदा तदैव स्वामिजी प्रमदादासमहोदयानां सकाशात् शास्त्रार्थं स्पष्टतया विज्ञातवान्। विवेकानन्दजन्मशतवर्षपूर्त्तिमुपलक्ष्य तेषां वाणी रचनावली च

मुद्रापिता ; तासु प्रमदादासेभ्यो लिखितानि धारावाहिकत्वेन प्रायो द्वात्रिंशत् पत्राणि प्रकाशितानि।

"भवता गुणान् आकर्ण्य अस्माकं ब्राह्मणा गुरुभ्रातरोऽपि भवद्भ्यः साष्टाङ्गं प्रणिपतन्ति।........अनाहृतां मधुकोषात् मधु न विन्दति—अतो भवन्तं पुनरपि कति प्रश्नान् पृच्छामि—बालकमज्ञञ्च विज्ञाय मां तेषामुत्तरं दास्यति—मा रुष्टो भवतु।....के जाना-महोदयेन साकं किं मे हृदयस्य जन्मान्तरीणः संयोगोऽस्ति, नचेत्....महाशयेन एकदिवसीयालापेन प्राणा एतादृग् मुग्धाः सञ्जाताः यद् भवन्तमहं परमात्मीयरूपेण तथा च धर्म-बन्धुरूपेण गृहीतवानस्मि।"—पत्रांश, ४।७।१८८६

भारतेश्वर्य्याः भिक्टोरियाया राज्याभिषेकमुपलक्ष्य ( १८५८ ) आङ्गल-देशीया जातीया गीतिः संस्कृतेनानूदिता, प्रेरिता च। महतां सदसि सम्यक् समादरेण तद्घोषितम् आसीत्। तत्कृतायां रामकृष्णस्तुतौ वेदान्तज्ञानेन सह अपरिसीमा श्रद्धा भक्तिश्च लक्ष्यते। दार्शनिकपुस्तका-न्यपि रचितानि तेन। आङ्गलभाषामयो भगवद्गीतानुवादस्तस्य विशेषतः पाण्डित्यचिह्नमावहति। श्रीधरशङ्कराचार्यानन्दगिरिपादानां भाष्याणि तस्मिन्नुद्धृतानि युगपदेव च टीका, कलिकाताविश्वविद्यालयस्य शिष्ट-सभायाः ( सिनेट ) आसीदेकः सदस्यः सः। श्रूयते तत्पूर्वगेण आनन्द-मयेन मित्रालये दुर्गाकाल्यादीनां मृन्मय्यां प्रतिमायां पूजा सर्वप्राथम्येन उत्तरभारते प्रवर्त्तिता। अधुनापि उल्लेखमर्हति हिरण्मयभूषणैर्देवीसज्जा। शिक्षाव्रती धार्मिकश्च स गृहशोभावर्द्धनार्थं परिचारकाणां वेशेषु ओङ्कार-लक्षणां मुद्रां व्यवहृत्य स्वकीयमुरुचेः परिचितिं प्रायच्छत्।

शिवयोगिरचित "शिवक्रिया स्तोत्रम्, शिवानन्दसुधाधारा च" शिवधर्मा-वलम्बिनां भक्तानां हृदयनिर्गलिता सुधाधारा। अवलुप्तप्राया रचनासौ यथायथमुद्धृता :—

॥ श्री ॥

श्रीविश्वनाथः शरणम् ।

# अथ श्रीशिवानन्दसुधाधारा

नित्यभ्राजिष्णुधाम्नोऽप्यतिगतनयना-
द्यक्षमार्गस्य शम्भोः
लब्ध्वा तेजोऽणुमात्रं दिनकरप्रभृति-
ज्योतिषां कोटयोऽमूः ।
दीप्ताङ्गा नृत्यलीलासुकलितगतयो-
ऽनन्तआकाशमार्गे
ऐश्वर्याम्भोनिधौ ते सततकृतमनो-
मज्जना प्रोल्लसन्ति । १ ॥

कालप्रावृट्पयोदप्रविततगगने-
ऽस्तंगतादित्यचन्द्रे
गर्जत्पर्जन्यघोरध्वनिरथमथ सं-
रुह्य कालान्तकस्त्वम् ।
दुर्दर्शद्योतविद्युत्तरलिततरवा-
र्य्यर्चिरुद्द्योतहस्तो
विस्फूर्ज्जद्वज्रशस्त्रं क्षिपसि तनुभृतां
पापसन्त्रासनाय ॥ २ ॥

ध्यायाम्यैशं चरणयुगलं
सर्वदेवैकवन्द्यम्
उद्यत्त्र्यर्ध्द्युतितलमख-
ध्वान्तनाशैककार्य्यं ।

योगीन्द्राणां हृदयनभसि
द्योतमानश्च नित्यं
फुल्लीकुर्वन् प्रमदकिरणै-
श्चारुचेतः सरोजम् ॥ ३ ॥

ध्यायाम्यहं शिवपदाब्जविकासिचेता
नृत्याम्यहं हृदयकुञ्जनटन्महेशः ।
क्रीडाम्यहं हृदयपद्मविलासिशम्भु-
र्नन्दाम्यहं परशिवाध्युषितात्मगेहः ॥ ४ ॥

विश्वेशपादाम्बुजसन्निधाने
का वाऽस्तु वस्त्वन्तरकामना मे ।
हृदब्जकोशे चरणारविन्दं
शैवं निरुद्धं मम सर्वदाऽस्तु ॥ ५ ॥

श्रीविश्वनाथचरणाम्बुजसन्निधाने
किं काम्यतां किमु शुभं कमनीयमन्यत् ।
कामारिपादकमलं जितकामकाम्यं
कामं चकास्तु हृदये निहितान्यकामम् ॥ ६ ॥

नित्यानन्दस्य यद्धाम
तस्य धाम हृदम्बुजम् ।
कः शोको वसतः स्वान्तः
शिवे धाम्नि निरञ्जने ॥ ७ ॥

यस्मिन् मे कण्ठनादेन
शिवनामामृताक्षरम् ।
गीयते यतिवृन्देन
यामि धाम निरञ्जनम् ॥ ८ ॥

प्रविश प्राणमध्ये मे
प्राणप्राण सदाशिव ।
प्राणैः परिवृणोमि त्वां
प्राणनाथ क्व यास्यसि ॥ ६ ॥

शिवं धाम शिवो नाम
यस्य संकीर्तनं शिवम् ।
तं शिवं परमं ध्यायं
ध्यायं यामि शिवैकताम् ॥ १० ॥

ज्वलन्ति काशिका नाम
तनुः शैवी जयत्यहो ।
यत्र शैवीं तनुं याति
ज्वलन्ती जन्तुसन्ततिः ॥ ११ ॥

त्रैलोक्यस्य शिवोऽसि त्वं
शिव एकोऽसि मे हृदः ।
त्रैलोक्येनापि नार्थो मे
त्वत्पादाब्जे हृदि स्थिते ॥ १२ ॥

अनन्तभुवनाकाश-
व्यापिदीर्घकलेवर ।
हृदयाम्भोरुहे वस्तुं
किं न शक्नोषि मे विभो ॥ १३ ॥

अणीयानस्यणीयोभ्यो
महानसि महीयसाम् ।
आनन्दमयविज्ञान
सन्ततं हृदये वस ॥ १४ ॥

वस नाथ विश्वनाथ
वस मे हृदयाम्बुजे ।
मज्जाम्यानन्दसिन्धूर्म्मौ
आसीने त्वयि मे हृदि ॥ १५ ॥

शिवज्योतिर्मयी काशी
बहिरन्तः प्रकाशते ।
प्रज्वलास्यां सदा प्राण
शिवभूतिं यदीच्छसि ॥ १६ ॥

जाज्ज्वल्यस्व सदा जीव
विज्ञानज्ज्वलने शिवे ।
भस्मीकृतजगज्जाले
आनन्दामृतदीधितौ ॥ १७ ॥

निर्वाणतैजसव्यूहं
नित्योज्वलमहो महः ।
शिवाख्यं हृदयोल्लासि
विश्वध्वान्तं बिलापयेत् ॥ १८ ॥

विश्वस्यान्तर्बहिर्दीप्तं
विश्वपद्मविकाशकम् ।
विकासयतु हृत्पद्मं
ज्योतिषां ज्योतिरद्भुतम् ॥ १६ ॥

तदद्भुतमहो पद्म
शिवपादाभिध परम् ।
कदा स्वान्ते सरसि मे
सततं विकसिष्यति ॥ २० ॥

रक्ष रक्ष हृदम्भोजे
पादपद्मं तवाऽमलम् ।
यामि यामि परं मोदं
हृदये त्वां शिवं वहन् ॥ २१ ॥

पुर्णोऽस्मि शिवभावेन
शिवोन्मत्तः शिवार्पितः ।
नास्ति किञ्चित् शिवादन्यत्
शिवोऽस्म्यहं शिवोऽस्म्यहम् ॥ २२ ॥

अनन्तजीववृन्देषु
विभज्येव स्वलीलया ।
न वै विभज्यसे शम्भो
एक एवाऽस्यहो सदा ॥ २३ ॥

कोऽयन्ते बहुलीभावः
कैवल्येन समन्वितः ।
कथं क्रीडसि मुग्धेव
नित्यबुद्धः सदाशिवः ॥ २४ ॥

सुखदुःखमयी क्रीडा
केयन्ते भुवनाधिप ।
कथं भित्त्वा स्वतोऽन्यास्तान्
दुःखैर्योजयसे पुनः ॥ २५ ॥

नित्यानन्दसिन्धुमग्न
उपालम्भं शृणोषि किम् ।
उपालम्भोऽपि किं तेऽयं
क्रीडनं परमाद्भुतम् ॥ २६ ॥

आत्मन्येवात्मना तृप्यन्
द्वैतच्छायान्वितोऽपि सन्।
परमानन्दबोधोऽसि
न शोचसि न मुह्यसि ॥ २७ ॥

तन्मे नाशय पार्थक्यं
कैवल्ये मा निमज्जय।
अनन्ते परमानन्दे
परिपूर्णे सदाशिवे ॥ २८ ॥

त्वामेव केवलं ध्यायं-
स्त्वां गायं स्त्वामनुस्मरन्।
लीयेय त्वत् पदाम्भोजे
भजंस्त्वां परमं शिवम् ॥ २९ ॥

याहि याहि प्राण शीघ्रं
स्वीयनाथपदाम्बुजम्।
स्नाहि रे सततं तस्मिन्
नित्यानन्दसुधाह्रदे ॥ ३० ॥

शिवाख्यं परमं धाम
सोमसूर्यातिगप्रभम्।
दधानो हृदये धाम्नि
शिवधाम्नि चराम्यहम् ॥ ३१ ॥

* * *

# रम्भास्तम्भनम्

[ निबन्धकः—श्रीरवीन्द्रकुमार सिद्धान्तशास्त्री, पञ्चतीर्थः,
एम. ए., पि. आर. एस्। ]

अहो! विचित्रं देवानामाचरणं येन समुत्पादयन्ति ते विघ्नान् नियतमुक्ष्वाभिलाषिणां मुनीनां तपश्चर्य्यासु। निबध्यते साम्प्रतं तादृशस्यैव कस्यचिद् विघ्नस्य विवरणम्।

क्षत्रियकुले जातोऽपि गाधिनन्दनः कान्यकुब्जाधिपतिर्विश्वामित्रो महर्षे-र्वशिष्ठस्य लोकातीतं ब्रह्मवर्च्चसमालोक्य ब्राह्मणत्वं लब्धुमियेष। एतदर्थमेव राज्यमैश्वर्य्यञ्च विहाय मुनिवेशमाश्रित्य जगाम च तपश्चर्य्यायाम्। प्राग् दक्षिणदेशे कठोरां तपस्यामाचर्य तया च विपुलामृद्धिमाहृत्य सदम्भ-हृदयोऽसौ चण्डालरूपिणस्त्रिशङ्कोर्यज्ञे पौरोहित्यं कृत्वा स्वकीय-तपःप्रभावेण प्रेषयामास तं त्रिलोकम्। स्वर्गद्वाराच्च देवैर्निक्षिप्तः स त्रिशङ्कुः पुनरधस्तात्। विश्वामित्रस्तु स्वकीयतपःप्रभावेण मध्यलोके एव स्तम्भयामास पतनं त्रिशङ्कोर्विनिर्म्ममे च नवीनं लोकान्तरम्। तदनन्तरञ्च तपःप्रभावस्याप-प्रयोगेण पुनर्हीनतेजाः स नवीनामृद्धिमाहर्त्तुकामः पूर्वाश्रमं परित्यज्य जगाम पुण्यतीर्थं पुष्करं, तत्र च नवीनमाश्रमं निर्म्माय प्रवर्त्तते स्म तपसि। तदानीन्तस्य कठोरतरां तपश्चर्य्यामालोक्य शङ्किता बभूवुर्देवाः सुरलोके—किमसौ लप्स्यते सुरलोकस्याप्याधिपत्यमेतेन तपसेति। इत्थं विचिन्त्य पाकशासनपुरोगमाः सुराः अप्सरःश्रेष्ठां मेनकामाहूय जगदुः—"गच्छ त्वमधुनैव पुष्करं तीर्थं निवारय च विश्वामित्रं कठोरादस्मात्तपसो येन केनचिदुपायेन" इति।

इत्थमादिष्टा विबुधैः सुरविलासिनी मेनका दिव्यैराभरणैः सज्जीकृत्य सुरम्यमात्मनः शरीरं जगाम झटिति पुष्कराख्यं तीर्थं दृष्टिपथञ्चागता सा

विश्वामित्रस्य। न तु सञ्जातो विकारस्तदानीमपि मुनेस्तस्य चेतसि। एकदा विश्वामित्रस्य स्नानसमये सुरवाराङ्गनेयं स्नातुमगच्छत्तत्रैव पुष्कर-सलिले। विवसना च सा प्राविशत् सरित्तोयम्। तत्र च स्नानकाले गात्रमर्द्दनच्छलेन प्रदर्शयामास यौवनपुष्टानि सर्व्वाण्येवात्मनोऽङ्गानि मुनये। अहो! विचित्रः प्रभावः कन्दर्पकस्य। कठोरतपश्चर्य्यानिरतोऽपि मुनिर्लेभे तदानीं विकारं तदीये चेतसि। चिन्तयामास मुनिर्लब्धुं तां रूपवतीं पत्नीरूपेण। स्नानं सम्पाद्य वस्त्रालङ्कारादीनि च परिधाय तस्थौ मेनका स्रोतस्विन्यास्तटे। तदानीं तस्याः पुरतो गत्वा मदनातुरो विश्वामित्रः प्रकाशयामास स्वकीयमभिलाषम्। मेनका च सादरं स्वीचकार तदीयं प्रस्तावम्। मन्ये क्षत्रियकुलसम्भवतावशादेव विश्वामित्रस्य तिष्ठति स्म तादृशी चपलता तदीये चेतसि। ततः प्रभृति पत्नीरूपेण तां दिव्याप्सरसं गृहीत्वा दश वर्षाणि गार्हस्थ्यधर्म्ममपालयद् विश्वामित्रस्तत्रैव तीर्थाश्रमे। तदुक्तं वाल्मीकीये रामायणे—

"तस्यां वसन्त्यां वर्षाणि पञ्च पञ्च च राघव!
विश्वामित्राश्रमे सौम्य! सुखेन व्यतिचक्रमुः॥"

—बालकाण्डम् ( वरोदासंस्करणम् ) ६२।८

एतदनन्तरं समजायत सुबुद्धिः पुनर्विश्वामित्रस्य मनसि। चिन्तितवांश्च स—

सर्व्वं सुराणां कर्म्मैतत्तपोऽपहरणं महत्॥"

( ६२।१० ) इति।

ततस्तु मेनकां पुष्करतीर्थञ्च परित्यज्य द्रुतमधावद् विश्वामित्रः कौवेर्य्यां दिशि। तत्र च समासाद्य पवित्रां स्रोतस्विनीं कौशिकीं तस्या एव तटे स्थितिमलभत, प्रवृत्तश्च दारुणे तपसि। तदुक्तं रामायणे बालकाण्डे—

"कौशिकीतीरमासाद्य तपस्तेपे सुदारुणम्।" (६२।१४) इति।

वारद्वयं विलभ्य विपुलं विघ्नं स्वकीये तपसि लेभे विश्वामित्रो दूरदृष्टिं कृतवांश्च प्रतिज्ञाम्—इतः प्रभृति सर्व्वथैव परित्यक्ष्यति स रिपूणां प्रभावानिति। क्रमशो वृद्धिं गतायां तस्य तपश्चर्य्यायां लब्धासु च विभिन्नासु सिद्धिषु पुनर्लेभिरे भयं देवाः, चिन्तयाञ्चक्रुश्च विधातुं विघ्नोत्पत्तिं तदीयतपःप्रभावनाशाय। मिलिता बभूवुर्देवाः सुरपतेः सभायां कृतवन्तश्चालोचनमेतस्मिन् विषये। सम्यगालोच्य च स्थिरीचक्रुस्ते —प्रेषणीया दिव्याङ्गना रम्भा समुत्पादयितुं विघ्नं तपसि विश्वामित्रस्येति। समाहूता च सा दिव्याङ्गना सुरसभायां, तत्रैव च समादिष्टा गन्तुं तदानीमेव कौशिकीतटस्थितं विश्वामित्रस्याश्रमम्। तदुक्तं बालकाण्डे—

"रम्भामप्सरसं शक्रः सह सर्व्वैर्मरुद्गणैः।
उवाचात्महितं वाक्यमहितं कौशिकस्य च॥"

(६।२।२६) इति।

बुद्धिमती सा सुराङ्गना देवराजस्य तमादेशं श्रुत्वा सम्भावित-मुनिशापभयेन वेपमाना कृताञ्जलिरवदत्—"सम्भविष्यति मे सर्व्व-नाशस्तादृशकर्म्मणा; अतो मार्ज्जनीयाहं देवैः। करिष्यामि सर्व्वाण्येव कर्म्मान्तराणि देवैरादिष्टानि। मुनिशापविपत्तेस्तु रक्षन्तु मां त्रिदशाः" इति। देवास्तु जानन्ति स्म नासीत्तत्र किमप्युपायान्तरं तपःप्रभावसङ्कोच-साधकं विश्वामित्रस्येति। ततस्तु—

"तामुवाच सहस्राक्षो वेपमानां कृताञ्जलिम्।
मा भैषी रम्भे! भद्रन्ते कुरुष्व मम शासनम्॥
कोकिलो हृदयग्राही माधवे रुचिरद्रुमे।
अहं कन्दर्पसहितः स्थास्यामि तव पार्श्वतः॥
त्वं हि रूपं बहुगुणं कृत्वा परमभास्वरम्।
तमृषिं कौशिकं रम्भे! भेदयस्व तपस्विनम्॥

—बालकाण्डम् ६३।४-६

अनतिक्रमणीयो हि देवराजस्यादेश इति जानन्ती सा वराप्सराः सम्भावनीयं मुनिशापभयं तृणीकृत्य रुचिरैर्वस्त्रालङ्कारैः शोभयित्वात्मनो दिव्यदेहं हावैर्हेलाभिश्च जेतुकामा मुनेर्मानसं शनैः शनैरुपागच्छत् कौशिकीतटभूमिम्। समागतस्तदा चित्तविकारजनको वसन्तसमयः। तत्र च विश्वामित्राश्रमस्थिते नवपत्रशोभिते कुसुमिते वृक्षे कोकिलरूपमाश्रित्य तदानीमेव समागच्छत् पुरन्दरः। स च वृक्षशाखां समाश्रित्य चित्तहारकैः कुहूरवैर्यतते स्म पुनः पुनर्व्याकुलीकर्त्तुं विश्वामित्रस्य चित्तम्। इन्द्रादेशात् समागता अन्येऽपि वसन्तस्य सखायस्तदानीम्।

वारद्वयं विमोहितः तपःपरायणो विश्वामित्रो लेभे धैर्य्यमिदानीं ब्राह्मणसदृशम्। विजितवांश्च स चिराचरितेन तपसा चापल्यन्तस्य चित्तस्य क्षत्रकुलसमुत्पत्तिहेतुकम्। स्मृतवांश्च स शास्त्रवाक्यम्—

"ब्राह्मणस्य तु देहोऽयं क्षुद्रकामाय नेष्यते।
कष्टाय तपसे चैव प्रेत्यानन्तसुखाय च॥" इति।

त्रिलोकचित्तक्षोभकं शतपत्रनेत्रकटाक्षं पुनः पुनर्निक्षिप्य मुनेर्वदनमण्डले, हावैर्हेलाभिश्च व्यामोहयन्ती वायुमण्डलमपि समीपवर्त्तिनं पारिजातमाल्यसमुत्थितैश्चित्तहारकैः सुगन्धैः, केशसञ्चितसुवासिततैलनिःसारितैर्दिव्यानुलेपसञ्जातैश्च तैः सुगन्धीकृत्य समग्रमाश्रमपरिसरं मृदुपदविक्षेपैराजगाम दिव्ययौवना मनोरमाङ्गी रम्भा विश्वामित्रस्य पुरतः। मुनिस्तु क्षणं ध्यात्वा शशाक ज्ञातुं देवराजस्यैव कार्य्यमेतदिति।

नासीत्तदानीमपि विश्वामित्रो विजितरिपुः सर्व्वथा। यमिनां वरिष्ठो महामुनिश्चेदभविष्यदीदृशाक्रमणभूमिः, तदा मन्ये क्षमागुणेनैव समतोषयिष्यत् स देवानामपि चित्तम्। विश्वामित्रस्तु तदानीमपि अविजितक्रोधः शशाप रम्भां क्षुब्धचित्तः "पाषाणदेहं विलभ्य तिष्ठ दशसहस्रवर्षाणि

अत्रैवाश्रमे” इति। अलङ्घनीयः खलु जगति तपःसिद्धस्य मुनेः शापः। पलायन्ते स्म पुरन्दरादयस्तदानीं शापभयात्। भाग्यहीना तु रम्भा तथाभूतायामवस्थायामुपायान्तरमनालोक्य पपात मुनेश्चरणप्रान्ते प्रसादयामास च तं शापमोचनाय। दिव्याङ्गनाया नयनविगलितैरश्रुभिः सिक्ततामगच्छतां मुनेश्चरणौ। प्रसादितश्च विश्वामित्रः कोपं विहाय सस्नेहं सञ्चालयाञ्चक्रे स्वकीयं दक्षिणं हस्तं दिव्याङ्गनायाः शिरसि, समुच्चचार च वाक्यं शापमुक्तेरुपायसूचकम् “तपोबलसमन्वितस्य ब्राह्मणस्य स्पर्शेन पुनर्लप्स्यसे स्वकीयं रूपम्” इति। तथा च रामायणीयाः श्लोकाः—

“सहस्राक्षस्य तत् कर्म्म विज्ञाय मुनिपुङ्गवः।
रम्भां क्रोधसमाविष्टः शशाप कुशिकात्मजः॥
यन्मां लोभयसे रम्भे। कामक्रोधजयैषिणम्।
दशवर्षसहस्राणि शैली स्थास्यसि दुर्भगे।॥
ब्राह्मणः सुमहातेजास्तपोबलसमन्वितः।
उद्धरिष्यति रम्भे। त्वां मत्क्रोधकलुषीकृताम्॥”

—बालकाण्ड ६३।१०-१२

इत्थं शप्त्वा तां दिव्याङ्गनां समनुतप्तचेता मुनिस्तत्याज तत् स्थानं तत्क्षणादेव। रम्भा च मुनिशापमन्यथाकर्त्तुमक्षमा स्तम्भिता बभूव तत्र पाषाणदेहमाश्रित्य, तस्थौ च तेनैव रूपेण दशसहस्रवर्षाणि। अहो! प्रभावो मुनीनां तपश्चर्य्यायाः। अहो! निदारुणो दण्डो मुनिविमोहनचेष्टायाः।

# वेद्ध्यानम्

[ निबन्धकः—डक्टर श्रीविनोदविहारी दत्तः ]

आर्य्याणाम्, आधुनिक-परिभाषया हिन्दूनां दर्शनस्य धर्मस्य च योनिर्वेदः। अतो वेदविरुद्धं धर्मशास्त्रम् अग्राह्यम्। परमेश्वरः प्रतिकल्पं वेदेभ्यः अखिलं जगत् निर्ममे। वेदो ब्रह्म उच्यते। अतएव ब्रह्म वेदं परं ब्रह्म वा चरति यः स ब्रह्मचारी।

वेदः अपरा विद्या इति श्रूयते। परन्तु वेदे न केवलं परा विद्या ब्रह्मतत्त्वं वा परन्तु सृष्टितत्त्वं, देवतत्त्वं, साधनरहस्यम्, यज्ञ विधानं, मनस्तत्त्वं, समाजतत्त्वं, पुराणतत्त्वं, ज्योतिषम्, बहूनि इतराणि तत्त्वानि च आलोचितानि। मन्ये, वेदेभ्यः परं किमपि तत्त्वं नास्ति, परा विद्यापि नास्तीति।

कोऽसौ वेदः यस्य एतादृशं माहात्म्यम् ऋषिभिः उद्घोषितम्? चत्वारो वेदाः,—ऋक्, साम, यजुः अथर्व इति। यास्क-सायणादीनां भाष्येषु सत्स्वपि नैतावता वेदगौरवम् अवगम्यते। अतो वेदविदो विप्रा वदन्ति,—आरण्यकोपनिषद एव वेदाः, येषाम् एवंविधं गौरवम्। परन्तु उपनिषत्सु प्रधानतो ब्रह्मतत्त्वमेवालोचितम्, न तु सृष्टितत्त्वादिकम्।

अनुक्रमणिकाकारेण मन्त्राणां यज्ञेषु विनियोगाः प्रदर्शिताः, तेषाम् आध्यात्मिकाः अर्थाः सन्ति न वा इति इङ्गितेनापि न प्रकाशितम्, न च निरुक्तकारैः। आसीत् सायणाचार्य्यः असाधारणो वेदविद्यापारङ्गमः, महती च तस्य साधनसम्पत्। वेदरहस्योद्घाटनसमर्थोऽपि सायणाचार्य्यः स्व-भाष्येषु मुख्यतो यज्ञपरा व्याख्याः कृतवान्। क्वचित् क्वचित्तु आध्यात्मिकं व्याख्यानं व्याकृतं तेन। फलतः अचिन्तनीयवेदमाहात्म्ये शास्त्रेषु भूरिशः ख्यापितेऽपि तत्प्रतिपादकभाष्याभावाद् वेदानां मर्य्यादाहानिर्जाता। वेदः समुद्रः इति कथ्यते, यतो वेदेभ्यः सर्वाणि समुद्भवन्ति,

तेषाम् अर्थश्च मुद्रितः अर्थात् रहस्ययवनिकाच्छादितः। वस्तुतो मन्त्रा नित्या गुप्ता रहस्यवाण्यः उच्यन्ते। पूर्वसूरयो मन्त्राणां गुप्तरहस्यानि प्रज्ञानज्योतिषा न प्रकाशितवन्तः, परन्तु अपरा विद्येति कथनैः, यज्ञ-त्राणादिपरैः व्याख्यानैः, सर्पमन्त्रादिदर्शनैः मन्त्राणाम् आत्मानं यत्नेन गोपितवन्तः। एषा रहस्यविद्या एतत्कारणात् प्रायशो लोपं गता विस्मृतिं प्राप्ता च। गुरुमुखीयं वेदविद्या, साधनरहस्यं च सद्गुरोः ज्ञातव्यम्। परं तादृशो रहस्यविद् विप्रः सद्गुरुः अधुना दुर्लभः। साम्प्रतं सर्वे द्विजबन्धवः अर्थात् द्विज इति नामधारिणः। सुदूरवर्त्ति-पूर्वपुरुषेषु कश्चिन् सार्थकनामा द्विजः आसीत्, यो वेदरहस्यार्थविदो द्विजन्मनः सकाशाद् वेदरहस्ये दीक्षां प्राप्य द्वितीयं वेदजन्म लब्धवान्। भागवते स्पष्टमुक्तम्,—'स्त्रीशूद्रद्विजबन्धूना त्रयी न श्रुतिगोचरा'। अधुना अस्मदीयैः श्रवणैः श्रुतिवचनानि गृह्यन्ते, परन्तु न तेषाम् आध्यात्मिक-रहस्यार्थाः परिस्फुरन्ति नो हृदये।

सम्प्रति आधुनिक-वेदालोचनकर्तॄणां वेदार्थोद्भेदने कल्पना निर्व्वाधा जाताः। केचिद् वदन्ति,—मन्त्राः असभ्यमूर्खाणां केवलं निसर्गशक्तिपूजा-साधनाः। इन्द्रादयो देवाः सततं दृश्यमानाः चित्राः भीमा वा निसर्ग-शक्तयः, व्यक्तित्वं देवत्वञ्च तेष्वारोपितमेव। एतादृशीनां निसर्गदेवतानां तुष्टिविधानार्थम् एते मन्त्रा रचिताः। तेषु योजितानि कानिचित् अपक्वानि पुराणोपाख्यानानि, ज्योतिषिककल्पनानि, अन्त्यभागे च सन्ति कतिचित् मनस्तत्त्वात्मकाः सन्नीतिमूला वा मन्त्राः। अपरे भाषन्ते,— वेदमन्त्राः द्राविड़ेभ्यः ऋणवद् गृहीताः, ये द्राविड़ा वेदेषु बहुशः दस्यवः, अनिन्द्राः, वेदनिन्दकाः इत्येवं निन्दिताः।

सम्प्रति तुलनामूलकानि दर्शन-धर्मशास्त्र-पुरातत्त्व-भाषातत्त्वानि आविष्कृतानि। एतद्विदो मन्यन्ते,—वर्तमानकाले दृश्यमानानाम् असभ्य-जातीनाम् अवस्थातो मनुष्याणां द्रुततया क्रमविकाशः एव वेदेषु दृश्यते।

यद्येतत् सत्यम्, तदा एषा विचिकित्सा जायते,—कथं वेदो भुवि महत्तमस्य गभीरतमस्य च धर्मतत्त्वस्य उत सूक्ष्मतमस्य अध्यात्मतत्त्वस्य च योनिर्भवति। वत्सर-सहस्राणां साक्ष्यमिदं यत् ब्राह्मणोपनिषदां, तन्त्रपुराणानां षड्-दर्शनानाम्, ऋषि-योगिप्रोक्तानामुपदेशानां सत्यत्वं प्रामाण्यं च वेदमूलकम्। असति शून्ये सूक्ष्मतमदर्शनाध्यात्म-तत्त्वानाम् उद्भवः खपुष्पवत् प्रतिभाति। एवंविधा बहवः प्रश्ना जायन्ते, तेषाम् संशयातीतानि उत्तराणि न दृश्यन्ते।

वस्तुतः उपनिषत्सु यत् तत्त्वं स्पष्टीकृतम्, तदेव वेदेषु समाधिभाषया निहितम्। वेदोपनिषदोर्न वैषम्यम्, तात्त्विकम् अन्तरम्। एतत् तु यास्कसायणादिभिः पूर्वसूरिभिः 'सत्यधर्माय दृष्टये' न अपावृतम्, तथापि यास्कसायणादयो वेदार्थालोचने अध्वर्य्यवः, मार्गप्रदर्शकाः। अध्वर्य्युम् अवज्ञाय यज्ञशालां प्रवेष्टुं यथा न शक्यते, तथा भाष्यकारान् अनादृत्य ब्रह्ममन्दिरप्रवेशो न सम्भवति। तैः कृतानि शब्दानां निर्वचनानि अर्थान् च समादृत्य तेषां वचनादिव्यत्ययवादमङ्गीकृत्य वेदतीर्थे अवगाहनं कथञ्चित् सुकरं भवति। अशेषशास्त्र-दर्शन-साधन सम्पन्नेन महायोगिना मदीयेनाग्रजेन विद्यारण्यस्वामिना अनुज्ञातो मन्दमतिरयं लेखको व्यासं नमस्कृत्य, नमस्कृत्य च सायणाचार्य्यं तच्चरणचिह्नितेन मार्गेण विरचितवान् 'वेदार्थविनोदमि'त्यभिधम् ऋग्वेदस्य सम्पूर्णम् आध्यात्मिकं भाष्यं गूढ-वेदरहस्यप्रकाशकम्। साध्ये सिद्धौ सन्तः एव प्रमाणम्। शं नो बृहस्पतिर्दधातु।

मदीयभाष्यस्य निदर्शनमेकम् अत्र लिख्यते;—

योनिष्ट इन्द्र निषदे अकारि तमा नि षीद स्वानो नार्वा।
विमुच्या वयोऽवसायाश्वान् दोषा वस्तोर्वहीयसः प्रपित्वे॥

१।१०४ सू। १मः

सायणभाष्यम्—हे इन्द्र योनिः वेद्याख्यं स्थानं ते तव निषदे निषदनाय

उपवेशनाय अकारि कृतमस्माभिः प्रकल्पितमभूत्। तं योनिम् आनिषीद शीघ्रमागत्य तत्रोपविश। शीघ्रागमने दृष्टान्तः। स्वानो नार्वा। अर्वा इति अश्वनाम। यथाश्वः स्वानो ह्रेषाशब्दं कुर्वन् स्वकीयं स्थानं शीघ्रमागच्छति तद्वत्। किं कृत्वा। वयः अश्वबन्धनार्थान् रश्मीन् विमुच्य रथाद्विश्लिष्य तथा अश्वान् रथे योजितांश्च तुरगान् अवसाय विमुच्य। अत्र निरुक्तम्—'अवसायाश्वानिति स्यतिरुपसृष्टो विमोचने' इति। कीदृशान् अश्वान्? प्रपित्वे यागकाले प्राप्ते। 'प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते' इति यास्कः। दोषा रात्रौ वस्तोः अहनि च वहीयसः आदरातिशयेन वोढ़ॄन्॥

वेदार्थविनोदम्ः—हे इन्द्र, सर्वेश्वर, ते तव योनिः उत्पत्तिस्थानम् महद् ब्रह्म इति ख्यातं निषदे निषदनाय नितरां गतिहीनत्वाय क्रिया-हीनत्वाय अकारि कल्पितम् अभूत्। त्वमपि स्वानः स्वे अननवान्, आत्मना आत्मनि प्राणवान् गतिमान् परन्तु न अर्वा गतिशीलः सन् तम् योनिम् आ सम्यक् निषीद उपविश। बहुभवनात् प्राक् त्वमपि अचलं ब्रह्मस्वरूपम् आश्रित्य आसीः। सर्गेऽपि तव गतिः। तव क्रिया मायिका न तु परमार्थतः सत्या तव अव्ययस्वभावत्वात्। अत्र स्मर्तव्यम्—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया॥ इति (गीता)

वहीयसः विश्ववहनस्य प्रपित्वे काले प्राप्ते विश्वसर्गोन्मुखे काले दोषा रात्रौ प्रलये यद्वा मायावरणे अश्वान् व्याप्तिभावान् बहुभवनकामान् अवसाय तेषाम् अवसानं कृत्वा वस्तोः ज्योतिःप्रकाशे अहनि प्रकाश-काले सर्गे वयः गतिशीलान् भावान् विमुच्य गच्छसि। अथवा प्रपित्वे

तव सामीप्य-सायुज्य-प्राप्ति-समये वहीयसः वाहकान् मनोहारकान् अश्वान् इन्द्रियरूपान् दोषा दूषणेन, दोषमूलानि इन्द्रियाणि इति मत्वा अवसाय संयम्य वस्तोः प्रज्ञानज्योतिःप्रकाशे वयः प्राणान् संयतानि इन्द्रियाणि वा विमुच्य बन्धनमुक्ताः मायामुक्ताः भवन्तः गच्छन्ति।

अलमतिविस्तरेण। नमो विप्रेभ्यः।

# भक्तियोगः

[ निबन्धकः—श्रीविश्वेश्वर काव्यव्याकरणस्मृतितीर्थः ]

'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च'।

जातमात्रमेव जीवाः प्रकृतिं पश्यन्तस्तद्वशमायान्ति। रज्जुबद्ध-जीववत् प्रकृतिगुणबद्धैर्जीवैः प्रकृतावेव मनसो लग्नत्वादात्मतत्त्वं विस्मर्य्यते। दुःखमूलापातमधुरसुखेन प्रकृतिस्तद्गुणबद्धान् जीवान् सदैव भ्रामयति। न केवलं साधारणजीवा उत्तमजन्मगता मनुष्या अप्येतदा-कर्षणाकृष्टा बहून्यकरणीयानि कार्य्याणि कुर्व्वन्ति। एवं बहवो विद्वांसो वर्त्तन्ते येषां परोपदेश एव पाण्डित्यम्, तेऽपि सुखेन हृष्यन्ति स्वार्थसिद्ध्यै साधारणजीववद् भवन्ति च। एषैव सांसारिकी रीतिः।

एवमल्प एव लोका दृश्यन्ते ये ब्रह्म सत्यं जगन्मिथ्येति प्राकृतज्ञानार्थिन-स्तत्र यतमाना भवन्ति। प्रायेण सर्व्व एवाज्ञानान्धाः संसारिणः। एतेषां केचिदार्त्तिमुक्त्यै केचिद् वार्थप्राप्त्यै देवादीन् भजमानास्तात्कालिकीमार्त्तिं ह्रापयन्ति शान्तिरूप-तात्कालिकमनोरथमपि तदनुग्रहेण साधयन्ति च। किन्तु देवाश्रयेणापि तेषामार्त्तिश्चिराय न याति। अतएव परमार्थ-

मपि ते न लभन्ते। जन्ममृत्यू यथा तेषां सहचरौ रोगादिदुःखान्यपि तथा तेषां जन्मनि जन्मनि चिरसहायरूपेण तिष्ठन्ति। प्रारब्धकर्मफलभोगेन सह नवनव-कर्मोत्पत्त्या जन्ममृत्यू न निवर्तेत एव। सशरीरा अज्ञानाः प्रियाप्रियस्पर्शिनो भवन्ति। संसारो यथानादिः पापं पुण्यञ्च तथानादिनी। आ जन्मन एव न कश्चित् पापी भवति। जीवमनसि प्राक् पुण्यकर्मणि प्रवर्त्तमानेऽपि सहसा सेन्द्रियं तत्पापविद्धं भवति। देहादिष्वहंममेत्यादि-बुद्धिरेव जीवानां सुखदुःखकारणम्। देहादिष्वात्मबुद्धिहीनाः सशरीरा अपि अशरीराः शुद्धचित्ताङ्गना हृदि स्व-स्वरूपं विभुमात्मानं दृष्ट्वा चिराय सुखदुःखमुक्ता भवन्ति। अतएवोच्यते--

अशरीरं वाव शरीरेष्वनवस्थं
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ इति।

चिराय रोगमुक्तिः परमार्थलाभश्च ज्ञानेनैवाप्येयाताम्, किन्तु स मार्गो यथा दुर्गमस्तथा तल्लाभोऽपि सुदुष्करः।

उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत।
क्षुरस्य धारा निशिता दुरत्यया।
दुर्गं पथस्तत् कवयो वदन्ति ॥ इति कठः ॥

दुष्करत्वेऽपि तस्य तत्प्राप्त्यै बहव उपायाः सन्ति। दुष्करा अपि ते न सुदुष्कराः। भक्तिस्तेष्वेकतम उपायः। अनेनैव पथानेके ज्ञानं लभन्ते। ज्ञानिनो भक्तस्य मुक्तिः सुगमा। गीतायां भगवताप्युच्यते—

एवं सततयुक्ता ये भक्ता मां पर्य्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ इति,
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥ इति च ।

सकामा सगुणा भक्तिर्निष्कामा निर्गुणा भक्तिश्चेति भक्तिर्द्विधा। तत्र येषु सगुणा सकामा भक्तिस्ते प्रतीकोपासनावद् ब्रह्मबुद्ध्या लौकिकं किमपि भजन्ते। व्योमवत् आकाशस्थनित्यवस्तुवच्च ब्रह्म सर्व्वत्र वर्त्तते। यावत्

सर्व्वभूतस्थं तत् स्वात्मनि न दृश्येत तावज् ज्ञानलाभोपायेन भक्तिमार्गेण प्रतिमादिषु सगुणं सोपाधिकं तत् पूजनीयम्। गीतायामप्येवमेव कथ्यते—

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥ इति।

अतः सकामस्य सगुणा भक्तिर्विहिता। ज्ञानलिप्सुषु तल्लाभोपायानां निष्कामभक्तिरेक उपायः। अत्रापि गीतायामुच्यते—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते।
सर्व्वत्रगमचिन्त्यञ्च कूटस्थमचलं ध्रुवम्॥
संनियम्येन्द्रियग्रामं सर्व्वत्र समबुद्धयः।
ते प्राप्नुवन्ति मामेव सर्व्वभूतहिते रताः॥ इति।

नारदेन सा कस्मैचित् प्रेमरूपा इति भक्तिलक्षणं कृतम्। यत्र तत्र भगवत्-कथा-श्रवणेन सदा तल्लीलाचिन्तनेन ईश्वरार्थक-कर्मणा च निष्कामस्य तद्भावमयस्य क्रमेण संसारान्मनो निवर्त्तते वैराग्यं च जायते। भागवतेऽप्येवमेवोच्यते—

अतएव शनैश्चित्तं प्रसक्तमसतां पथि।
तीव्रेण भक्तियोगेन विरक्त्या च नयेद् वशम्॥ इति,
तीव्रेण भक्तियोगेन मनो यस्यार्पितं स्थिरम्॥ इति च।

भगवत्येवं निश्चलं चित्तं हि वेदान्तस्य निदिध्यासनमेव, निदिध्यासनं यथा श्रवणमननयोः फलम्, भगवत्येवं निश्चलं चित्तमपि तथैव निष्कामभक्तेः फलम्। तन्मना भक्तस्तत्सेवयात्मानं कृतार्थं मन्यते। उपासनायां यथोपास्योपासकरूपपक्षद्वयं वर्त्तते भक्त्यामपि तथैव भजनीय-भक्तभेदेन पक्षद्वयम्। भजनीयं सगुणं ब्रह्म एकः पक्षः भक्तोऽपरः पक्षः।

भक्तिमार्गो ज्ञानमार्गात् पृथक्। उपासनावदत्र विचारस्थानं नास्ति। उपासनाया भक्तेश्च मूलं श्रद्धा। अत्रोच्यते भागवते—

श्रद्धा मातेव कल्याणी योगिनां सततं भवेत्। इति,
न युज्यमानया भक्त्या भगवत्यखिलात्मनि।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये॥ इति च।

निर्गुणभक्तिरुच्चतरोपासनाया न पृथक्। यद्यपि ब्रह्म निर्गुणं निरुपाधिकञ्च तथापि गुणविशिष्टरूपेण रूपविशिष्टरूपेण च ब्रह्मैव यत्रोपास्यते तत्र सा उपासना ब्रह्मोपासना। गुणो रूपञ्च तस्योपाधिवत्। ते तु न स्वरूपतः। एवं निष्कामस्य भक्तस्य निर्गुणभक्तौ भजनीयं ब्रह्मैव लक्ष्यम्। न गुणो लक्ष्यो न रूपं वा लक्ष्यम्। निष्कामभक्त्या ज्ञानं तस्मान्मुक्तिः।

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च।
अशुद्धं कामसंयुक्तं शुद्धं कामविवर्जितम्॥ इति ब्रह्मविन्दुः।

स्वच्छे दर्पणे मुखप्रतिविम्बवत् शुद्धमनसि निर्गुणा भक्तिः प्रकाशते। प्रकाशमानायां निर्गुणभक्तौ भगवद्गुणावलि-श्रवणमात्रेणैव सर्व्वभूतहृत्स्थे भगवति चित्तवृत्तिः समुद्रे पतद्गविरलगङ्गाप्रवाहवद् भेददर्शनशून्या अव्यवहिता अहेतुकी अविच्छिन्ना च भवति।

सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि।
संपश्यन् ब्रह्म परमं याति नास्त्यत्र संशयः॥ इति गीता।
यस्तु सर्व्वाणि भूतानि आत्मन्येवानुपश्यति।
सर्व्वभूतेषु चात्मानं ततो न विजुगुप्सते॥ इति ईशः।

उपासनाया यथा चित्तैकाग्रता, तस्याः समाधिस्तस्मान्मुक्तिस्तथा निष्कामभक्त्या प्रेमा, तस्मान्मुक्तिः। अतएवोपासनावद् भक्तिरपि न साक्षान्मुक्त्युपायः। अद्वैतभावाद् यथा मुक्तिर्भजनीयो भक्तश्चेति द्वैतभावादपि तथैव मुक्तिरिति केषाञ्चिन्मतम्। तत्तु न युक्तियुक्तम्। तथाहि यद्यपि

जीवः स्वरूपतो ब्रह्म न स्यात् तथापि केवलभावनया स्वरूपपरिवर्त्तनेन ब्रह्म भवेदिति न युक्त्या युज्यते। यदा जीवो निर्मोकमुक्तसर्पवदज्ञानमुक्तो भवेत् तदैव स परमात्मना संगच्छेत। यतः परमात्मानमृते सर्व्वं विनाशि (कार्य्यम्), अतएव ब्रह्मभिन्नस्याविनश्वरा मुक्तिर्न सम्भवति। द्वैतज्ञाने निवृत्ते जीवस्य जीवत्वं न तिष्ठति। तदा जीव एव ब्रह्म। केवल-भावनया अज्ञानं न निवर्तेत। सर्पभ्रमे जाते नायं सर्प इति पुनः पुन-र्भावनयापि सर्पभ्रमो न निवर्तते रज्जौ सर्पभीतस्य पुनर्यदा रज्जुज्ञानं भवति तदैव सर्पभ्रमोऽपयाति। प्रेम्णि अद्वैतानुभूतिर्भवतीत्येकेषां मतम्, तदपि युक्त्या न युज्यते, प्रेमास्पदेन सह द्वैतव्यवहारस्य दृष्टत्वात् तद-द्वैताभासमात्रमेव। अतएव भक्तिर्न मुक्तेः साक्षात् कारणम्। भक्तेः परिणतिरात्मसमाधिरूपं प्रेमा। गीतायां भक्तिमान् ज्ञानी जन उत्तमज्ञानीति कथ्यते—

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्ज्जुन
आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ।।
उदाराः सर्व्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम्।। इति।

यद्यपि ब्रह्म देशकालादीनां लयेऽपि लयहीनं नित्यम्, चिरभास्वरं ज्ञानमयं मृद्विकारे मृद्वत् तन्तुविकारे तन्तुवत् स्वर्णविकारे स्वर्णवच्चानन्तम्, अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवत् किञ्च अनाद्य-नन्तं महतः परं ध्रुवञ्च; तथापि साधकानुग्रहाय परमेश्वरः स्वेच्छया मायामयो भवतीति श्रीमच्छङ्कराचार्य्येणापि स्वीक्रियते।

परमेश्वरं ज्ञात्वा भक्तो मोक्षं लभतामित्याशयेनारूपोऽपि स सरूपः। यतो मयैवं विचित्रा मायासृष्टास्तत एव त्वयाहंज्ञाने दृश्ये च अन्यथा। त्वयाहमज्ञेयोऽदृश्यश्च इति नारदं प्रति भगवदुक्तिर्दृश्यते। ब्रह्मणो रूपादीनि

सकामसाधकानां फलप्राप्त्यै सहायकानि। उपासकाना भक्तानां मनोवाञ्छापूरणायारूपः पूर्णकामो निर्गुणश्च परमात्मा क्वचिन् मातृरूपेण क्वचित् सखिरूपेण क्वचित् प्रभुरूपादिना चाविर्भूय उपासकानां भक्तानां मनोवाञ्छा पूरयति। परमात्मा उपासनया भक्त्या च सन्तुष्टो मातृरूपेण सुरथाय राज्यं समाधये च ज्ञानं दत्तवान्, नरसिंहरूपेण प्रह्लादपितरं हिरण्यकशिपुं हत्वा प्रह्लादं ररक्ष च एवमेव बहून्यूदाहरणानि दृश्यन्ते।

## यज्ज्योतिषां ज्योतिरुत्तमम्

[ निबन्धकः—श्रीइन्द्रमोहन चक्रवर्त्ती ]

प्रवाति वायुः प्रभञ्जनवेगेन मध्यरात्रात्। अविरलं पतति च वृष्टिधाराभिः, कदापि विन्दुभिर्वा। आसीनोऽहं गृहे रुद्धद्वारे। न पश्यामि बहिर्जगत्, प्रकृतेर्लीलाञ्च। न पश्यामि सूर्यं वा। भवतु तावत्। बहिर्नभसि राजते यः सूर्यस्तदन्तर्गतं यज्ज्योतिषां ज्योतिरुत्तमं तदेतु मे हृदि। तदनुभवामि सर्वेन्द्रियैः, अनुभवामि कायमनोवाग्भिः, पश्याम्यन्तर्दृशा। उन्मोचयामि सर्वाण्यावरणानि। आयत् तज् ज्ञापयामि स्वागतम्, ज्ञापयामि सुस्वागतम्। तत् तिष्ठतु मे हृदि चिराय, प्रेमाग्निरूपेण प्रेमवह्निरूपेण च। तस्याग्नेर्वह्निरूपिणो भवतु विस्तारः प्रतिलोकम्। अनुभवामि वैश्वानरैकात्म्यम्।

# सम्पादक-निवेदनम्

मान्यमान्या वाचकमहाभागाः, इत ऊर्ध्वं सप्तपञ्चाशत्तमे वर्षे संस्कृत साहित्य-परिषदो मुखपत्ररूपा संस्कृत-साहित्य-परिषन्नाम्नी मासिकी पत्रिका प्रतिष्ठामुपगता सुदीर्घं कालं यावत् संस्कृतभाषारसिकानां भवतां सेवायामात्मानं योजयन्ती वर्त्तते। मन्ये न केवलं वङ्गेषु परमशेषे भारते वर्षेऽपि एवंभूता प्राचीना पत्रिका विरलप्रायैव •प्रचलद्रूपासु संस्कृत-पत्रिकासु। एतत्कालाभ्यन्तरे कति वा पत्रपत्रिकाः साप्ताहिक्यः पाक्षिक्यो मासिक्यस्त्रैमासिक्यः षाण्मासिक्यश्च सहसा पत्रिकाजगति स्वकीयमाविर्भावं सूचयन्त्यः सौदामिन्य इव क्षणात् कालकवलमुपगता वर्त्तन्त इति विदितमेव सर्वेषां विद्यावतां भवताम्। द्वितीयमहायुद्धात् प्रागस्याः परिषत्पत्रिकायाः कलेवरः परिपुष्ट एवासीत्। परं प्रचलति तस्मिन् महासमरे कागदानां सर्वकारैर्नियन्त्रिततया सोऽयं कलेवरो ह्रास-मुपेत्य साकल्येन चतुर्विंशतिपत्रात्मकः समपद्यत। अथ युद्धावसानात् परमस्माकमाशावर्त्तत,—पत्रिकामिमां पुरातनीं तनूं प्रापयितुम्। किन्तु दुर्दैववशाद् दैनन्दिनकार्य्यपरिचालनव्यापारे क्रमेण वस्तुजातस्य दुर्मूल्यतया वस्तुगत्याद्य श्वो वैतत् करणीयमित्येवं बुद्ध्या कालं यापयता-मस्माकमजनि सुप्रभातमेकस्मिन् दिवसे, यदा भारतवर्षं स्वाधीनतामुपगत-मभूत्।

ततः स्वाधीनेऽस्मिन् भारते सर्वेषां वस्तूनां सुलभतायां मनोगतं कर्मेदं सुकरं भविष्यतीति मत्वा समुत्फुल्लहृदया वयमभूम। श्वः करणीयमेतदिति चिन्तया चावसरमनुसन्धित्सवो नानाबाधाविपत्तीरतिक्रम्य साम्प्रतिके काले करिष्याम एतदिति मनोगतामाशामुद्वहन्तो वयमितो भाविनं कालमन्धकारसमाच्छन्नमिवालोकयामः। यतो वर्त्तमाने न केवलं

कागदानां परं सर्वेषामेव वस्तूना विशेषतो नित्यप्रयोजनीयानां महामूल्यता सुदुर्लभता च जगदिदमाकुलीकृतवत्येव। ततश्चिन्तयामो 'मातुलाभावात् काणोऽपि मातुलः श्रेयानि'ति प्रवादविशेषम्। इदानीमियं चिन्ता नश्चेतः समाकुलयति नियतं यत्, भाविनि काले सेयमतिप्रियतमा संस्कृत-साहित्य-परिषत् पत्रिका वः करकिशलयानलं कर्त्तुं शक्ष्यति नवेति। यदि वा कथञ्चिद् भवतीं सेवायामात्मनियोगं कुर्य्यात्, तदा कलेवरदिशा मूल्यदिशा च कीदृग्रूपेयं भवेदिति चिन्तनीयमेव। अधुनापि चतुर्विंशति-पत्रपरिमाणेयं प्रतिमासमेकरूप्यकमूल्या वर्त्तते। परमायत्यां कागदानां मुद्रापणविधेश्चास्वाभाविक्या मूल्यवृद्ध्या न केवलमस्याः शरीरं परं मूल्यमपि परिवर्त्तनमपेक्षेत एव।

अथवा यथा तथैव भवतु। वयमाशास्महे,—चिरसेविनीयं पत्रिका प्रणयिनीव भवतां कदापि कथमपि प्रीतेरभावं न जनयिष्यतीति शम्।

---

## पत्रिकायाः पञ्जीकरणार्थं प्रदत्तघोषणापत्रस्य प्रयोजनीयांशाः

१। (क) नाम--"संस्कृत-साहित्य-परिषत्"

(ख) अवस्थानम्—१६८।१ राजा दीनेन्द्र ष्ट्रीट् कलिकाता-४।

२। भाषा —संस्कृतम्।

३। वर्षम्, अन्तःकालविभागश्च—बङ्गीयाब्दः। प्रति सौरमासम्।

४। (क) सम्पादकः—अध्यापक श्रीरामधनशास्त्री।

(ख) अवस्थानम्—१६८।१ राजा दीनेन्द्र ष्ट्रीट् कलिकाता-४।

५। (क) मुद्रापकप्रकाशकः—श्रीश्यामापद भट्टाचार्य्यः।

(ख) अवस्थानम्—१६८।१ राजा दीनेन्द्र ष्ट्रीट् कलिकाता-४।

६। (क) स्वत्वाधिकारी—'संस्कृत-साहित्य-परिषत्' नाम्नी सर्वकार· स्वीकृता समितिः।

(ख) अवस्थानम्—१६८।१ राजा दीनेन्द्र ष्ट्रीट् कलिकाता-४।

७। (क) मुद्रायन्त्रम्—अरुणिमा प्रिन्टिं वर्कस्

(ख) अवस्थानम्—८१ सिमला ष्ट्रीट् कलिकाता-६।

१५।६।७१ दिवसीया पञ्जीकरणसंख्या—२५५।७१

स्वाक्षरम्—चीफ प्रेसिडेन्सी म्याजिष्ट्रेट्
कलिकाता

उल्लिखित विवरणम् सत्यम्
श्रीश्यामापद भट्टाचार्य्य.